# संस्कृत कथा कुञ्जम्

लेखक

पं० गणेशराम शर्मा

राजस्थान साहित्य अकादमी ( संगम ),

उदयपुर

प्रकाशक
निदेशक
राजस्थान साहित्य अकादमी ( संगम ),
उदयपुर

प्रथम संस्करण ११०० प्रतियां
अगस्त, १९७२
मूल्य—नौ रुपया मात्र

मुद्रक
वैदिक यन्त्रालय
केसरगंज,
अजमेर

# प्रकाशकीय

राजस्थान साहित्य अकादमी (संगम), उदयपुर प्रदेश के हिन्दी, राजस्थानी, संस्कृत और उर्दू के सृजनधर्मी साहित्यकारों की मौलिक कृतियों के प्रकाशन का कार्य अनवरत रूप से कर रही है। हिन्दी और राजस्थानी लेखकों की कई कृतियां एवं संकलनादि अकादमी द्वारा प्रकाशित किये जा चुके हैं। संस्कृत और उर्दू भाषा के लेखकों की रचनाओं के संकलन भी अकादमी ने प्रकाशित किये हैं।

प्रदेश के बीस संस्कृत साहित्यकारों की रचनाओं का एक संकलन अकादमी द्वारा सन् १९६५ में प्रकाशित किया गया था। उसके बाद संस्कृत भाषा की कोई कृति अकादमी द्वारा प्रकाशित नहीं की जा सकी। हमें यह सूचना देते हुए हर्ष है कि इस वर्ष संस्कृत भाषा की कतिपय मौलिक कृतियां अकादमी द्वारा प्रकाशित की जा रही है। उस शृंखला में पं० गणेशराम शर्मा की कृति 'संस्कृत कथा कुञ्जम्' प्रथम प्रकाशन है।

प्रस्तुत पुस्तक प्रदेश के संस्कृत भाषा के सुप्रसिद्ध लेखक पं० गणेशराम शर्मा की मौलिक कथाओं का संकलन है। आशा है, अकादमी के इस नवीन प्रकाशन का संस्कृत साहित्य जगत में सर्वत्र स्वागत होगा।

डा० देवालाल पालीवाल
निदेशक
राजस्थान साहित्य अकादमी ( संगम ),
उदयपुर

# संस्कृतकथाकुञ्जम्

विषयानुक्रमः पृष्ठम्

# सिद्धो रासायनिकः

आसीत् स खलु सिद्धो रासायनिकः। तस्य प्रतिभा सर्वतोमुखी, सर्वजन-चेतश्चमत्कारिणी, विद्वन्मनोहारिणी च बभूव। स किलायुर्वेदसंहितासु, नाडीश्वासपरीक्षासु, रसौषधितन्त्रेषु, निदाने, चिकित्सायां च सर्वतन्त्रस्वतन्त्रं किमपि लोकातिशायिप्रावीण्यं दधौ। न केवलमयं प्राणाचार्यो वद्यराडेवावर्तता-पितु व्याकरणे, न्याये, साहित्ये, सर्वेष्वपि दर्शनशास्त्रेषु, कर्मकाण्डे, ज्योतिर्वि-ज्ञानादिषु, वेदवेदान्तधर्मशास्त्रेषु, निखिलवाङ्मयप्रपञ्चेषु, पुराणमहाभारतादिषु चेतिवृत्तप्रकरणेषु, संस्कृतेतरासु ग्रीक-शर्मण्यपारसीकांग्लारबीयादिषु नानाभाषासु तथाऽन्यान्यासु विद्यासु च कामप्यपूर्वामिवानन्यसुलभां प्रौढां व्युत्पत्तिं समाससाद। सर्वतोऽधिकं तस्य मनीषा काव्यनिर्माणे प्रस्फुरति स्म। तस्य काव्यरचना-कौशलमनल्पकल्पनास्पृगतीव रमणीयं सहृदयचेतोहरं चाऽभूत्। विविधविद्या-पारावारपारीणः सकलकलाकलापकुशलश्च सोऽयं महानुभावः प्रत्युत्पन्नमतित्व-माशुकवित्वं शतावधाननैपुणीं सङ्गीताचार्यत्वं चित्रालेखनपटुतां च दधार।

इत्थं सः स्वयं प्रौढवत्तरं प्रकृष्टं पाण्डित्यं वहन्नपि सरलसरसहृदयो हास्यालापप्रियो, वाक्पतिरिव वावदूकानां प्रचण्डाखर्वगर्वभेत्ता प्रगल्भवागपि च प्रखरतरधाराप्रवाहमुत्तरोत्तरयुक्तिपुरस्सरमतिकर्कशतर्ककठोरं सशास्त्रप्रमाणं प्रव-क्तापि च बालवत् सरलस्वभावो विनोदप्रियो गोष्ठीरसपरिषदां स्वयं व्रतो-ऽधिकारी सम्मान्यः सभापतिरभूत्। प्राप्तकालं तत्प्रतिभाप्रकर्षं सुस्फीतं साक्षात् कुर्वाणाः सुप्रतिष्ठिताः नागरिकाः शिक्षिता दीक्षिताः सुसंस्कृताः कुलीनाः सभ्याः शिष्टाश्च सामाजिका आश्चर्यचकिता इव तद्वाङ्मयसुधामाधुरीमास्वादयन्तो ब्रह्मानन्दसहोदरं लोकोत्तरमपूर्वं रसं कर्णपुटैः पेपीयमानास्तमनुरज्यन्ते स्म। न क्वापि सभा, परिषत्, सम्मेलनं, महोत्सवो, विद्वद्गोष्ठी, समितिर्विद्याविनोदाधि-वेशनानि च तं विना साफल्यायाकल्पन्त। इमे सर्वे गुणास्तं विद्वज्जनमूर्द्धन्यं स्वाभिधानधन्यं सर्वेषां वरेण्यं शरण्यं च प्रामाणयन्। लोकास्तं श्रीधरमहाराजा-ख्यया सार्वभौमं पर्यचिन्वन्।

आयुर्वेदे तु तत्प्रावीण्यं मनोवाचामगोचरमिवाभूत्। यो हि रुग्णो प्राक्तनैर्वैद्यैर्यवनचिकित्सकैरसाध्यो दुस्साध्यो वा समुद्घोष्य परित्यक्तः स तमाश्रित्य नवजीवनं लेभे। करुणार्द्रहृदयोऽयं श्रीधरमहाराजो दीनानातुरान् ममत्वपूर्णेन

हृदयेन, दयाभावेन, महद्भिः प्रयत्नैश्च चिकित्सते स्म। निर्धनानामसहायानाम-शरणानामगतिकानां दीनानामनाथानां च कृते निखिलामपि चौषधिव्यवस्थां, पथ्यं, शयनासननिवासप्रबन्धं च सर्वं स्वधनेन स्वकीय एव तत्त्वाधाने स्वयमेवा-करोत्। एवं मुक्तहस्तं धनव्ययं कुर्वतस्तस्यार्थिकीं स्थितिं, लोकव्यवहारसक्षमत्वं, सम्पदं वा यथार्थतोऽनुमातुमिहमित्थं न कोऽपि प्रबभूव। स चातुरेभ्योऽन्येभ्यश्च न किमपि द्रव्यं प्रतिजग्राह, न च शासकेभ्यः पदाधिकारिभ्यो धनिकेभ्यो वाऽन्येभ्यो दानदक्षिणादिकं स्वीचकार। नगरेभ्यो ग्रामेभ्यो वाऽन्यस्थानेभ्यः समागताः शतशोऽथ सहस्रशश्चातुरास्तद्गृहाङ्गणं प्राप्य परां सान्त्वनामापुः। औषधादिकं निर्मूल्यं सेवमाना रुग्णाः स्वल्पेनैव कालेन नीरोगाः स्वस्थाः प्रसन्ना हृष्टपुष्टाङ्गाः स्वगृहान् प्रतिजग्मुः। एवं वर्तमानस्य तस्य श्रीधरमहाराजस्य विद्यावैभववैजयन्ती सर्वतोदिक् कीर्तिकौमुदीं सार्वभौमं वितेने। सर्वसाधारणलोकाश्चापि तद्यशोगानं चक्रुः।

अथैकदा वयं तद्दर्शनार्थिनो जिज्ञासवः केचनाभिन्नहृदयाः सुहृदोऽतिथि-त्वेन श्रीधरमहाराजस्य गृहं गताः। तद्गृहदेहलीं प्राप्य यावद्वयमपश्याम तावत्तस्य भवनप्राङ्गणेऽनेके रुग्णाः कुष्ठापस्मारक्षयरोगाक्रान्तास्तमेव प्रतीक्ष-माणास्तदाश्रयास्तन्मनस्कास्तद्गतप्राणास्तद्गतयश्च तत्रास्माभिर्दृष्टाः। तद्भवनं सुविशालं बहु हर्म्यचित्रशालं सप्तखण्डात्मकं यानवाहनोपकरणैर्धनधान्यविभवैश्च सर्वतः सम्पन्नमिवादृश्यतास्माभिः। तत्र प्राङ्गणलग्ने प्रथमखण्डे स्वयंसेवकत्वेन सवृत्तिकभृत्यत्वेन च नियुक्ताः केचन भद्रजना रोगिणां कल्याणीं सेवां सपर्यां च विदधतोऽवालोक्यन्त। गृहाङ्गणं परितः आतुराणामावासकक्षास्वनेके कुष्ठा-पस्मारक्षयश्वासजीर्णज्वरादिरोगाक्रान्ताश्चिकित्सार्थं तं श्रीधरमहाराजं प्रतीक्ष-माणाः सोत्कण्ठास्तदाश्रयास्तन्मनस्कास्तद्गतप्राणास्तमेव सतृष्णं चिन्तयाना अस्माभिर्दृष्टाः। यदा वयं तद्भवनद्वारदेशं प्राप्तास्तदा श्रीधरमहाराजस्य द्वौ शिष्यौ सादरमाभाष्यागमनप्रयोजनं पपृच्छतुरस्मान् भवनस्य चतुर्थे मध्यखण्डे वर्तमानामेकां भव्यां सुस्फीतां सुसज्जितां च चन्द्रशालामनयताम्। सङ्केतैस्तत्रा-स्तृतान्यासनानि प्रदर्श्य, किञ्चित्कालं प्रतीक्षणायावेद्यास्मभ्यं तौ द्वावपि शिष्यौ क्वचिदन्यतो जग्मतुः। तस्य विद्वत्प्रवरस्यागमनं प्रतीक्षमाणा वयं तां चन्द्रशाला-मध्यासीना इतस्ततो यावत् पश्यामस्तावत्तदन्तर्निहितान् नानाविधान् सुखोप-भोग्यवैभवसम्भारान् राजोचितान् यथास्थानं सविधिचातुर्येण क्रमशः संस्था-पितान् दर्शं-दर्शं मिथो मुखान्यवलोकमानाः सदेहं स्वर्गीयमिन्द्रभवनमिव प्राप्तमात्मानमकल्पयाम। तत्र चन्द्रशालायां सौवर्णानि राजतानि च पात्राणि, सुखासनानि, नागदन्तेष्ववलम्बितानि कौशेयवस्त्राणि महार्घाणि, विविधानि चारूणि मनोहारीणि विचित्राणि कलापूर्णानि चित्राणि, पर्यङ्किकाः, पीठिकाः,

कुट्टिमानि, मणिमण्डितानि, तानि तानि राजवैभवोचितानि च विविधोपभोग्य-वस्तूनि च निरीक्ष्यात्मनोऽकिञ्चनत्वमनुभवन्तो महाराजस्य श्रीधरपण्डितस्य विषये महतीं राजसीं सम्भावनामास्थां श्रद्धां च समभावयाम। तत्र प्रकोष्ठ-स्यान्तर्वर्तिन्यपरस्मिन् लघुकोष्ठे चन्द्रशालायाः क्वचिद्वीणामुरजमञ्जीरादीनि वादित्राणि, क्वचिद्यत्रतत्र निहिता भास्वरा रत्नहाराः, क्वचित् सुगन्धयुक्ता रसकलशाः, क्वचिदूर्णावस्त्रकम्बलादीनां चयाः, क्वचिदौषधिरसरसायनानां पात्राणि, क्वचित्ताम्बूलानि, फलानि, पुष्पाणि, वनस्पतयः, कन्दमूलानि, चूर्णान्या-सवा यत्र-तत्र सक्रमं संस्थापितान् सर्वान् पदार्थान् दृष्ट्वा वयं श्रीधरमहाराजस्य भौतिकश्रिया विषयेऽतीव चमत्कृता इवाऽभूम। यद्यपि तत्र भवने शतशो जना इतस्ततो निषण्णा यातायातं च प्रकुर्वाणा आसंस्तथापि तत्रत्यं वातावरणमतीव प्रशान्तं स्निग्धं गम्भीरं स्तब्धप्रायमपि चान्तःक्रियाकलापचञ्चलमिवालोक्यत।

इत्थमाह्लादजनके स्निग्धे स्वस्थे प्रशांतेऽपि चातिप्रभावजुष्टे वायु-मण्डले स्थिता वयं सुहृदः श्रीधरमहाराजस्य विषये कामपि धारणां मानसीं कुर्मस्तावदेवाकस्मात् पादुकाध्वनिरश्रूयत सोपानमार्गेणोपरिष्ठात् खण्डादवतर-न्तमेकं दिव्यविग्रहं महर्षिकल्पं महापुरुषं चाद्राक्ष्म। तथा हि——पाटलारक्तौ चरणौ स्वर्णपादुके दधानौ, लौहस्तम्भसदृशे प्रपुष्टे जङ्घे, सूक्ष्मे कटिप्रदेशे लम्बमानं पीताम्बरं, वलित्रयविभूषितं सरोजपत्रमिवोदरं, प्रपुष्टं वक्षःस्थलं, परिधाकृती वज्रसारावापादलम्बिनौ सुचिक्कणौ मांसलौ भुजदण्डौ, वृषभस्कन्धौ, कम्बुकल-ग्रीवा, त्रिपुण्ड्रशोभी प्रोन्नतोऽर्द्धचन्द्र इवौजोवीर्यतेजोमयो भालप्रदेशः कमलपत्र-सदृशे श्रुतिगामिनीषद्रक्ते विशाले सुस्थिरे लोचने, रुद्राक्षमणिविभूषितौ कर्णौ, ज्ञानविज्ञानकोषोपमं शिरः, स्निग्धकुञ्चितघनश्यामकेशकलितो जटाजूटो, यज्ञोपवीतं वामस्कन्धे लम्बमानं, दक्षिणहस्तस्य कनिष्ठायामङ्गुलौ कुशमुद्रिका, द्वयोर्हस्तप्रकोष्ठयोः सुवर्णमणिखचिते कङ्कणे, हस्ते चैकस्मिन् पत्रपुष्पदूर्वांकुर-बिल्वपत्रतुलसीदलकेशरचन्दनादीनां पूजोपहाराणां स्थालीं दधानः, कश्चनोर्ध्वरेताः, सुदृढवपुष्माञ्ज्योतिर्मयः, सिंहपराक्रमः, प्रौढे वयसि वर्तमानोऽपि च स्फूर्तिस्फारं पदनिःक्षेपं कुर्वाणः, प्रसन्नगम्भीराकृतिः, स्थिरशांतचित्तो घनगम्भीरया गिरा स्तोत्रमन्त्रानुच्चारयन् स्पष्टतः किमप्यत्र वाणोऽपि च कमपि दिव्यसन्देशमा-कृत्यैव प्रयच्छन्निवास्मत्पुरतः प्रादुर्भूय तस्थौ।

दृष्ट्वैव तमेतं महापुरुषं वयमासनेभ्यः समुत्थाय बद्धाञ्जलयः प्रणामाभि-वादनशिष्टाचारमकरवाम। स चान्तःकक्षं प्रविश्य पूजोपहारस्थालीं निधाय बहिरागत्यासनमेकमुपाविशत्। स खलु क्षणार्द्धं यावत् किमपि निगूढमन्तर्हृदि चिन्तयन्निव स्थित्वाक्षिणी प्रसार्य घननिर्घोषगम्भीरयाऽतीव सुस्पष्टया संस्कार-

वत्या वाचाऽस्मान् बभाषे—"कुतो नु खल्वागम्यते श्रीमद्भिः ? मद्योग्या च का सेवा ?"

वयम्—"भगवन् ! वयमत्र संस्कृतमहाविद्यालयेऽधीयानाश्छात्राः । श्रीमन्तः किलोद्भटा विद्वांस इति श्रुत्वाऽद्यावकाशदिनमिति कृत्वा भवद्दर्शनाकाङ्क्षयैवागच्छाम ।"

सः—"नन्वत्र नगरे क्व नु कुत्र कृतवसतयो भवन्तः ? किं कुलं श्रीमताम् ? का वा शिक्षादीक्षा च भवताम् ? ? अपि भवत्सु कोऽपि कलाकारः सङ्गीतज्ञः कविर्लेखको वा ? ? ?"

वयम्—"वयं सर्वेऽपि ब्राह्मणा विद्यालयेऽत्र राजकीये संस्कृतसाहित्यं ज्योतिषमायुर्वेदं चाऽधीयामहे ।"

सः—"आम्, साधु ! अहमधुना क्षणादेवातुरान् वीक्ष्य यावत् प्रतिनिवर्ते तावद्भवन्तो निरीक्षन्तां ममैतदाश्रमस्थलम् । इदानीमेवागच्छामि । यदि च भवन्तो नित्यक्रियां निर्वर्तयितुमभिलषन्ति तदात्रैव सम्पादयन्तु ।"

इत्युक्त्वा स तत उत्थायैकस्मान्नागदन्ताच्चीनांशुककञ्चुकं धौतवस्त्रमुत्तरीयं च गृहीत्वा परिधार्य चैकं शिरसि कौशेयमुष्णीषं च धृत्वाऽऽतुरांश्चिकित्सयितुमधस्ताद्गन्तुं सत्वरोऽभूत् ।

नीचैर्गच्छता तेन महानुभावेन द्वौ शिष्यावस्मत्सम्भावनासपर्याविधौ नियुक्तौ, तौ चागत्यास्मान् प्रणम्यान्तःप्रकोष्ठाज्जलं, पयः, फलानि तथान्यांश्च प्रातराशन् पदार्थान्नानाविधान् राजतस्थालीषु संस्थाप्यास्मत्पुरतो न्यधत्ताम् । 'सुखमुपभुज्यन्ताम् !' इति सानुरोधं साग्रहं च तद्ग्रहणायाऽस्मान् प्रावर्तयताम् । अस्माभिश्च तत् सर्वं यथेच्छमुपभुक्तम् । पुनर्हस्तपादं प्रक्षाल्य ताम्बूलवीटिकाश्चर्विताः । ततो ह्येकः शिष्यजनो वीणामादाय संगीतस्वरलहरीं सुधास्वादीयसीं प्रवाहयितुमारभत । तस्य विपञ्चीं वादयतो गुणकौशलं भावयन्तो वयं तत्र चित्रार्पिता इव तदेकतानमग्ना इव क्व नु खलु कुतो वा वर्तामह इति सर्वं व्यस्मराम ।

अथ चाऽतीतेऽर्द्धप्रहरप्राये समये स किल महापुरुषो निर्वर्त्यातुरचिकित्सां, तत्सेवासपर्यासम्बन्धि प्रबन्धादिकं च सर्वं भृत्यैः शिष्यैश्च सम्पाद्य, नवागतेभ्यश्चातुरेभ्य औषधानि दत्वा, समुपदिश्य च सेवनविधीन्, पृथक्-पृथक् सर्वेषां कृते शयनासननिवासव्यवस्थां कारयित्वा पुनः कक्षान्तः प्रविश्य स्वल्पवासो लघुवेशं च परिधार्यास्मत्सम्मुखमेकमासनं समासीनोऽस्माभिः साकं वार्तालापायोन्मुखः सन् किञ्चिद्वक्तुमुपाक्रमत—

सः—"कुतो नु खल्वत्र भवन्तोऽत्र मामनुगृहीतुमतिथित्वेनाद्य प्राप्ताः ? साधु कृतम् ! जानन्त्येव श्रीमन्तः "शिवा नोऽतिथयः सन्तु !" इति प्राचां वचनम् । अनुगृहीतोऽस्मि ।"

वयम्—"भगवन् ! न वयमतिथयः प्रत्युत भवद्दर्शनेच्छयैवायाताः स्म । श्रीमन्तो विद्वद्धौरेयाः, प्राणाचार्याः, कविशिरोमणयोऽनेकविद्याकलानां-निधानं, सहृदयाः, कारुणिका, विनोदप्रियाश्चेति नागरिकेभ्यो लोकेभ्यो भवत्कीर्तिं सर्वतः श्रावं-श्रावं, अद्येदानीमत्र समागच्छाम । वयमत्र स्थानीये संस्कृतविद्यालयेऽध्ययनपराश्छात्राः स्मो द्विजन्मानः । अत्रागत्यास्माभिर्भवतां पुण्यदर्शनैः सफलतां नीतं स्वजन्म । सत्यप्येवमत्रागतैरस्माभिर्भवद्दिनचर्या-क्रमोऽपबाधितो, रोगिणां सेवासपर्यासंलग्नान् भवतोऽतीव व्यस्ततमान् तेषु-तेषु कार्यकलापेषु व्यापृतान् केवलमौत्सुक्यपरवशा वयं विघ्नविहितानकरवामेति किंचिदिव लज्जामहे भगवन् ! तत् क्षम्यतामयं नो बालानामपराधः ।"

सः—"मैवं ब्रूत वत्साः ! भवदागमनान्न कापि क्षतिः । अत्रत्याः शासका अधिकारिणो नागरिकाश्च सर्वे मामतितरां स्निह्यन्ति । निखिलमपि दिनमत्र लोकानाम् यातायातं वोभूयमानं वर्तत एव । भवन्तो विद्यार्थिनोऽपि कुलीना ब्राह्मणा अकिञ्चनस्य मे गृहमायातास्तन्मम सौभाग्यमिव मन्ये ! अथाद्य तु तावद्भवतामवकाशदिनम् । तदद्य नु तावदत्रैव स्थीयताम्, स्नानसन्ध्यादिकं कृत्वा मया सार्द्धमेव भगवत्प्रसादो भुज्यताम्, स्वसंगत्या च मामानन्दयन्त्विति प्रार्थयेऽहम् । न ममेमामभ्यर्थनां प्रत्याख्यातुमर्हन्ति भवन्तो द्विजतनया भूदेवाः । विशेषतो विद्यामधीयाना गुरुकुले वसन्तो ब्राह्मणपुत्रा ममैतद्वचनमव-मन्तुं नाग्रहग्रहिलाः स्युः । अत्रागमनागमनं तु भवदायत्तमभूत् परमितो निवर्तनं श्रीमतां मदाधीनमेव वर्ततेऽधुना । तत् सङ्कोचं विहाय स्वगृहनिर्विशेषं निश्शङ्कं च सुखं निवसन्तु ।।"

वयं सर्वे विद्वन्मूर्द्धन्यस्य तस्य वचोऽनुरोधस्वीकरणादन्यत्किमपि वक्तुं नापारयाम । परिणामतस्त्रैव भोजनादिकं कर्तुं स्वीकृतवन्तः ।

अथ कियत्समयानन्तरं स सेवकानाहूयास्मत्कृते स्नानसन्ध्यादीनां नित्यकर्मणां व्यवस्थां कर्तुमादिश्य स्वयं 'भोजनोपक्रमं करवाणि !' इयुक्त्वा भवनस्यापरपार्श्वे वर्तमानां रसवतीशालां जगाम । वयं सर्वे तत्सेवकैः सर्वादौ स्नानागारं नीताः कृताभ्यङ्गास्ततो वयं ससुगन्धेन कवोष्णेन निर्मलेन सुखस्पर्शेण च वारिणा स्नापिताः । ततो वयं देवपूजामन्दिरं गताः सन्ध्यादिकं नित्यविधिं न्यवर्तामहि । एवं कुर्वतामस्माकं मध्याह्नप्रायः समयोऽतिक्रान्तः । तावदेव वयं सेवकद्वारा भोजनालयं गन्तुमाकारिता महानसोपकक्षं प्राविशाम ।

तत्र कक्षे सर्वतः पृथक्-पृथक् महार्हाणि भोजनासनान्युपकल्पितान्यासन् । वयं तानि न्यषीदाम चन्द्रबिम्बोज्ज्वलासु राजतस्थालीषु रत्नखचितेष्वन्यान्यपात्रेषु च पक्कान्नानि, शाकसूपादीनि, भक्ष्यभोज्य-लेह्य-चोष्य-पदार्थाश्च यथाक्रमं परिवेशिता अभूवन् । भोजनपदार्थेभ्यः प्रसरन् सुगन्धोऽस्माकं घ्राणेन्द्रियं सन्तर्पयन् तदभिमुखीं भोजनरुचिं समाकर्षन्निवासीत् । प्रत्येकं स्थालीं परितो मणिकाञ्चनलाञ्छिता रौप्यकर्करी पीयूषकल्पशीतलसुगन्धनिर्मलजलप्रपूरिता, पानपात्रं चैकैकं निहितमभूत् । स च विद्वान् स्वासन्दीं निषण्णो भगवते विश्वम्भराय परब्रह्मणे तत्सर्वमन्नपानादिकं मन्त्रोच्चारपूर्वकं सविधि सश्रद्धं च विनिवेद्य तुलसीदलानि प्रक्षिप्यास्मान् भोक्तुं प्रैरयत्, स्वयं चापि भोजनाय प्रवृत्तः । सुस्निग्धं सविधि पक्वममृतोपममनास्वादितपूर्वं तद्भोजनं कृतवतामस्माकं परातृप्तिरजायत । यथेच्छं परिभुक्तेष्वस्मासु हस्तपादं प्रक्षाल्य मुखमार्जनं गण्डूषादिकं च कृत्वा निवृत्तेषु तेन विदुषा वयमपरहर्म्ये वर्तमानं सुसज्जितं शयनागारं नीताः । तत्रैव च सौवर्णीं रत्नजटितां ताम्बूलकरङ्किकामुद्घाट्य स विद्वान् ताम्बूलानि सुवर्णराजतपर्पटिकावृतानि सुगन्धोत्कटान्येलालवङ्गपूगीफलसुधाखदिरसारकर्पूरकस्तूरिकामिश्रितानि चास्मभ्यं समर्पितवान् । ताम्बूलवीटिकास्ता भूयोभूयश्चर्वयन्तो वयं पृथक्-पृथक् पर्यङ्केषु दुग्धफेनाच्छमृदुलकोमलकौशेयोपधानास्तरणेषु वामकुक्षि अशेमहि । यावन्निद्रा नैति तावत् पुनर्वार्ताविनोदे व्यापृतान् सशयनीये स्थितोऽस्मानेवमवोचत्—"अयि वत्साः ! भवन्तोऽत्रास्माभिर्निरुद्धाः पराधीनत्वं मा वेत्त । अद्य तावदपराह्णेऽत्र विद्वद्गोष्ठी भविता, भवन्तस्तत्सङ्गमसुखमनुभूय ततो यथेच्छं गन्तु पारयिष्यन्ति । अत्र प्रस्तावितायां गोष्ठ्यां केचन मे सुहृदः, सखायो, मित्राणि, सहपाठिनः, सहयोगिनः, सहचरा, विद्वांसः, कवयः, कलाकाराः, संगीतज्ञा, वैद्याश्चित्रकाराश्च समेष्यन्ति । विद्याविनोदाः, शास्त्रार्थाः, काव्यालापाः, संगीताराधनानि च भविष्यन्ति । मन्ये तावत्पर्यन्तं भवतामत्रावस्थानेन न कापि विशिष्टा क्षतिः समयहानिश्च भवेत् । यदि च तदेतद्रोचेत भवद्भ्यस्तदा स्वीकृतिं मे दत्वा ससुखं विश्राम्यन्तु ।"

वयं च 'तथा करिष्यामहे भगवन् !' इति समभिधाय निद्राङ्कमालम्बामहि ।

अथापराह्णे प्रबुद्धा वयं यावत् पश्यामस्तावत्तं रासायनिकप्रवरं प्रकोष्ठैकदेशे सुखासीनं किमपि लिखन्तमिवावालोकयाम । सेवकेन निवेदिता वयं शय्यां त्यक्त्वोत्थाय पाणिपादं प्रक्षाल्य, मुखमार्जनं च कृत्वा, जलं निपीय, ताम्बूलानि चर्वयन्तः, स्वस्थाः, प्रसन्नाश्चाभवाम । पुनः प्रकोष्ठमागत्योपविष्टा वयं तावत् स प्राणाचार्यो लेखनकार्यान्निवृत्तोऽस्मानपरप्रकोष्ठं नीत्वा स्वकीयं

पुस्तकालयमदर्शयत् । तत्र पुस्तकालये विविधभाषाणामनेकेषां विभिन्नविषयाणां च मुद्रितान्यमुद्रितानि हस्तलिखितानि पुस्तकानि, दुर्लभान् ग्रन्थान्, शिलालेखान्, प्रमाणपत्राण्युपाधिपत्राण्यभिनन्दनपत्राणि, विविधानि विचित्राणि चित्राणि चालोक्यालोक्य वयं चकितचकिता इवाभूम ।

अपराह्णोत्तरं सोऽस्मानधस्तनं भवनखण्डमनैषीत् । तत्र पञ्चाशत्प्राया जनास्तमेव प्रतीक्षमाणास्तस्थुः । तेषु केचन धूम्रपानोत्सुका, भंगारसपानसस्पृहा, अहिफेनसेवनरसिका, अन्ये तमालपत्रचूर्णमास्वादयन्तः, केचन व्यायामशिक्षाप्रणयिनो मल्लाः, केचित्तैलमर्दनकलापटवः, परे सङ्गीताऽराधनरसिका, अन्ये सरसकथावक्तारः, केऽपि परिहासका, विदूषका, विनोदप्रियाश्चाटुकारा, अपरे लोकभाषाकवयोऽन्ये प्राकृतसाहित्यविशेषज्ञाः, केचनौषधिनिर्माणतत्पराः, परे रसरसायनसंस्कारे सावधानं तन्मयाः, कतिचिन्मृदङ्गमुरजवीणादिवाद्यानां संस्कारसंलग्नाः शिल्पकाराः प्राकृता जनास्तथापरे न्यायव्याकरणसाहित्यादिशास्त्राध्ययनप्रवृत्ताः कतिचित केवलं 'हा–हा ही–ही मात्रं' कुर्वाणाः कालक्षेपायैव तत्रावस्थिता अकर्मण्या अलसा व्यसनिनोऽपराधवृत्तयो गालीप्रदानपुरस्सरमात्मनोऽखर्वगर्वमौद्धत्यं च प्रकटयन्तः, सज्जना, दुर्जना, नागरिकाः, शिक्षिता, अशिक्षिताश्च सर्वविधाः सभ्याः, असभ्याश्च नागरिका जना बालवृद्धयुवानोऽदृश्यन्त । श्रीमन्तः रासायनिकं गुरुमहाराजं तत्रागतं वीक्ष्य सर्वेऽपि च ते पंक्तिबद्धः स्थित्वा बद्धाञ्जलयः साष्टाङ्गपातं प्रणेमुः । स गुरुवर्यश्च "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।" इति नीत्या सर्वानेव तान् पृथक् पृथगालप्य तन्मनोगतमभिप्रायमिच्छां कुशलमनामयं च प्रसन्नेन मनसा समन्दहासं पृष्ट्वा सर्वेषामेव मनोरथपूरणाय यथायोग्यं प्रतिज्ञाय व्यायामशालामस्मान्निनाय ।

अस्माकं पश्यतामेव स भगवन्तं हनूमन्तं, बलदेवं, परशुरामभीष्मद्रोणादीन् संस्तुत्य रक्तवस्त्रं कौपीनं स्वात्मनाधृतं सुव्यवस्थितं दृढं च बध्वा व्यायामशालारङ्गभूमिमवातरत् । अनावृतं तस्य व्यायामपुष्टं भौतिकं देहबन्धं, स्फूर्तिस्फारं तस्य व्यायामाचरणं वीक्ष्य वयं बहुचमत्कृताः । तस्य भौतिको देहबन्धो लोहसारनिर्मितो वज्रवत् दृढीयांश्चालक्ष्यत । स्वयमेव भगवान् मारुतिनन्दनो हनुमान्, भार्गवो, भीमसेनो, बलदेवो वाऽत्र भूलोके मनुष्यविग्रहं धृत्वाऽविर्भूत इवातर्क्यतास्माभिः । स खलु व्यायामचर्योपयुक्तान् गतिभङ्गान् योगासनानि क्रमशः कृत्वा सह कैश्चिच्छिष्यजनैर्मल्लद्वन्द्वानभ्यस्य शिष्येभ्यश्च प्रदर्श्यान्तरात्मनि कामपि परमां तुष्टिं, पुष्टिं, शान्तिं, सुखं चान्वभवत् ।

अथ व्यायामचर्यया निवृत्ते तस्मिन् महाराजे गुरौ केचन भद्रजना विद्वांसः, कवयो, गायकाः, कलाकारा, लेखका, गुणग्राहिणश्च तत्रागच्छन् ।

महाराजं च तं गुरुं प्रणम्योपरितने हर्म्यप्रकोष्ठे न्यषीदन् । वयं हि तेनाज्ञप्ता:—"अद्य सायमत्र विद्वद्गोष्ठी भविता । इमे च सर्वे सज्जना मम सुहृद:, सखायो, मित्राणि, परिचितास्तदर्थमेवागच्छन्ति । तद्यावदहं स्नानसन्ध्यादिकं निर्वर्तयेय तावद्भवन्त: सार्द्धमेभिर्वार्तालापसुखमनुभवन्तु ।" इत्यादेश्य स्वयं स्नानागारं प्रविवेश स: ।

अथाधुनोर्ध्वखण्डे वर्तमानं हर्म्यकक्षं प्राप्तेष्वस्मासु किञ्चित्कालानन्तरमेव स रासायनिको गुरु: कृततैलाभ्यङ्ग: सेवकै: सहाम्राणि, कदलीफलानि, नवरङ्ग-द्राक्षादीनि नानाविधानि फलानि, दुग्धशर्करौषधिरसमिश्रिता अनेके पेया: सुस्वाद्या रसास्ताम्बूलैलालवङ्गादयो भोग्यपदार्था राजतस्थालीषु पानपात्रेषु चोपस्थापयन्नुवाच तत्रोपस्थितान् सर्वान् न:—"मान्या: सुहृद: ! क्षम्यन्ताम् !! अस्माकमद्यतनी दिनचर्या किञ्चिद्विलम्बिता । यावदहं स्नात्वा भवत्सेवायामात्मानं नियोजयानि, तावदेतानि फलानि, रसाश्चैते यथेच्छमास्वाद्यन्तामुपभुज्यन्तां च । एषोऽहमचिरादेव स्नात्वा गच्छानीति, उक्त्वा स: पुन: स्नानागार प्रति प्रतस्थे ।

अथ होराद्वयानन्तरं स: प्राणाचार्य: स्नातो विरचितकेशकलापो धौत-मधोवस्त्रमुत्तरीयं च परिदधानो दुग्धफेनधवलममलं कञ्चुकमुष्णीषं धृत्वा पीताम्बरं तदुपरि परिधाय भालदेशे कृतोर्ध्वपुण्ड्र: सुगन्धद्रव्यै: सुरभितवायुमण्डलो राजसं वेशं कृत्वा किञ्चन्मादकद्रव्यसेवनान्मदमत्ताभ्यामीषदारक्तकोणाभ्याम् विस्फारिताभ्यामिव विशालाभ्यां लोचनाभ्यां तिर्यक् दृशमितस्ततो व्यापारयन् शनै:शनै: कक्षान्त: प्रविश्य स्वकीयमेव भवनसभागृहमध्यासीनान् सभ्यांस्तत्रो-पस्थितान् सादरं सविनयं सशिष्टाचारं समर्यादं च प्रणम्य स्वासनमुपाविशत् ।

तावदेव सन्ध्यासमय: सञ्जात: । अथ प्रज्ज्वलितायां दीपमालिकायां, धूपसुगन्धे सर्वतो व्याप्यमाने, शिष्यभृत्यगणे च यथास्थानमुपविष्टे, विद्वज्जनेषु सर्वेषु सुखासीनेषु, वीणामुरजमृदङ्गमञ्जीराणां मधुरस्वरेषु रणरणायमानेषु श्रीमज्जयदेवकवेर्गीतगोविन्दस्य चतुर्दशपद्या मङ्गलाचरणपुरस्सरं क्रमशस्तत्र कार्यक्रम: प्रारभत । तत्रोपस्थिता: सर्वेऽपि च सभासदोऽहमहमिकया स्वरचना: काव्यालापशैल्या सोत्साहं सानन्दं चाश्रावयन् । मध्यान्तरेषु च तत्र हासपरिहासा-नर्मालापाश्चाटूक्तयो व्यङ्ग्यविनोदाश्च प्रावर्तन्त । यदा कदा शास्त्रार्थप्रसङ्गाश्चापि तर्कयुक्तिपुरस्सरं सोहापोहमवातार्यन्त । संस्कृत-हिन्दी-बङ्गवी-गुर्जरी-पारसीक-उर्दू-महाराष्ट्री-प्रभृतीनामनेकभाषाणां नवनिर्मिता प्राचीनाश्च काव्यरचना: सुहृद्गोष्ठ्यां तस्यामश्रूयन्त । लोकभाषाकवयोऽपि तत्र ग्राम्यगीतानि, भजनानि, लावणी-ग़ज़ल-टप्पा-ठुमरी-प्रभृतय प्रणयगीतीर्वीरगाथाश्च गायं-गायं रसरमानन्द-

वर्षणमकुर्वंल्लोकाः केचनांग्लभाषाविदो जनाश्चात्र सदसि पाश्चात्यकवीनां काव्यानि मधुर मधुरं पेठुः। विद्यमानेष्वपि तस्यां परिषदि विद्वत्प्रकाण्डेषु सर्व-विद्यानिधानेषु समर्थेषु प्रकृष्टप्रतिभावत्सु, विदूषकाः परिहासकाश्चापि साभिनयं स्वकलाप्रदर्शनं कर्त्तुं यथेष्टमवसरमासाद्यानन्दरसैर्नवनवैरात्मानं सभ्यांश्चा-प्लावयन्। अस्माभिश्च तत्र निपुणं निरीक्ष्यानुभूतं परिषदि यत् स खलु रासायनिको गुरुः स्वयंव्रतः सभापतिरिव किमपि सर्वातिशायि व्यक्तित्वं दधानो दिव्यविग्रहो देवदूत इव रराज। मध्ये मध्ये जलपानं, ताम्बूलचर्वणं, पूगीफलैला-लवङ्गतमालपत्रसेवनं च सदस्यैर्यथारुचि निर्बाधं च क्रियमाणमभूत्। इत्थं द्विप्रहरप्रायोऽत्यवर्तत प्रथमरात्रेः समयः।

अथ निशीथे कश्चित् सङ्गीतज्ञानां समुदायस्तत्र समाजगाम। तेषु सङ्गीतमण्डलसदस्येषु केचन सङ्गीताचार्या गायका वीणावादननिपुणास्ताल-तत्त्वविशेषज्ञा भावमुद्राप्रर्दनपटवो नृत्यकारा रूपलावण्यसम्पन्ना युवतयो नर्तक्यो वाराङ्गना विविधवाद्यविशारदाः कलाकाराश्चाभ्युपेत्याचार्यप्रवरं तं रासायनिकं गुरुं भूयो भूयः प्रणम्य तदाज्ञाकारिणो दासा इव, भृत्या इव, स्वयंसेवका इव, अकिञ्चना भिक्षुका इव श्रद्धाभक्तिपुरस्सरं सादर सविनयं च तदादेशं प्रतीक्षमाणा उपतस्थुः। गुरुणा तेनाचार्येण कृतेन तिर्यग्भ्रूभङ्गकटाक्षमात्रेण तच्चिकीर्षितं, तन्मनोगतं, तत्प्रवृत्तिं, तदादेशं, तदनुशासनं च जानाना इव तत्रो-पस्थितानां सभासदामपि मर्यादां, शिष्टतां, सभ्यतां, सदाचारं, ससम्मानभावं सानुशासनं च परिपालयन्तो यथास्थानं न्यषीदन्।

तत्र परिषदि समुपस्थिताः सर्वेऽपि च विद्वज्जनाः किञ्चिदिव विश्रामं कामयमानाः काव्यसङ्गीतसेवनेन श्रान्ता मनाक् स्थानपरिवर्तनमासनपरिवर्तनं वाभिलषन्तो यत्र तत्र स्वानुकूलं चेष्टितुमारभन्त। ततस्तेनाचार्यप्रवरेण सा नवागता कलाकारमण्डली जलपानताम्बूलादिभिः प्रसादवितरणैः पुष्पमाला-समर्पणैः सुगन्धद्रव्यप्रदानैश्च सम्मान्य सङ्गीतनृत्यादिकं समारब्धुं प्रणोदिता। तैश्च मण्डलीमण्डनैर्गुणगणविशिष्टैश्च सङ्गीतज्ञैर्नर्तकीभिश्च सङ्गीतनृत्यादिकं शास्त्रीयपद्धत्यनुसारं भावमुद्राप्रदर्शनपूर्वकं प्रवर्तितं, सर्वैस्तत्रस्थैर्विद्वत्कविकला-कारैस्तत् सर्वं सानन्दमनुभूय साह्लादं समाप्तिं नीतोऽसौ महामहोत्सवः!

ततः सर्वे सदस्यास्तु तस्य रासायनिकस्य गुरोर्महाराजस्यानुमतिमासाद्य स्वगृहान् प्रति प्रतस्थिरे। ततो हि तेनाचार्यप्रवरेण सर्वेभ्य उपस्थितेभ्यः कला-कारेभ्यो मिष्टान्नप्रसादं, फलानि, वस्त्राणि, सुवर्णमुद्राश्च दत्वा प्रसन्नेन मनसा मधुरभाषणैश्च सन्तोष्य सस्नेहं विसर्जिताः। अस्मान् सर्वांश्चातिथिभवने कल्पितानि शयनीयानि सेवकैर्नीत्वा शयनायाज्ञाप्य स्वयं चाप्यशेत।

अथ द्वितीयेऽहनि शय्यां त्यक्त्वोत्थिता वयं स्वगृहान् गन्तुमाचार्यस्याज्ञाम याचाहिम। तेनाश्वास्यास्मान् सस्नेहं पृष्टम्—"ब्रूत वत्साः! वस्तुतः किमर्थं भवन्तोऽत्र मम सविधे प्राप्ताः? अहं जाने, भवन्तो दूरात् स्वजन्मस्थलादत्रागता विद्यार्थित्वेन विद्यालयेऽध्ययनमारचन्ति। भवतां यन्मनोगतं भवेत्तन्निश्शङ्क-मुच्यताम्। यूयं ब्राह्मणाः कुलीनाः पुनर्देववाणीं संस्कृतभारतीमधीयाना ब्रह्मचर्यव्रतं परिपालयन्तोऽत्र मम नगरे वसथ। तत्किमपि मां याचध्वं लभध्वं च। ममेदं भवनं प्राप्य न कोऽपि रिक्तहस्तो गच्छति। नात्र मम गृहे किमप्य पहीयते। भगवता परमेश्वरेण प्रदत्तं पुष्कलमक्षयं च धनं मम समीपे वर्वर्ति। वदत, वदत वत्साः! स्वमनोरथं नूनं वदत। यत्कामयध्वे तल्लब्ध्वैव गम्यताम्!! सर्वान्नो मनोरथान् भगवान् धन्वन्तरिः परिपूरयितुमिहात्रैवाधुना समर्थः!!!" इत्युक्त्वा सोऽस्मन्मनोगतामाकाङ्क्षां श्रोतुमुत्कर्णम् प्रतीक्षमाणः स्नेहार्द्रया दृशाऽस्मान् परिपश्यंस्तस्थौ।

अनुभवराहित्यात् कुलीनत्वादल्पवयस्कत्वाच्च किंचित् सङ्कोच्मञ्च-द्भिर्लज्जमानैरप्यस्माभिर्बालबुद्धिभिः कथमपि प्रयत्नात् परस्परं मुखान्यवलोक्या-चार्याय सविनयं महता काठिन्येन निवेदितम्:—

"भगवन्! लोकास्तावच्छ्रीमन्तं सिद्धं रसायनाचार्यं, प्रसिद्धं पीयूषपाणिं प्राणप्रदातारं कविराजं, सर्वशास्त्रनिष्णातं, प्रकृष्टं विद्वांसं, परमदार्शनिकं, रसोन्मत्तं कवीश्वरं, शतावधानं पण्डितं महामन्त्रिकप्रवरं च भवन्तं वदन्ति। श्रीमतां कीर्तिं, यशो, वाक्सिद्धिं, धनवैभवं, सभाचातुर्यं, गुणगणान्, सहृदयत्वं च श्रावं श्रावं वयमत्र श्रीमच्चरणयोः सम्प्राप्ताः स्म। श्रीमतां पुण्यानि दर्शनानि, सत्सङ्गमातिथ्यं च प्राप्य भवत्सुहृदां विदुषां गुणिजनानां कलाकाराणां चात्र गोष्ठीरससुखं समास्वाद्य वयमानन्दसन्दोहसुधास्वादमास्वाद्य कृतकृत्या धन्याश्च संजाताः स्म। अधुना स्वनिवासस्थलं गन्तुमाज्ञापयन्तु गुरुवर्याः। पूर्णा नो मनोरथाः!! अधुना तु गृहगमनायानुमन्यताम्, पुनः कदाचिदायास्यामः!!!"

एवं ब्रुवतो मे वचनमाक्षिप्यास्मास्वेकेनोक्तम्—"आचार्य! वयं बहुकृतज्ञाः स्मो यच्छ्रीमद्भिरस्मासु ब्राह्मणवटुषु निर्व्याजं महती हि कृपा विहिता, परमः स्नेहः प्रदर्शितो, निर्हेतुको दयाभावो व्यधीयत, परं यथा लोका ब्रुवन्ति, न तथा भवत्कृतःकोऽपि रासायनिकत्वचमत्कारोऽत्र प्रत्यक्षीकृतोऽस्माभिर्न च काऽपि लोको-त्तरा सिद्धिश्च साक्षादक्रियत। तद्यदि गुरुचरणाः प्रसीदेयुर्भवच्छिष्यानुशिष्येष्व स्मासु तदा सिद्धविद्यानां श्रीमतां रासायनिकत्वं चर्मचक्षुर्भ्यां साक्षात्कर्तुं कामयामहे!" इति।

अथाचार्यः परमगम्भीरां मुखाकृतिं कृत्वान्तर्भेदिनीं दृशमस्मासु निःक्षिप्या-

स्माकं पात्रत्वमन्तर्हृदि विचारयन्निव प्रोवाच—"साधु, वत्साः ! अद्य तावद्यूयमत्रैव निवसता भोजनान्तरं मध्याह्ने किञ्चिद्विश्रामं कृत्वापराह्णे युष्माकमियं जिज्ञासापि च यथासाध्यं समुपशाम्येत।" इत्युक्त्वा स पुनरस्माकं परिचर्यार्थं सेवकान्नियोज्य स्वदिनचर्यामनुवर्तितुं सत्वरोऽभूत्। वयं च तद्वचनविश्वस्ता महदौत्सुक्यं, जिज्ञासां, कौतुकं च स्वहृदन्तर्निगूढं बिभ्रतः स्नानसंध्याभोजनादिषु प्रवृत्ता अपराह्णकालं प्रतीक्षमाणास्तत्रत्यमेव दिनचर्याक्रममनुवर्तितुमारभेमहि।

अथ क्रमेणापराह्णसमयो जातः। शयितोत्थितः स खल्वाचार्योऽस्मान् भवनस्योद्यानपार्श्वे विनिर्मितां भूगर्भान्तर्गृहे वर्तमानां स्वकीयां रसायनप्रयोगशालां निन्ये। बहिस्तः पर्णकुटीमिव दृश्यमाणां तां शालां सोपानमार्गेण प्रविश्य यावदन्तः पश्यामस्तावत् स हि रसायनाचार्यस्तत्र स्वकीयं सिद्धासनमुपविष्टोऽस्मांश्च पृथक् पृथक् परिकल्पितासु मृण्मयीषु वेदिकासु सुखमुपवेष्टुमाज्ञाप्यैवं वक्तुमारभत—

"पश्यत, वत्साः ! इयं हि मे रसरसायनसिद्धये निर्मिता प्रयोगशाला विद्यते। अत्रैवाऽहं नानौषधिनिर्माणं, भस्मसाधनं, पारदसंस्कारान्, धातुशोधनं वाऽन्यच्चातुराणां चिकित्सासापेक्षं रसरसायनादिकं सर्वं शास्त्रोक्तरीत्या संसाधयामि। इतोऽवलोक्यताम्—अयं हि सर्वसंस्कारशुद्धः पारदः। एतानि विविधानि भस्मानि, असौ सिद्धो मकरध्वजः, सैषा स्वर्णवसंतमालती, इमाः सुवर्णरजतपर्पटिकाः, इदं मायूरं घृतम् असौ गुग्गुलुराजः, अयं भैरवरसः, स एष च्यवनप्राशः, इदं हिरण्यगर्भगुटिका, इदं हि वाजीकरणमौषधम्, तदिदं सरस्वतीचूर्णम्, स एष पक्षाघातनिवारको रसः, तदिदं महानारायणतैलम्, सैषा सर्वज्वरप्रशमनी वटिका, अयं त्रिदोषान्तकरो रसः, सैषा विदारीकन्दवटी, इमे च सर्वे संस्कारशुद्धा धातुपिण्डाः। यदाऽहं किमप्यौषधिरसादिकं साधयितुमिच्छामि तदात्रैवागत्य निभृतं साधयामि।"

इत्युक्त्वा स तत्र निहितानि नानाविधानि विभिन्नगुणान्यौषधानि, रसान्, भस्मानि, तैलानि, चूर्णानि, तन्निर्माणोपयुक्तानि विविधान्युपकरणानि चाऽस्मभ्यं प्रदर्श्याऽब्रूत—"वत्साः ! सावधानं श्रृणुत !! यतो भवन्तः सर्वे कुलीना ब्राह्मणा विद्यार्थिनोऽतीव तीव्रां जिज्ञासामावहथ, पुनर्मया प्रदर्शितं चमत्कारविशेषं प्रत्यक्षं द्रष्टुमभिलषथ, तस्माद्भवतां पात्रत्वमाकलय्यात्र भवतः सर्वानानीतवानस्मि। तच्छ्रीमद्भिर्मम प्रयोगशालावीक्षणं न कस्मा अपि जातुचित् कथनीयं, नो चेन्महाननर्थः सम्भवेत् ! एतत् सर्वं गुह्यातिगुह्यं रहस्यं मातृजारवद् गोप्यम् !! स्वेष्टदेवतां, वेदमातरं, गायत्रीं, मातापितरौ, धर्मं, गुरुं, विद्यां च सर्वामत्र साक्षीकृत्य भवन्तः सत्यां प्रतिज्ञां कुर्वन्तु यद्यावज्जन्म नैतद्रहस्यं कस्मैचिदपि कथयेयुरिति !!!"

वयं च तत् सर्वं दृष्ट्वा, श्रुत्वा, विस्मिता इव चकिता इवोद्भ्रान्ता इव दिङ्मूढा इवाभवाम । अन्ततोऽस्मास्वेकः सुहृत्तमाचार्यं साञ्जलिबन्धमूचे—

"भगवन् ! के वयं वराकाज्ञानरङ्कादीनदीनाश्छात्राः क्व च भवान् समर्थो गुरुः ! अन्तरं महदन्तरम् !! सूर्येण कीटमणिना किं बत सादृश्यम् !!! सत्यप्येव श्रीमद्भिरेतत्सर्वं प्रदर्शितं कृपया तत्कृते वयं बहु कृतज्ञाः स्म । श्रीमन्तो यदस्माकं पात्रत्वमाकलयंस्तदेव हि सौभाग्यं नः ! श्रीमच्चरणौ स्पृष्ट्वा वयं प्रतिजानीमहे यन्न कदाप्येतद्रहस्यं प्राणात्ययेऽपि समुपस्थितेऽपि कस्मैचिद्वक्ष्यामः ।"

एवं वदत एव तस्य नो मित्रस्य स किलाचार्योस्मान् सर्वान् नेत्रेणाकुञ्चितभ्रुवा तिर्यगवलोक्य मर्मभिदा दृशाऽब्रवीत्—"यूयं ब्राह्मणवटवोऽस्माकम् परमा विश्वासभूमिः ! भवन्तोऽनुत्तमं पात्रं विद्यासिद्धेः क्रियात्मकप्रयोगप्रदर्शनस्य !! तत् पश्यत सावधानम् । इत इतोऽवलोक्यताम् । 'एतदस्ति तावत् सर्वसंस्कारसंस्कृतं विशुद्धतमं हि शुल्वम् । दृश्यताम्, कीदृशमिदम् ?' इत्युक्त्वा स शालातो बहिर्गत्वा कानिचिदौषधिपत्राणि मूलानि चोद्यानादानयत् । पुनरागत्य-प्रज्वालितेऽग्नौ तं ताम्रपिण्डं प्रक्षिप्य पात्रे निर्धूमेनाग्निना विद्राव्य तस्मिंस्तरलाग्निकल्पे द्रवे कानिचिदौषधिचूर्णानि चिक्षेप । ततो हि सद्यः समानीतानि पत्राणि मूलानि च पाणितलाभ्यां दृढमापीड्य रसं निष्कास्य बिंदुपञ्चकपरिमाणं रसं प्रतप्ते तस्मिन् शुल्वपिण्डपात्रे मन्त्रोच्चारपूर्वकं प्रक्षिप्तवान् । प्रक्षिप्ते च तद्रसे तत्क्षणमेव स खलु शुल्वपिण्डोऽग्निमध्यस्थो ज्योतिःप्रभाभास्वरं स्वरूपरमणीयं तेजोमयं विशुद्धं सुवर्णं परिणतम् । तच्चाग्नेर्बहिर्निष्कास्य गृहीत्वा चाऽथ जलकुण्डे क्षिप्त्वा पुनर्निष्कास्य ततो रसायनशालाया अस्माभिः सहैवोद्यानपथेन स्वभवनकक्षमासाद्य प्रकोष्ठं प्रविश्यास्मान् प्रत्यूचे—"भूदेवाः ! समर्थो मे गुरुदेवो महात्मा मह्यमेतां विद्यासिद्धिं प्रादाद्ययाहं स्वजीवनं सुखेन जीवामि । सत्यां महत्यामावश्यकतायामेवं सुवर्णं सम्पाद्यातुरसेवायां मुक्तहस्तं व्येमि । यदि च मे विद्यासिद्धेः सदुपयोगो लोकसेवायां भवति तदैव मम जीवनसाफल्यम् । अन्यथा न मे किमपि-द्रव्येण प्रयोजनम् !"

एवमुक्त्वा तेन सिद्धेन रासायनिकेन पञ्च-पञ्च स्वर्णमुद्रा, वस्त्राणि, मिष्टान्नानि, फलानि, पुस्तकानि च दत्वा—"सति धनप्रयोजने श्रीमद्भिर्नूनमत्रागन्तव्यं, धनं च मत्तो निस्सङ्कोचं यावदिच्छं प्राप्तव्यं, विद्याध्ययने च समनोयोगं प्रयतितव्यम् !" इत्युक्त्वा तेन सस्नेहार्द्रभावं वयं स्वनिवासस्थानं गन्तुं विसर्जिताः । वयं सर्वे हर्षनिर्भरमानसा अपि बहुचमत्कृता स्वगृहान् प्रति समागच्छाम् ।

# वक्र दर्शनो हनूमद्भक्तः

अस्ति क्वचित् पार्वत्यवनसङ्कुले भारतीये हि भूभागे कश्चनैको ग्रामविशेषः। तत्र च ग्रामे मुख्यतः कृषीवलानां भिल्लजनानां तदनु ग्रामीणानां ब्रह्मक्षत्रविशां वसतिर्वर्तते। ग्रामं परितः सघनवृक्षलतागुल्मपादपाच्छादितमतिनिविडं वनमास्ते। सर्वतो ग्राममावृत्य किलैका संततवाहिनी प्रसन्नसलिला नदी प्रवहति। वनमध्ये चैको महान् सरोवरश्चापि विद्यमानोऽस्ति। वनं सर्वत उच्चावचं पर्वतमाला स्वकीयैः प्रोन्नतैरभ्रङ्कषैः शिखरैः शोभमाना काम-प्यनिर्वचनीयां मनोरमां .रमणीयां शोभामातन्वाना विराजते। एवंविधे प्रकृतिसौन्दर्यसनाथे चाऽत्राऽरण्यके स्थाने सिंहा व्याघ्रा भल्लूका वृकाश्चित्रका मृगा अजगराः शूकराः सर्पास्तथान्येऽपि चैवंविविधा अनेके हिंस्रका वन्यजन्तवः प्राचुर्येण निवसन्ति। तेषां तत्राऽऽहारसौविध्यं, निवासाश्रयानुकूलता, तृण-जलफलपत्रच्छायादीनां परमं सौलभ्यं, निवासानुकूलता च वर्तते। वनभूमावस्यां नानाविधाः पक्षिसमूहाः स्थलचरा जलचरा व्योमचराश्च प्रचुराः सन्ति। ये स्वकीयैः कलकूजनैर्निखिलमपि वनं मुखरीकुर्वन्ति। साकमेव पशुपक्षि-भिरनेकैस्तत्र वने बहूनि वानरयूथान्यपि च विद्यन्ते। त इमे वानराः प्रायेण वनान्निःसृत्य ग्रामाद्ग्रामान्तरं बंभ्रम्यमाणा दिनान्ते पुनर्वनं प्रविश्य महा-वृक्षाणां शाखाप्रशाखासु विश्रम्य ससुखं जीवनं समतिवाहयन्ति। यदा कदा त एते वानरा ग्राम्यगृहस्थानां क्षेत्राणि, वाटिकोद्यानानि च प्रविश्य शस्या-न्नफलादीनि प्रसभं भक्षयन्ति। क्षेत्रादिष्वनुपलब्धे चाहारे कपिपुङ्गवा ग्रामीण-गृहस्थानां गृहाङ्गणेषु गृहाभ्यन्तरेषु च यत्र तत्र सन्निहितान् खाद्यपदार्थान् शाकफलान्नादीन् प्रसह्य खादन्ति। न केवलं खादन्त्येव प्रत्युत कूर्दनैरुत्प्ल-वनैरारोहणावरोहणैस्ताभिस्ताभिश्च कपिकुलोचिताभिः स्वभावचेष्टाभिश्च क्रीडाकेलिकलहोत्पातैर्लोकान् प्रबाधन्ते। अनेन वानरकृतोपप्लवेन तत्र भूभागाञ्चले निवसन्तो ग्रामीणाः प्रजाजनाः सततं पीड्यमानाः क्लिश्यन्ति चेखिद्यन्ते च। इत्थं सततं जायमानं वानरोपद्रवमसहमाना ग्रामीणा लोका ग्राम्यपञ्चायतनेषु, नगरपालिकासु, शासनतन्त्राधीनासु समितिषु, सङ्घटनेषु च सर्वेषु वानरजातिविरुद्धमभियोगापत्तीर्निवेदयन्ति। परं तात्त्विकं किमप्यु-

पायान्तरममोघमनुपलभमानास्ते सर्वे सङ्घटनाधिकारिणोऽपि न तत्प्रतिक्रियां याथार्थ्येन कर्तुं पारयन्ते । आम्, यावच्छक्यं त इमेऽधिकारिणो जना यदा कदा वर्षे वर्षद्वयान्तरे वा तानिमान् कपियूथान् तद्विशेषज्ञैस्तान्त्रिकैर्मान्त्रिकैश्च ग्रामेभ्यो दूरमपसारयन्ति, परन्तु व्यतीते हि कस्मिंश्चित् कालान्तरे वानरसमूहाः पुनर्वनमागत्याधिवसन्ति, शनैः शनैः पुनरपि च प्रागिव ? स्वकीयां वानरीं प्रकृतिमनुसरन्तो लोकान् पीडयन्ति । भूयोऽपि च तेऽपवाह्यन्ते. ताड्यन्ते, किञ्चित्कालानन्तरं पुनस्तत्रायान्ति चेति क्रमः प्रवर्तते विपरिवर्तते च ।

[ २ ]

अथ तत्रैकस्य ग्रामस्योपसीम्नि, सरोवरोपकण्ठमेकस्यामाम्रवाटिकायां, वटपिप्पलनिम्बाशोकादिमहावृक्षनिकुञ्जे सघनच्छायशीतलायां भुवि भगवतो हनूमद्देवस्यैकं शिखरनिबद्धं महामन्दिरमास्ते । तस्मिंश्च देवालये पञ्चमुखाकृतेर्हनुमद्देवस्य दिव्यविग्रहोऽतीव भास्वरो मानवदेहादपि च स्थूलबृहदाकारो विराजमानो वर्तते । वज्रकठिनदेहस्य, सिन्दूराक्तमूर्तेर्विशालविस्फारिताक्षस्य, सततं तैलाभिषेकात् सुस्निग्धचिक्कणावयवस्य तस्य हनूमतो दर्शनात् सद्य एव हि रौद्रभीषणा भावाः समुदयन्ति दर्शकानां मनसि । सुकुमारमतयो बाला, निसर्गकोमलहृदया महिलास्तु तां हनुमन्मूर्तिं समीपतो नेत्रभरं द्रष्टुमपि न पारयन्ते । सत्यमेव हि सा कार्ष्णायसद्रढीयसी महावीरस्य मूर्तिः सचेतसां प्रौढानामपि चेतसि तद्दर्शनकाले भयमातङ्कमुग्रप्रभावं चोत्पादयति । नीरवनिस्तब्धेऽतितरां प्रशान्ते हि तत्रत्ये निर्जने वातावरणे दिवाऽपि च जनाः कोमलहृदयास्तत्र गन्तुं सहसा नोत्सहन्ते, किं पुनः प्रत्यूषे, प्रदोषकाले, घनान्धकारमय्यां निबिडनिशायाम् ! भगवतो हनूमत्प्रभोस्तस्य पाषाणमूर्तिविग्रह एव तादृशो भीषणरौद्राकृतिरतीव तेजोमयो वर्तते, यं दृष्ट्वैव सहसा धीराणा, वीराणां, सुदृढस्थिरचेतसां, स्थितप्रज्ञानामपि च हृदयं भयादुत्कम्पते । सर्वसाधारणानां ग्रामवासिनां मनसि सेयं धारणा बद्धमूलाऽसीत् यदसौ हनूमानेवाऽत्र भूभागे निवसतां ग्रामाणां रक्षकोऽस्ति । सर्वसमर्थो देव एकस्तथा च तत्र प्रदेशे वनान्तर्निवसतां वानरयूथानामपि चायमेवाद्यः कुलपतिरधिष्ठाता च विद्यत इति । प्रायेण प्रत्येकस्मिन् शनिवासरे, शुक्लाष्टम्यां, चतुर्दश्यां, पूर्णिमायां च तेषु महोत्सवेषु चास्य क्षेत्रपालस्य भगवतो हनूमतो मन्दिरप्राङ्गणे सुविशाले विस्तृते रमणीये च ग्रामीणा भक्तजनाः समवयन्ति, नद्या जले स्नात्वा हनूमन्तं तमिमं परमया श्रद्धया, प्रगाढभक्त्या च पूजयन्ति, पत्रपुष्पधूपनैवेद्यैस्तमर्चयन्ति, तैलाभिषेकं कुर्वन्ति, सिन्दूररक्तचन्दनादिभिर्लिम्पन्ति, कीर्तनानि च गायन्ति । इत्थं महोत्सवमङ्गलमाचरन्ति । केचनभक्ता 'हनूमान-चालीसा'–वाल्मीकिरामायणस्य

सुन्दरकाण्डादीनां स्तुतिस्तोत्राणां पाठपारायणादिकं च कुर्वन्ति। इत्थमस्य महावीरस्य महिमा विजृम्भते।

[ ३ ]

तत्र चैवंविधे देशे, काले, परिस्थितौ, वातावरणे च कश्चिदेको ब्रह्मचारी यदा कदाऽगत्य हनूमद्दर्शनं करोति। कियत्कालानन्तरं स किलैकस्मिन् ग्रामे पर्णकुटीमेकां विरच्याध्युवास। ग्रामेषु भिक्षाटनं कुर्वाणः सः क्रमेणाऽवश्यकान् सर्वान् पदार्थान् संजग्राह। गच्छति काले स भिक्षावृत्तिमनुपयोगिनीं मत्वा कमपि व्यापारव्यवसायोद्योगं कर्त्तुं मनश्चक्रे। स खलु हनूमद्दर्शनोत्सवेषु पूर्वोक्तविधेषु स्वग्रामतः 'ठेला' इति ख्यातायां चतुष्पद्यां शकटिकायां महावीरस्य तस्य हनूमतो भगवतः पूजोपहारोचितान्नानापदार्थान् नीत्वा लोकेभ्यो विक्रेतुमारेभे। ग्रामीणा जनाश्चापि तस्मात् साधोस्तान् पदार्थान् मूल्यविनिमयेन क्रीत्वा तद्देवसेवाविधावुपयुञ्जन्ति। स चासौ ब्रह्मचारी महात्मा तत्र क्रेयवस्तूनि विक्रीय भिक्षार्जनं विनाऽपि च स्वव्यवसायलाभांशेन ससुखं स्वजीवनं परिपालयति।

असौ महात्मा शिरसि जटाजूटं धत्ते। पञ्चकेशीं दधानोऽसौ कर्णान्तलम्बीनि श्मश्रूणि, वक्षःस्थलं संस्पृशतो लम्बकूर्चान् सदैव सुव्यवस्थाप्य तैलस्निग्धान् संरक्षति। भालपट्टे सुविशाले कृतविशालोर्ध्वपुण्ड्रस्तदधः सिन्दूरबिन्दुं विरचयति। यद्यप्ययमेकेनाक्ष्णा काणस्तथापि नेत्रयोर्द्वयोस्तन्वीं कज्जलरेखां विधाय तत्सौन्दर्यवर्द्धने सयत्नं चेष्टते। तस्यैकं नेत्रं तु सर्वथा गर्तप्रायं गोलकमिवाऽवशिष्यते परं स्वस्थमन्यन्नेत्रं ज्वलदङ्गारतेजस्कमरुणाभारक्तं सर्वमपि दृश्यप्रपञ्चं काक इव निपुणं भ्रुवोरपि कज्जलकालिमानमीषत्तैलस्निग्धं संस्पृश्य तदधो भस्मोद्धूलनरेखामेकां तन्वीं लाञ्छयति। कर्णयो रुद्राक्षमणिमये कुण्डलकल्पे लुलल्लुलिते भूषणे परिधत्ते। गले स्थूलस्थूलानां तुलसीकाष्ठमणीनां बृहतीं मालां नाभिरन्ध्रगामिनीं त्रिवलीकृत्य धत्ते। मुखेऽस्य सर्वतः शीतलाव्रणास्तमिमं साधुमहात्मानं भीमभैरवाकृतिमाख्यापयन्ति। कट्यां रक्तवस्त्रं रक्तकौपीनं, पादयोः काष्ठपादुके च विलसतः। स खलु सर्वास्वपि चाऽवस्थासु व्यायामाचरणात् प्रपीनपुष्टसर्वगात्रावयवः कृततैलाभ्यङ्गः स्निग्धचिक्कणदेहबन्धोऽस्यातीव दृढतरो लौहनिर्मित इव परिदृश्यते। तस्य स्कन्धयोर्द्वयोर्भुजदण्डयोश्च भस्मरेखात्रिवली सिन्दूराक्तं गजशुण्डादण्डमनुकरोति। तस्य हस्तप्रकोष्ठयो रुद्राक्षवलये विलसतः। स हि सर्वासु च हस्ताङ्गुलिषु स्वर्णरजतताम्रलोहादिधातुनिर्मिता मुद्रिकाः कुशमुद्रिकामेकां च दक्षिणपाणेः कनिष्ठिकामूले परिदधाति। यदाऽसौ सपादुकाचरण इतस्ततो यातायातं करोति तदा तत्पदध्वनिना सर्वेऽपि तं सद्यः परिचिन्वन्ति। तस्य गतिवेगाद्धरणीतलमुत्कम्पमिव जायते। यदाऽसौ स्वकीयां चतुष्पदीं व्यापारवस्तुशकटीं नीत्वा

हनुमन्मूर्तिसमक्षं गच्छति तदा प्रणम्य भगवन्त श्रीरामदूतं तच्चरणतले विद्यमानं शङ्खं समग्रेण प्राणबलेनाध्मायाध्माय दुन्दुभिं च मुहुर्ध्वनयित्वा दूर-दूरं यावत् स्वोपस्थितिघोषणामिव लीलया सर्वतो दिक् प्रसारयति । अयमपरोऽस्य विशेषो यद्धि प्रतिदिनमसौ नवनवास्तिलकरचना विस्तारयति । कदाचित् विन्दुमात्रं, कदाचिदर्धचन्द्राकारं, कदाचिदूर्ध्वपुण्ड्रं, त्रिपुण्ड्रं, भस्मत्रिरेखं वा तिलकं रक्तपीतश्वेतकेशरकुसुम्भवर्णैः स्वभालपट्टे विरचयति । वस्तुतः सोऽयं साधुर्निरक्षरो भट्टाचार्य एव तथापि प्रतिदिनं हनूमद्दर्शनवेलायां भूयो भूयः प्रणामैः प्रदक्षिणाविधिभिः सिन्दूरार्कपत्रपुष्पार्पणैर्हारमालासमर्पणैः शङ्खघण्टाघोषैर्धूपवर्तिकाप्रज्ज्वालनैस्तथान्यान्यैश्चाऽपि पूजाविधिविधानाडम्बरैःकर्मकाण्डघटाटोपं तथा प्रदर्शयति यमवलोक्य सर्वसाधारणा विशिष्टाश्चापि ग्रामीणा जनास्तत्प्रभाव-प्रभावितास्तं कामपि संसिद्धिमाप्तं योगिनं नैष्ठिकं कुलीनं विद्वांसमेव हि सम्भावयन्ति ।

इत्थं तत्र निवसतो दिनचर्याक्रमं व्यवसितस्य तस्य वक्रदर्शनस्य ब्रह्मचारिणो द्वित्रमासप्रायः समयो व्यतीयाय । स प्रायेण नित्यश एव हनूमत्पूजार्चनादिकं निर्वर्त्य स्वस्यविक्रेयपदार्थेभ्यः शेरपरिमाणांश्चणकानाऽदाय वनान्तरे कियद्दूरं गत्वा तांश्चणककणान् वानेरभ्यो विकिरति । वानराश्चापि तत्सम-क्षमागत्य चणकान् भक्षयन्ति । एवं कुर्वतस्तस्य वानरयूथैः सह परिचयः क्रमेण दृढतामापेदे । कतिचिद्दिनाऽनन्तरं तु वानरा नियतवेलं तत्रागत्य तमेव प्रतीक्ष-माणाः सन्तिष्ठन्ते स्म । तस्येदृशीं हनूमद्भक्तिं मर्कटोपासनां च विलोक्य गतानुगतिका लोकाश्चाप्यन्यान्ये तदिदं कर्म प्रशंसन्तस्तत्सकाशादेव चणकान् क्रीत्वा मर्कटेभ्यो भोजयितुमारेभिरे । एवं तद्धनूमत्तीर्थस्थानं वानराणां कृते विहारचर्याक्रीडाप्राङ्गणमिव रमणीयं बभूव । स च भक्तराजो ब्रह्मचारी महात्मा वक्रदर्शनो नित्यमेव हि तत्र गत्वा मारुतितीर्थे स्वदिनचर्यां निर्वर्तते, चणकविक्रयं कृत्वा-कृत्वा, बहु धनमुपार्ज्य, सायं स्वपर्णकुटीमाऽगत्य विश्राम्यति । एवं ससुखं जीवनक्रममनुवर्तमानः स भक्तोत्तमः स्वकीयां सिद्धतामास्तिकतां च प्रख्यापयन् जीवनचर्यामनुतिष्ठते ।

[ ४ ]

अथाधुना वक्रदर्शनो महात्मा लोकानां वानरीं भक्तिं दृढयन् प्रभूतानां चणकानां विक्रयं कुर्वाणो हि पुष्कलं धनमुपार्जयन्नास्ते । सैषा भक्तिस्तत्पक्षे तथा सद्यः फलदात्री समभूत् यत् सोऽनुदिनं चणकानाम् महाद्राशिं विक्रीणीते, ततश्च तत्पर्णकुटी धनधान्यसम्पन्ना सुवर्णरजतमुद्रामहीयसी च बभूव । स महात्माऽपि च लोकेभ्यो हनूमद्भगवतो भक्तेरुपदेशान् महोत्साहेन सटीकं व्याख्यायते । यो हि जनस्तस्योपदेशान्न बहु मन्यते, चणकांश्च वानरेभ्यो

चं सर्वजनसमक्षं समुद्घोषयति, निन्दति, तिरस्करोत्युपहसति च। यदा कदा तु मेलकादिषु धार्मिकेषु महामहोत्सवेषु स तथा घूमघोरणिभाषणान्युद्घोषयति, यथा तच्छृण्वन्तो लोका दुःखमनुभवन्तो वाक्क्षता अपरज्यन्ते। धर्मोपदेशव्याजेन स नवशिक्षितानां विशेषत आर्यसमाजानुयायिनां स तथा कट्वीमालोचनामरुन्तुदां धाराप्रवाहं करोति येन तत्रोपस्थितानां जनानां तद्भाषणमेव मुख्याकर्षणं समभूत्। स्वभावतः खलूद्दण्डोच्छृङ्खलप्रकृतिकः, पुनर्निरक्षरो भट्टाचार्यस्तत्रापि काणो महात्मा भाषणकाले तथा वर्णनाकारेण, स्वरध्वनिना, मुखाकृति-विकारैरेकेनापि चक्षुषा, ताभिस्ताभिः सर्वाभिर्वक्रिकटाक्षव्यङ्ग्यवचनचेष्टाभिः, परुषभाषणैरभिनयैश्च स्वतेजस्वितामाविष्कुरुते, यत्पश्यतां शृण्वतां च लोकानां हृदयानि विदीर्यन्ते स्म। ग्रामीणा बालाः स्त्रियो विनोदप्रिया लोकास्तु तदिदं सर्वं तच्चेष्टितं केवलं विनोदमात्रमुपहासजल्पितमिव गृह्णन्ति स्म, श्रद्धाजडा अशिक्षिता ग्रामीणभक्तास्तदिदं तस्य महात्मन अकाण्डताण्डवं भगवतो हनूमद्देवस्यावेशचमत्कारचाकचक्यं भावयन्ति स्म; किन्तु शिक्षिताः समाज-सुधारका नेतृत्वाभिलाषिणो राजनीतिप्रियाः सचेतसो मार्मिका मनस्तत्त्ववेत्तारो जनास्तु तत्त्वतो ह्रीदमित्थं जानते स्म यदसौ कस्मै प्रयोजनाय, कस्माद्वा हेतोः, केन वा बलातिरेकेणैतावद्दर्पायते, विकत्थते, जल्पति, वल्गति चेति।

एवं व्यवस्यतस्तस्य वक्रदर्शनस्य महात्मनः प्रायः पञ्चवर्षात्मकः समयो व्यतीयाय। को नु खलु प्रपञ्चेष्वेवंविधेषु फल्गुविषयेषु बत 'मनो दधीतेति सर्वैरपि नात्र परीवादो विहितो न च केनापि विरोधः कृतः। सर्वसामान्यैस्तदिदं वक्रदर्शनस्य दुर्दान्तमपचेष्टितमुपेक्षितमिवासीत्।

अथ गच्छति काले स महात्मा किञ्चिदिव रुग्णो बभूव रोगाक्रान्तत्वात् प्रचुरधनसम्पन्नत्वात् च वक्रदर्शनस्य मनोदशा चणकविक्रयकर्मणि मनाङ् मन्दतामिवाप। नित्यनियमेषु, दिनचर्याक्रमेषु च तस्य मनसि किमपि वैराग्यमिवो-दियाय। इत्थं जातायां स्थितौ तत्र हनुमत्तीर्थे वानरेभ्यश्चणकार्पणे पूर्णतः क्रमभङ्गो जातः। दैनन्दिनाहारविरहात् चणकास्वादरसिकास्तत्र वनाञ्चले निवसन्तः कपियूथाः स्वभावचपला भृशं चुक्षुभुः। महात्मानं वक्रदर्शनं तस्य चणकपूर्णां चतुष्पदीमपश्यन्तो वानरास्तत्र हनूमत्तीर्थे सर्वसाधारणान् लोकान् पीडयितुमारेभिरे। चणकप्रदायकैर्मानवैः सह सततमतिपरिचयात् निर्भीकता-मुपयाता धृष्टाः सन्तो मर्कटाः कदाचित्तत्र दर्शनार्थं गतानां जनानां वस्त्राण्याकृष्य दूरमपनयन्ति, कदाचित्तेषामन्नपानादिकं प्रसभमपहरन्ति, कदाचित् पूजोपहारान् बलादपनीय वृक्षशाखा आरोहन्ति, कदाचिन्मेलकावसरेषु जलपात्राणि दूषयन्ति भोज्यपदार्थांश्च प्रसह्यापवहन्ति, कदाचित् शिशून् बालान् कुमारान् कन्यका-

महिलाश्च सदन्तकटकटाशब्दं तर्जयन्ति, भीषयन्ति, घर्षयन्ति च । कदाचिद्वृक्षाद्वृक्षमवप्लुत्य मनुष्याणां स्कन्धेषु निपतन्ति, चिक्कुर्वन्ति, बुक्कुर्वन्ति, हस्तपादपुच्छास्फोटान् विदधति, दन्तघर्षणपूर्वकं घर्घरारावैर्हुङ्कारैश्च महोपद्रवानाचरन्ति, कदाचित् वृक्षशाखापर्णादीनि समुत्पाट्य जनानामुपरि पातयन्ति, कदाचिदुद्यानवाटिकासु लतापादपानपमर्दयन्ति, क्षेत्रेषु शस्यानि च विध्वंसयन्ति, कदाचित् ग्रामान् प्रविश्य गृहे गृहे घोरामतिकष्टां विप्लवलीलामातन्वते । इत्थं मर्कटोपद्रवैस्त्रस्ता भीता दुःखिताश्च जना क्लेशस्य परां काष्ठामन्वभूवन् । केचन लोकास्तु तमिमं वानरयूथकृतमकाण्डताण्डवं प्रलयकालमिवापरं लङ्काकाण्डमिव सर्वनाशकरं मेनिरे । कतिचित्तदिदं सर्वं महावीरस्य हनूमद्भगवतः क्षेत्रपालस्य तस्य कोपशापपरिणामविलसितमेव भावयामासुः ।

अथ गच्छति काले कदाचित् तत्र हनुमत्तीर्थक्षेत्रे मेलकमेकं प्रावर्तत । नानाग्रामेभ्योग्रामीणाः प्रजाजनास्तत्र समाजग्मुः । जाते हि बहुजनसम्मर्दे समुपस्थितेषु प्रजासङ्घेषु, हनूमत्पूजादिकं परिसमाप्य लोकैर्भोजनादिके प्रारब्धे वनान्तरात् वानरयूथाः सहसागम्य मध्येमेलकं समाचक्रमुः । उद्धता मर्कटा लोकसमूहेषु तथा निपेतुर्यथा लुण्टाकाश्चौराः सर्वतोहाहाकारः प्रावर्तत । 'त्राहि, त्राहि, रक्ष रक्ष !' इति समाक्रोशाः समन्ततः प्रसेरुः । सर्वेजना भीतास्त्रस्ताः कातराः कान्दिशीकाः किंकर्तव्यविमूढा यतस्ततः पलायमाना नात्मनः स्थितिं परिरक्षितुं प्रबभूवुः । को नु बत कं पृच्छेद्रक्षेच्चेति यद्वा तद्वातिभीषणा भयविक्लवा परिस्थितिः सर्वेषां समभूत् । सैषा वानरोपद्रवकथा तत्र भूभागाञ्चले क्षणादेव समन्ततो ग्रामेषु ग्रामेषु सर्वत्र प्रससार । तामिमां मर्कटोपद्रववार्तां श्रुत्वा नगरेभ्य आरक्षिविभागीयाः सैनिकाः सशस्त्रास्तत्र लोकत्राणाय सदलबलं समाययुः ! मृत्तराणि, शकटिकास्तथान्यान्यानि यानानि समारुह्य केचन कौतुकपरवशा नागरिकाजनाश्चापि तद्दृश्यं द्रष्टुमाजग्मुः । स्वयं वक्रदर्शनो महात्मापि च तदिदं वानरकृतमकाण्डताण्डवं प्रत्यक्षमीक्षितुं स्वग्रामसीमानमतिलङ्घ्याजगाम । यावत् राजकीया आरक्षिविभागाधिकारिणः सैनिकाश्च वानरानपवाहयितुं किमपि क्रियात्मकं शस्त्रास्त्रप्रयोगं कर्तुं चेष्टन्ते, तावदेव ते सर्वेऽपि च मर्कटयूथास्तं वक्रदर्शनं तत्रागतमभिवीक्ष्य पूर्वपरिचयात्तं सम्यक् परिचीय जातविश्वासा आश्वस्ताः स्वरक्षकं पोषकं सेवकमिवमन्वानास्तमेवात्मरक्षार्थं शरणं गताइव सर्वतस्तं परिवव्रुः । क्षणादेव शतशः सहस्रशश्च वानरा वक्रदर्शनं सर्वतः समावृण्वन् । सत्यप्येवं तद्दिने प्रागिव वक्रदर्शनस्य महात्मनः सविधे सा चणकापूरिता चतुष्पदी शकटी नासीत् । रिक्तहस्तोऽसौ महात्मा हनूमद्भक्तो वक्रदर्शनोऽकस्मात् वानरयूथैः परिवृतो भीतभीतस्त्रस्तो विक्लवोऽनिष्टशङ्कातङ्काकुलः कम्पमानसर्वाङ्गो यावत् स्वकीयां तामिमां विपत्परम्परावृतां स्थितिमव-

बुद्ध्यति, तत्प्रतीकारं वोपायान्तरमात्मरक्षार्थमनुचिन्तयति, तावदेव ते सर्वेऽपि च वानरास्तमाक्रमितुमिव चेष्टमांना स्तत्समीपमाजग्मुः। इदानीं वक्रदर्शनो 'हा, हतोऽस्मि ! म्रियमाणोऽस्मि !! मर्कटकृतोपप्लवान्वितरामाहतोऽस्मि !!! मत्युर्मे समुपस्थितोऽधुना !!! किं करोमि ? कं शरणमहं गच्छामि ?? को नु मामस्मान्महोपद्रवात् पायात् ? अत्याहितं ! अहह, भोः ! त्रायताम् !! त्रायताम् !!!' इत्याक्रोशन्तमेव हि तं केचन वानरास्तस्य स्कन्धयोरुल्लम्फ्येतस्तत स्तमारुरुहुः। केचन कपिपरिवृढास्तस्य वस्त्राण्याकृष्य प्रहर्तुमिवोदयुञ्जत। केचन तद्वासांसि छेत्तुमिवाचेष्टन्त, परे नखक्षतैस्तं खण्डशो विदारयितुमिवोपचक्रमिरेऽन्ये तत्केशजटाजूटमाकृष्याकृष्य प्रहर्तुमिवोदयुञ्जत। स च वक्रदर्शनो हाहाकारपुरस्सरं रोरुद्यमानो विलापकलापान् कुर्वाणो वानराणां मध्ये तिरोहितः स्वास्तित्वस्यान्त्यां दशां याति, तावदेव सार्वकारीया रक्षादलस्य सैनिकास्तत्रागत्य शस्त्रास्त्रप्रहारैर्लगुडाक्षेपैर्गोफणपाषाणव्याघातैर्नलिकास्त्रविस्फोटैर्ढक्कादिनानावादित्रघोषैः प्रोच्चैराक्रोशैस्तैस्तैश्चोपायशतैरन्यान्यैः कथमपि महता काठिन्येन तं मर्कटेभ्योऽरक्षन्। तं चापगतचेतनमिव विसंज्ञं मूर्च्छितंवानराणां नखदन्तापक्षतमर्द्धमृतमिव तस्यैवान्यत्र स्थापितायां चणकवाहिन्यां चक्रिकाचतुष्पद्यामारोप्य चिकित्सालयं निन्युः। तद्दिने जातं तं व्यतिकरं प्रत्यक्षमनुभूय शासनाधिकारिभिः प्रयत्नानां शतैरुपायान्तरैश्च वानरास्ततोऽपवाह्य दूरीकृताः ! वर्षान्तरं कथमपि तद्धनूमत्तीर्थस्थलं वानरबाधोपप्लवरहितं प्रशांतं च समभूत्। स चासौ महात्मा वक्रदर्शनः षण्मासान् चिकित्सालये व्यतीत्य स्वस्थो भूत्वा न जाने, क्व नु कुतः कदावा तस्माद्ग्राम्यनिवासादन्तर्दधे।

# शठे शाठ्यम्

एकदा नगरे किलैषा चर्चा कर्णपरम्परया प्रसरन्ती समश्रूयत यद्धि नगरस्य समीपे वर्तमाने शिवालये कश्चिदेकः संन्यासिप्रवरो यात्राप्रसङ्गात् पर्यटन् समागतोऽस्तीति। अथान्येद्युः सर्वतः सेयं चर्चा प्रचचाल यदसौ परिव्राड् सूर्योदयादारम्य सायंकालपर्यन्तं सन्ध्यापूजादिकं नित्यकर्म कुर्वाण एव तिष्ठति। ततो दिने दिने नागरिकाणां समाजेषु, सुहृन्मित्रगोष्ठीषु परिव्राजोऽस्य विषये नानाकथाः प्रावर्तन्त। केनचित् प्रोक्तम्—"सोऽयं सन्यासिप्रवरो महानेव विद्वान् प्रकाण्डपण्डितश्चास्ते।" अन्येनोक्तम्,—"अयं हि साधुमहाशयोऽतितरां भगवद्भक्तो रात्रिन्दिवं भगवन्तं परमेश्वरमुपासमानो धर्मकर्मसु निरतस्तिष्ठति।" अथापरः कश्चिदुवाच,—"अये! स एष परिव्राड् व्याकरणे, न्यायशास्त्रे, साहित्ये, नानाभाषासु चातीव व्युत्पन्नो विचक्षणो विद्यारसिकश्चतुरशिरोमणिश्च वर्वर्ति।" अन्यः प्रोक्तवान्,—"कथ्यते, यदसौ साधुर्महात्मा समग्रमपि भूमण्डलं पर्यटितोऽस्ति। ततो हि स आंग्लभाषायां, शर्मण्यभाषायां, रूषदेशीयायां भाषायाममरीकादिबहूनां देशानां भाषास्व पिव्युत्पत्तिमाश्रयते तत्तद्देशीया भाषाश्च सर्वाः साधिकारं वेत्ति, तथा च तासां सर्वासां भाषाणां साहित्यमपि च सम्यक् परिचिनोति। अस्माकं भारतदेशस्य तु सर्वाश्चापि प्रादेशिकीर्भाषास्तत्साहित्यं च साङ्गोपाङ्गं जानाति।" कश्चिदपरोऽवदत्—"अहो! सोऽयंसन्यासिप्रवरोऽतीव तेजस्वी, निस्पृहो, विरक्तश्चास्ते। भोजनाच्छादनादिषु विषयेष्वसावत्यन्तं निरपेक्षतां द्रढयति।" अथापर कश्चिदब्रूत,—"आम् सत्यमेतत्! ह्यो वयं पञ्चशः सुहृदः सायंसमये तद्दर्शनार्थमगच्छाम। सायंसंध्योपासनानंतरं तत्प्रवचनानि च वयमश्रृणुम :स खल्वतीव व्युत्पन्नो विद्वान् वेदवेदांत-धर्मशास्त्र-पुराण-ज्योतिषायुवेदादिशास्त्राणां यथार्थज्ञातां धाराप्रवाहं भाषमाणो विषयतत्त्व-निरूपणं सटीकं करोति। वयं तु तद्भाषणं श्रुत्वातीव प्रासीदाम प्रभाविताश्चाभूम।" अपरः कश्चनाब्रवीत्,—"वयमपि च दिनद्वयात् पूर्वं तत्समीपमव्रजाम। तत्र वर्तमानानामस्माकं नरेशमहोदयाश्चापि तद्दर्शनार्थमाजग्मुस्तस्य धर्माचारैस्त-द्भाषणेन, तस्य विद्वत्तया, तद्वचक्तित्वेन चास्मद्राजाधिराजः सुतरां प्रभावितो बभूव। अथास्माकं शासकमहोदयस्तस्य तावत् प्रभावं मेने, यत्तं स्वकीये हि

मृत्तरयाने समारोप्य तं राजभवनं निन्ये।" अन्यः कश्चिदुवाच,—"असंशयं स खलु तादृश एव। अस्माभिस्त्विदमपि श्रुतं यत् राजाधिराजोऽस्माकं सदैव रात्रौ तत्सकाशमागच्छति, तत्सत्सङ्गसुखमनुभूय प्रसन्नो हृष्टश्च ततः प्रतिनिवर्तते।"

इत्थं क्रमेण तस्य साधोर्वैदुष्यस्य, सदाचारस्य, चातुर्यस्य, धर्मप्रवणताया बहुभाषावेदितायाश्च चर्चा नगरे सर्वत्रापि प्रभूतां ख्यातिमाप्य सर्वतो व्यातेने। एतदपि च लोकैः स्पष्टतारमवालोकि यत् सोऽयं साधुर्महात्मा नित्यशो मध्याह्न-समये राज्ञा प्रेषितं मृत्तरयानमारुह्य राजभवने प्रवचनोपदेशार्थं यातायातं करोति। यैश्च राजकीयैरुच्चाधिकारिभिः, सेवकैं राजप्रासादभृत्यैश्च तत्र तद्दर्शनमकारि, ते सर्वेऽपि च राज्ञः प्रामाण्यात् गतानुगतिकमाचरद्भिस्तस्य साधोराश्रमस्थलं गत्वा तदुपासनायां महतीमास्थां निष्ठां श्रद्धां च दृढयितुमा-रेभिरे। "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।" इतिवत् सर्वेऽपि नागरिकाः पुरुषा महिला बाला बालिकाश्चापि साधोराश्रमं प्रत्याकृष्टास्तत्र गन्तुमारभन्त। गच्छत्सु दिनेषु प्रायेण नित्यमेव हि तत्र संन्यासिनों निवासस्थले किमपि मेलकमिव जायमानमिवादृश्यत। सदैव मध्याह्नोत्तरं तत्र साधोराश्रमेऽनेके नागरिकाः कुतूहलाकृष्टहृदया गच्छन्ति तत्सङ्गसुखं च मुदानुभवन्ति। सर्वेऽपि च सकामा नागरा जना यथावसरं तस्य साधोः सम्पर्कमधिकाधिकं समासादयितुं सयत्ना बभूवुः। कश्चिद्धर्मदीक्षार्थमपरो मंत्रशिक्षार्थमन्यो धनाप्तये, परो राज्ञः प्रसादाय, कश्चन सत्सङ्गधियाऽपरो व्याधिविघाताय, कश्चित् शत्रुकृतां बाधामपनेतुं, कश्चन केवलं चमत्कारचाकचक्यं दिदृक्षुरथान्ये मनोविनोदाय, सायन्तनं वायुसेवनं कर्तुं कालक्षेपणाय वा तस्य महात्मन आश्रमपदं गन्तुमारभन्त।

तदिदं सर्वं श्रुत्वा दृष्ट्वा च तन्नगरनिवासिनो ब्राह्मणपण्डिता राज्या-श्रिताः सर्वे तं संन्यासिप्रवरं प्रति समाकृष्टास्तत्सङ्गगोष्ठीषु सममिलन्। एवं क्रमशस्तस्य साधोस्तत्र नगरे महती ख्यातिः, कीर्तिः, प्रतिष्ठा, सम्भावना सम्मानना च सर्वतो जायमाना समभूत्। स्वयं महान्तो विद्वांसोऽपि च द्विजपण्डिता नित्यमेव तं साधुं स्वगृहे भिक्षाहारादिकं कर्तुमामन्त्रयन्। तस्य यतेः कौपीनं कमण्डलुंच गृहीत्वा लोकास्तं स्वगृहन्निन्युर्विधिविधानपूर्वकं पञ्चोपचारैः षोडशोपचारैश्चादौ सम्पूज्य भक्त्या परमया च तमभोजयन्। भोजनान्ते च तस्मै दक्षिणाद्रव्यं वस्त्रादिकं च समर्प्य ससम्मानं तं व्यसृजन्। एवं तत्र निवसतस्तस्य महात्मनः संन्यासिनो दिवसा गच्छन्ति।

## २

अथास्मिन्नेव नगरे प्राणजीवनो नाम कश्चित् ब्राह्मणपण्डितो गृहाश्रमस्थो वर्तते। स खलु मुख्यतो राजसभापण्डितोऽपि राज्ञोऽनुरोधात्तत्रत्ये स्थानीये

विद्यालये बालकेभ्यः संस्कृत–हिन्दी–साहित्यविषयान् पाठयन्नास्ते। पौर्वात्य-विद्यासु व्युत्पन्नः स प्राणजीवनो भारतीयदर्शने सुतरां व्युत्पन्नोऽस्ति। प्राचीन-विद्याविज्ञोऽपि च प्राणजीवनो राज्ञा सह नानादेशेषु पर्यटनात् वर्तमानविश्वस्य समस्तानपि गतिविधीन् तत्त्वतो वेत्ति। विज्ञानराजनीत्यर्थशास्त्रादिविषयेषु चापि काममपि व्यावहारिकीं परिचितिं साधीयसा प्रकारेण धत्ते। स किलांग्ल-भाषामपि कार्यक्षमां जानीते। कुलीनो ब्राह्मणवंशजन्मा प्राणजीवनः साहित्य-सङ्गीतचित्रकलासु प्रवीणो विदग्धमतिको रसिकहृदयो बहुश्रुतः सभाचतुरः प्रौढो वक्ता पुराणकथापारायणादिषु धार्मिकेषु कर्मकाण्डक्रियाकलापेषु चापि महान्तमधिकारं धत्ते। प्रगतिशीलविचारवानसौ प्राणजीवन आर्यसमाज-सिद्धान्तेष्वपि श्रद्धां विश्वासं च यावद्ग्राह्यं दृढयति। भुक्तभोगत्वात् प्रौढानु-भवशीलत्वाच्च प्राणजीवनपण्डितोऽसौ नैवंविधेषु गतानुगतिकेषु जनसम्मर्द्दबहुलेषु कोलाहलविशिष्टेषु प्रसङ्गेषु मोदते। विशेषतो नवागन्तुकैः सह सम्पर्कपरि-चयादिस्थापने जनसाधारण इव नो सहसा समुत्कण्ठते, न च त्वरते। वस्तुतः प्राणजीवनो वर्णाश्रमसनातनधर्मानुयायी परमास्तिको भगवत्परायणो भावुकोऽपि सन्न कस्मिन्नपि कार्ये सहसां प्रवृत्तिं कुरुते न च शीघ्रकारिता चास्मै रोचते। एषु दिवसेषु तस्य भार्या गर्भिणी समासन्नप्रसवा चास्ते, ततो हि स गृहकार्ये-ष्वतितरां व्यापृतो व्यस्तसमस्तश्च तं संन्यासिप्रवरं साक्षादद्रष्टुं नापारयत्।

३

अथाद्य नगरे कस्यचित् ब्राह्मणस्य गृहे सः पूर्वोक्तः परिव्राड् भिक्षां स्वीकर्तुं समायातोऽस्ति। तत्र गृहे ब्राह्मणस्य तत्कौटुम्बिकाः सम्बन्धिनो मित्राणि सुहृदः प्रतिवेशिनः परिचिताश्चानेके जनाश्चापि संन्यासिनस्तस्यातिथेः सम्भावना-र्थमागतास्तं परिव्राजं परितो यत्र तत्र निषण्णाः सन्ति। अथ च प्रारम्भिकोप-चारविधेः सम्पादनान्तरं केचन प्रकीर्णा वार्तालापास्तत्र प्रावर्तन्त। प्रसङ्गे प्राप्ते संन्यासिना पृष्टम्—

"अत्र श्रीमतां नगरेऽस्मिन्ननु को हि खलु शास्त्रज्ञो विद्वान् प्रामाणिको ब्राह्मणेषु युष्मासु वर्तते?"

क्षणं यावत्तत्र निःस्तब्धता प्रससार। क्षणादनन्तरं मुहुरपि तेन संन्यासि-प्रवरेण स एव प्रश्नः पृष्टः। तदा तत्रोपस्थितेषु ब्राह्मणेषु कश्चिदेको वृद्धजनः प्राह—"भगवन्! अत्र ग्रामप्राये नगरे को नु खलु विद्वान् भवेत्? वयं सर्वेऽपि ब्राह्मणा राज्याश्रिताः परम्परागतां राज्यप्रदत्तां जीविकावृत्तिमुपभुञ्जानाः कथमप्यात्मानं कुटुम्बजनांश्च परिपालयन्तो जीवनं निर्वहामः। वस्तुतो नैकोऽपि समर्थः प्रामाणिको व्युत्पन्नो विद्वान् शास्त्रज्ञोऽत्र वर्तते तथाप्यल्पज्ञानल्पशिक्षि-

तानपि सर्वानस्मान् ब्राह्मणान् सर्वे पण्डितानेव मन्यते। **'अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः।'** इतिवदत्र सर्वेऽपि च ब्राह्मणाः पण्डिताः परिगण्यन्ते। पुनरत्र राजाश्रयात् राज्ञः प्रियत्वात् वृत्तिबाहुल्याद्वा परस्परापेक्षया केचन वरिष्ठाः पण्डिताः केचित् सामान्याश्च प्रोच्यन्ते। राज्ञः प्रमाण्यात् सर्वेऽपि च प्रजाजना अत्रत्यान् ब्राह्मणपुङ्गवान् पण्डितपदवाच्यान् व्याहरन्ति, सर्वांश्चैतान् पूज्यान् श्रद्धेयान् सम्मान्यांश्च भावयन्ति।"

**संन्यासी**—"सत्यप्येवं कश्चित्तु युष्मासु शास्त्रज्ञः पण्डितो व्युत्पन्नः स्यादेव। निर्विशङ्कमुच्यताम् ननु कोऽत्रभवत्सु प्रतिभासम्पन्नो विद्यते पण्डितः? अन्ततः सैषा राजधानी वर्तते, राजा चात्रत्यो विद्वान् विचक्षणो धार्मिकश्चास्ते, ततः कोऽपि विद्वांस्त्ववश्यमेव भवेदेव।"

श्रुत्वैनं साधुमहात्मना कृतं प्रश्नमेकः प्रौढवया विप्रोऽवदत्,—"भगवन्! गुरो!! अत्रत्याः सर्वेऽपि च ब्राह्मणाः सामान्यतः पण्डिता एव सन्ति, परमिदानीमत्र नगरे प्राणजीवन एव पण्डितो वरिष्ठ इति मन्यते। सर्वैरपि नागरिकैर्नृपतिना च स एव हि बह्वाद्रियते। राज्ञः कृपापात्रमपि स एव विशेषेण वर्तते। तस्य जीविकावृत्तिश्चापि विपुला। स एव हि समये-समये राज्ञः सकाशात् दानदक्षिणादिकं पुरस्कारादिकं च प्राचुर्येण लभते। अतः स एवात्र विद्वद्धौरेयो मतोऽस्ति लोकैरस्माभिश्च।"

**कश्चिदन्यो युवा**—"अयि, महात्मन्! प्राणजीवनो बत नास्त्येव तादृशः कोऽपि महापण्डितः परन्तु राज्ञा बहुमतत्वादेव स पण्डितायते। 'भर्तुः प्रियैव सौभाग्यवती!' इतिवत् सोऽत्र पण्डिततः परिगण्यते।"

**संन्यासी**—"अथ स किं कुरुते राज्ये नगरे च?"

**अपरः कश्चनाह**—"स किलात्र विद्यालये प्राध्यापको ऽस्ति। प्रातः सायं स राजसेवां विधते, मध्याह्ने चासावध्यापकत्वं सम्पादयति। अपि नाम समर्थाः पण्डिताः कस्यापि 'नौकरीं' कुर्वन्ति? मनीषिणस्तु सर्वतन्त्रस्वतन्त्राः स्वाधीनचेतसो भवन्ति। 'नौकरीं' कुर्वाणा जनाः कथं पण्डिता भवितुमर्हन्ति? अहं तु तमेतं प्राणजीवनं नैव पण्डितं मन्ये।"

**संन्यासी**—"नन्वस्माभिस्तु तावन्नेदानीं यावत् दृष्टो ऽसौ प्राणजीवनः।"

**अन्यो ब्राह्मणः**,—"भगवन्! यतिप्रवर!! क्षाम्यन्तु तामिमां मे स्पष्टोक्तिम्। परमेतन्महता दुःखेनोच्यते, यदसौ प्राणजीवनोऽतीवोद्दण्डोऽस्ति। स खलु राज्ञा बहूपलालितोऽखर्वगर्वमावहति। अस्मदादींस्तु स तृणाय मन्यते। विद्वांस्तु स नांशतोऽपि वर्तते परन्तु धनवैभवसम्पन्नत्वात् 'अन्धेषु

काण एव विचक्षणः' अथवा 'निरस्तपादपे देशे ह्येरण्डोऽपि द्रुमायते ॥ 'इति सूक्तिमिमां चरितार्थयन् पण्डितायते ।"

**अन्यः कश्चित्**—"महात्मन्, प्रभो ! श्रीमत्पादानां यतिप्रवराणां दर्शनार्थं स कथमागच्छेन्नाम ! श्रीमन्तस्तु निखिलशास्त्रार्थतत्त्वपारङ्गता नैष्ठिकाः संन्यासिप्रवराः । भवत्समक्षं यदि स समागच्छेत्तदा तु तस्य पाण्डित्यं पाखण्डावरणाच्छन्नं ननु नग्नतामपव्रजेन्नाम नूनम् !"

**अपरः**—"अये, स खलु महानेव धूर्तदिगम्वरो दाम्भिकशिरोमणिश्च वरीवर्ति । वृथैव पाण्डित्याडम्बरं वतात्र ग्रामीणेषु विस्तारयति ! क्व नु खल्विमेऽत्रभवन्तो भवन्तो वागीशकल्पा अशेषशेमुषीजुषो विद्वत्तमाः संन्यासिपरिवृढा वीतरागाः सर्वंसहा यतिप्रवराः क्व चासौ प्राणजीवनो वराको जीवः ? अन्तरं महदन्तरम् ! सूर्यस्य पुरतः कीटमणिः कथं नु बत स्वात्मप्रकाशं विद्योतेत ? उक्तं च–"**खद्योतो द्योतते तावत्, यावन्नोदयते शशी ।**

**उदिते तु सहस्रांशौ, न खद्योतो न चन्द्रमाः** ॥१॥ ॥इति॥

**संन्यासी**—"स्यात् कदाचिदेतत् सत्यम् । मयापि च तद्विषये क्वचिदेवमेव श्रुतम् ।"

**अन्योद्विजः**—"श्रीमन् ! नात्र स्याद्वादस्यावकाशोऽणीयानपि । स खलु प्राणजीवनो बहिस्तस्तु स्वात्मानं सनातनवर्णाश्रमधर्मानुयायिनमुद्घोषयति, परमेतत् किल तस्य बाह्याडम्बरमात्रम् । अन्ततस्तु स दयानन्दमेवैकमात्रं महर्षिमाम्नायते । आर्यसमाजे तस्य महती हि श्रद्धा । स तु 'सत्यार्थप्रकाशमेव निगमागमसारस्वरूपं सम्भावयति ।'

**अपरः**—"अरे ! स खलु नास्तिको निरीश्वरवादी च वर्तते ! देहात्मवाद एव तस्य द्रढीयसी निष्ठा ! स हि विद्यालयेन समायोजितेषु महोत्सवेषु सर्ववर्णानां भैरवीचक्रस्वरूपेषु स्वभाषणे समाक्षिपति वेदोक्तं धर्मम् । स पुनस्तत्र सर्वैः सहान्नपानादिकं निर्विशङ्कं भुङ्क्ते !!! असमज्ज्ञातीयास्तु प्राणजीवनं तं जातितो बहिष्कर्तुमेव चिन्तयन्तः सन्ति परं स राज्ञा बहुमतस्ततस्तदपेक्षया ज्ञातयोऽपि च तस्येमं दुर्व्यवहारं कथमपि सहमानास्सन्ति । तस्मादेव स नेदानीं यावत्तस्य भ्रष्टाचारतिरस्कृतो ज्ञातिभिर्न च दण्डितो बहिष्कृतश्च ज्ञातिसमष्टेः !"

**एकः कश्चित्**—"स्वामिन् ! किमधिकं वयमत्र प्राणजीवनस्य चारित्र्यविषये ब्रूयाम ? परन्तु प्रसङ्गानुगतं वक्तव्यमेव भवति । 'अब्रुवन् विब्रुवन्वापि नरः किल्विषमश्नुते ।' इति वचनानुरोधादनिच्छतापि मयात्र निवेद्यते यत्

सोऽयं प्राणजीवनो ऽतिविचित्रस्वभावोऽस्ति। वस्तुतो दासत्वमेव तस्यमुख्यो गुणः! चाटुकारिता तस्यापरो हि विशेषः। स खलु सततं राजप्रसाददेहल्यां प्रभुसेवनोन्मुखतिष्ठस्ति। राज्ञः समीप वर्तिनो भृत्यादीन् स सर्वात्मनाराधयन् स्वार्थान्धो विचेष्टते! रात्रिन्दिवं संततसम्पर्कान्न कोऽपि तस्य महतोऽपि दोषान् राज्ञः समक्षं कथयति। इत्थमपकौशलात् स्वाकारं प्रच्छाद्य, सर्वानऽपि चाधिकारिणो, भृत्यान्, दासदासीश्च वञ्चयित्वा कथमपि स्वयंसिद्धतामात्मनः प्रख्यापयति। इत्थं स वरिष्ठपण्डितत्वमुपभुञ्जानो मोदते। अन्यत् किम्!!"

**संन्यासी**—"सेवाभावोऽपि च मनुष्येष्वेको महानेव गुणः। राजानस्तु पुनस्तमेव जनंहितैषिणं मन्यन्ते यो हि निरन्तरं तानुपसेवते। विशेषतः कलियुगे ऽस्मिन् गुणेभ्योऽपि सेवासाधना गरीयसी प्रसिद्ध्यति। सद्यः फलं प्रयच्छति सेवासपर्या। अद्यत्वे सेवामाचरन्तो जना एव तत्कालं पूजां, प्रतिष्ठां, दानमानादिकं, सत्कार च लभन्ते। प्राणजीवनपक्षेऽपि च तदिदं सर्वमेवमेव कदाचित् सत्यं भवेदिति सम्भवति -"

**कश्चिद्वपरः**—"न हि, न हि, भगवन्! प्राणजीवनस्तु चाटुकार एव। तस्मिन् पाण्डित्यं तु नाममात्रमपि नास्ते। परमसावतीव वाचालो जल्पाकश्च वर्वर्त्ति। अशिक्षितानां शास्त्रज्ञानशून्यानां पुरतो नानाविधानि सुभाषितानि, काव्योक्तीर्भाषणादीनि च समुच्चार्य लोकोक्तीः कथापरिसम्वादान् हास्यविनोदादींश्चकृत्वा विदूषक इव दुर्विचेष्टतेऽसौ पामरः प्राणजीवनः। लोकानां मनोरंञ्जनमात्रं कृत्वा सर्वसाधारणानां राजसभासदां च प्रियत्वमापाद्यमानो मुहुर्मोमुद्यतेऽसौ प्राणजीवनो भृशम्।"

**एको वृद्धजनः**—"अरे! किमर्थं त्वमत्र वृथाक्षिपसि प्राणजीवनपण्डितम् परोक्षे स्वामिवर्याणां पुरतस्तं निन्दसि? (संन्यासिनं प्रति) भगवन्! स खलु नवशिक्षितोऽति। स खलु ज्ञातिसमाजे प्रचलितं रूढिवादं न बहु मन्यते। स किल काशीं गत्वा किमप्यधीतवानस्ति। वयं तु तत्त्वतस्तस्य शास्त्रीयां योग्यतां न परिचिनुमस्तथापि लोकाः कथयन्ति यदसौ व्याकरणे, न्याये, साहित्ये, ज्योतिषि तथायुर्वेदादिषु विषयेषु कामपि महतीं योग्यतां व्युत्पत्तिं च धत्त इति।"

**अपरः**—"एतत् तु सत्यम्। प्राणजीवने च केचन गुणाश्चापि प्रभावोत्पादका वर्तन्त एव। स खलु बहुषु विषयेषु विचक्षणः। स वाग्विलासचतुरः। काव्यपाठे पटुर्वार्ताविनोदरसिकः प्रत्युत्पन्नमतिर्नीतिनिपुणश्चास्ते। तस्मादेव स राज्ञो बहुमतो राजसभासदां मनोविनोदं कुर्वाणः सर्वानपि स्वानुकूलान् सम्पाद्य नृपतेः प्रियस्तद्विश्वासभाजनमन्तरङ्गश्च समभूत्। अपि नो खल्वेते मानवोचिता गुणाः?"

अन्यः कश्चित्—"नन्वत्र किंनाम पाण्डित्यं भोः ? एतत् सर्वं तु नटानां विटानां विदूषकानामेवापकौशलम्, हीनवृत्तिकानामेव चातुर्यम्, न तु पूज्यानां वर्णगुरूणां कुलीनानां विदुषां भूदेवानामनुरूपम् । न जानाति किं भवान् यद्धि हितोपदेशे विष्णुशर्मणोक्तामुक्तिमिमाम्—

—"न नटा न विटा न गायकाः,
न पर द्रोह निबद्धबुद्धयः ।
नृपसद्मनि नाम के वयं,
स्तनभारानमिता न योषितः ॥१॥"

अन्यः कश्चित्—"अथा सौ राजा किं जानीयादस्माकं शास्त्रयोग्यतां पाण्डित्यतत्त्वरहस्यं वा ? अयं हि नरेशोऽस्माकं केवलमांग्लभाषाशिक्षितः । आंग्लाचारविचारपद्धतिमेव सर्वात्मनानुवर्तते शासकोऽयमस्माकम् । पुनरय-मधुना तरलतरुणे वयसि वर्तमानोऽस्ति । स स्वयं शास्त्रज्ञानशून्यो वेदवेदान्ता-दिशास्त्राणामनाघ्रातगन्धः केवलं पाश्चात्यवाङ्मयमेवाधीतचरोऽस्ति । तेनैवासौ धूर्ताचार्यमिमं प्राणजीवनं तस्य वाक्चापल्यात् पण्डिताभासमपि पण्डितमेव मन्यते । वस्तुतस्तु प्राणजीवनोऽसौ न मनागपि पाण्डित्यमावहति । स च पुनरत्र राज्ञः कृपावलादत्रत्यान् सर्वान् लघुमहतो ब्राह्मणान् बहुशस्तिरस्करोति । अखर्वगर्वोद्धतः स न कमप्यन्यं द्विजं पण्डितं, शिक्षितं विद्वांसं वा मन्यते । स चासौ सर्वेषामपि राज्याश्रितानां ब्राह्मणजन्मनां वृत्त्युपरोधं कुर्वाण एकल एव भुङ्क्ते सर्वानपि राजकीयान् भूरिभोगान् । तेनैवासौ स्थूलकायो बलिपशुरिव लम्बोदरोऽस्ति सञ्जातो भूयो भूयो विकत्थतेऽपचेष्टते च । इत्थं स ज्ञातिकण्टक एव नास्तिकाधमः !"

अन्यः—"यदि चैवं न स्यात्तदा किमर्थमेतावत्कालपर्यन्तं स्वामिचरणानां दर्शनार्थं नागतः ? कथमागच्छेन्नाम ? यदि स स्वामिपादानां समक्षमागच्छे-त्ततोऽस्य सर्वापि कापट्योपार्जिता दम्भप्रतिष्ठा क्षणादेव विलयं व्रजेदिति भिया नागच्छति धूर्तः !"

अपरः—"नैवम्, नैवम् ! मम मते तु सोऽस्मादेव हेतोर्नायाति यद्धि स स्वामिनां दर्शनार्थमागच्छेत्तदा यतिप्रवराणाममीषां किमपि पूजासत्कारादिकं दानदक्षिणादिकं च समर्पितव्यं भवेन्नाम नूनम् । श्रद्धयाऽश्रद्धया वा लोकापवाद-भिया ज्ञातिसामान्यलज्जया वापि च तेन किमपि कर्तव्यं स्यादेव । तत एव स नायाति । स तु ब्राह्मणानां देवगंवादीनां यतीनामतिथीनां सम्भावनं पूजनादिकं सर्वं निरर्थकं मन्यते । तत एव हि मासद्वयं यावन्नगरेऽस्मिन् स्वामिचरणानामधि

वसतामपि तेन दर्शनमपि नो व्यधायि । अस्तु, किमस्माकं परनिन्दया परापवाद प्रकरणेन वा प्रयोजनम् ?"

**अन्य :**—"क्व नु बत तस्यैवंविधं भाग्यवैभवं येन स ब्रह्मीभूतानां श्रीमत्स्वामिपादानां निखिलशास्त्रपारङ्गतानां सत्सङ्गसुखमाप्नुयात् ! वयं तु स्वामिमहाभागानां सङ्गतिलाभेन स्वात्मानं धन्यधन्यं कृतकृत्यं च ? विदध्महि ! दूरमेव तिष्ठतु सः पामराधमो जघन्यः प्राणजीवनः !"

**स्वामी:**—"अस्तु तावत्, सैषाकथात्रैव विरमतु । प्राप्तकालं वयं प्राणजीवनमपि द्रक्ष्यामः । सति प्रसङ्गे प्राणजीवनोऽपि कदाचिदस्मद्दृष्टि पथमागच्छेदेव । अधुनातुवयं चातुर्मास्यं यावदत्रैव स्थास्यामः ।"

[ ४ ]

राजकीयो विद्यालयः । अध्यापकानां कक्षे केचन प्राध्यापकाः सुखमुपविष्टाः परस्परं वार्तालापान् कुर्वाणाः सन्ति । प्रधानाध्यापकोऽपि च तत्र वर्तमानोऽस्ति । अथैकः प्राध्यापको वार्तालापस्योपक्रमं कुर्वन् वार्ताप्रसङ्गमित्थमवतारयति—

"इदानीं नगरेऽच कोऽपि संन्यासिप्रवरः समायातोऽस्ति । कथ्यते, स खलु संस्कृतस्यातीव प्रकाण्डो विद्वान् सर्वशास्त्रेषु व्युत्पन्नःप्रतिभावान् विचक्षणश्च वर्तत इति ।"

**द्वितीय:**—"मया तु किलैतदपि श्रुतं यत्तस्य परिव्राजः प्रभावमत्रत्यः शासकोऽपि च बहु मन्यते । वहवो नागरिका लोकाश्चापि तद्दर्शनार्थं, तदुपदेशप्रवचनादिकं श्रोतुं च प्रतिदिनं प्रातः सायं च तत्समीपमुपगच्छन्ति, तस्य योग्यतां च भूयो भूयः प्रशंसन्ति ।"

**तृतीय:**—"सत्यमेतत् । मयापि च श्रुतं यद्धि महाराजोऽत्रत्यस्तस्य स्वामिनः सकाशान्नित्यमेव हि धर्मोपदेशप्रवचनानि शृणुते, तस्मात् गीतामपि च शिक्षते । महाराजोऽस्य संन्यासिप्रवरस्यातीवादरं सम्मानसत्कारादिकं च समाचरति ।"

**प्राध्यापक:**—"स खलु कस्य विषयस्य वर्तते ननु विद्वान् ? स कियत्सु विषयेषु व्युत्पत्तिं दृढयति ?? कियतीर्भाषाश्च सोऽधिकरोति ???"

**प्रथम:**—"स खलु संस्कृतज्ञो विद्वान् पौर्वात्यवाङ्मये साधिकारं व्युत्पत्तिं धत्ते, इति श्रुतं मया स्थानीयेभ्यो ब्राह्मणपण्डितेभ्यः । मया चैतदपि श्रुतं यत् स संन्यासिमहाशयोऽतीव क्रोधनोऽखर्वगर्वश्च वर्तते ! यदाकदाऽकारणमेव सः प्रकुप्यति ।"

द्वितीयः—"कथं न स्यादेवम् ! योहि समग्र ससारमेव, कुटुम्वं, परिवारं, ज्ञातीन्, समाजं किं बहुना सर्वस्वमेव त्यक्त्वा वीतरागत्वं गतो विरक्ताचरणो जातस्तदा तस्य कस्मादपि कापेक्षा ? तेन कस्मादपि किमर्थं भेतव्यं भवेत् ?? सत्यमुक्तम्—'निःस्पृहस्य तृणं जगत् !'

तृतीयः—"यदि चैवमेवस्यात्तदा तस्य शासकोपासनेन किं प्रयोजनम् ? स किल दानदक्षिणां पूजासत्कारादिकं राज्ञा कृतं सम्मानं त्वपेक्षत एव ! एवं सति तस्य किं नाम वैराग्यम् ? असारमिव संसारं मत्वा यो हि सर्वमपि लौकिकं प्रपञ्च तत्याज तस्य धनेन, मानेन वा किं प्रयोजनं भवेत् । उक्तं च—

"प्रतिष्ठां शूकरीं विष्ठां, गौरवं घोररौरवम् ।
मानं चैव सुरापानं, त्रयं यक्त्वा सुखी भव ॥१॥"

प्रथमः—'अहं तुमन्ये, यदद्यत्वे केचन पलायनवादिनोजनाः—विशेषतः संस्कृतशिक्षिता ब्राह्मणाः—यदा सांसारिकेषु पुरुषार्थोद्योगेषु स्वावलम्बनात् कामपि भौतिकीं सिद्धिमासादयितुं सक्षमा नो निष्पद्यन्ते, तदा काषायकौपीनं परिधाय, पलाशदण्डं, काष्ठकमण्डलुं च गृहीत्वा, भिक्षुकवृत्तिमाश्रित्य यत्र तत्र स्वच्छन्दं विहरमाणाः प्रव्रज्यामिषात् कथमपि स्वसुखं साधयन्ति, जीविकोपार्जनं कुर्वन्तो येन केन प्रकारेण स्वोदरदरीपूरणं च विनायासं कुर्वाणा मोदन्ते ।"

प्रधानाध्यापकः—'अयिभोः ! जानेऽहं तानिमान् संस्कृतज्ञान् साधून् महात्मनः । अस्मिन् हि विज्ञानार्थशास्त्रराजनीतिप्रधाने भौतिके युगेऽपि च ते हीतो दशसहस्रवर्षेभ्यः प्राक्तने समये जीवन्ति, तद्युगीनमेव सर्वमिदमित्थं सत्यं मन्वानास्तादृशमेव जगद्व्यवहारं जानते । अद्यत्वे विज्ञानधनेऽस्मिन् भौतिके युगे ननु तत्कल्पनाकारा समाजरचना, सा राजनीतिस्तच्चार्थशास्त्रं कथमिव जगद्धिताय सम्भवेन्नाम ? ते तु बत कल्पनालोके दिवास्वप्नमिव पश्यन्ति, तदनुसारमेव च चेष्टन्ते । तानेतान् मुण्डितशिरस्कान् संन्यासिनो मठाधीशान् मोहांस्तान्, देवपूजकान् यजमानवृत्तिकरान् प्रति न मे कोऽपि श्रद्धाभावो जागर्ति । पुनरिमे संस्कृतज्ञाः केवलमेकां संस्कृतभाषामेवाल्पाल्पां जानन्तो नव्ययुगीनं सर्वमपि ज्ञानं विज्ञानं च निस्सारं निरुपयोगि तुच्छमिव मन्वते । स्वयं ते भाषाशास्त्रं, भाषान्तराणि च न जानते, न च राजनीतिमद्यतनीं समाजशास्त्रं चाधीयते । नैकाधिकासु भाषास्वधिकारं दधते । न ते नवराष्ट्र-निर्माणे, समाजसङ्घटने सार्वजनीनसेवासु, स्वदेशाभ्युदयाय च किमपि त्याग-मुत्सर्गं बलिदानं वार्पयन्ति । अन्ताराष्ट्रियं सर्वं तु तेऽस्पृश्यमिवाकलयन्तो जातुचिन्न स्पृशन्ति । सत्यप्येवं ते पुनरेकभाषाज्ञानमात्रेण सर्वज्ञत्वाहङ्कार-माविष्कुर्वन्ति । अवसरं, देशकालपरिस्थितिवातावरणं सम्यगपरिचिन्वानास्ते

प्राप्तकालमकाण्डताण्डवमातन्वते, ज्ञानगर्वाच्च यद्वा तद्वा विकत्थन्ते । अति विचित्रमेतत् !"

द्वितीयः—"अयमपरो हि विशेषोऽमीषां यत्ते केवलं व्यक्तिगतं मोक्षमेव सर्वातिशायि पुरुषार्थं समर्थन्ते । ते तु बत स्वाश्रममात्रं स्वदेहमेवाखिलं विश्वं भावयन्ति । 'चिदानन्दरूपः शिवोऽहं शिवोऽहम् । रटन्तो देशस्य, समाजस्य, राष्ट्रस्य च हितमस्तित्वं वा विद्यमानं न मन्वते । समग्रं विश्वमिदं कियद्विस्तृतं सुविशालं च वर्तते, तत्तो नांशतोऽपि समवगच्छन्ति । अन्ताराष्ट्रियं मानव जातेर्हितचिन्तनं तु दूरापास्तम्, ते प्राचीनतत्त्वज्ञानादृते न किमपि प्रामाणिकं कर्तव्यं वाकलयन्ति । प्रत्यक्षं वर्तमानस्याप्यस्य जगतोऽस्तित्वे बहु शङ्कन्ते । इत्थंविधा भवन्ति सङ्कीर्णचिन्तिका इमे संस्कृतज्ञाः संन्यासिनो भिक्षुकाश्च ।"

प्रधानाध्यापकः—"अस्त्वेतदेवमन्यद्वाकिमपि । नात्र संन्यासिमहाशस्य विषये वयं किमपि तात्त्विकं जानीमहे । न च वयं संस्कृतभाषामेव विद्म; । अस्माकमिमे प्राणजीवनपण्डिता एव तद्योग्यताविषये किमपि प्रामाणिकं जानन्तः स्युः । अये, कुतो वर्तन्तेऽधुना प्राणजीवनशास्त्रिणः ? (भृत्यं सम्प्रेष्य प्राणजीवनः समाहूतः, स च कक्षमागत्य वेत्रासनमुपविशति) ।

प्रधानाध्यापक—"अयिभोः प्राणजीवनशास्त्रिणः ! नगरेऽत्र कोऽपि संन्यासिप्रवरः समागतः श्रूयते । स च महानेव समर्थो विद्वानिति कथयन्ति लोकाः । अपिभवतां तेन परिव्राजा सह परिचयो जातः ? कीदृशोऽसौ यतिर्भवन्मते, का च तस्य योग्यता ??"

प्राणजीवनः—"श्रीमन् ! गृहस्थाश्रमप्रपञ्चे, तत्सम्बधिषु कर्मकलापेषु च सर्वात्मना व्यापृतोऽहं नेदानीं यावत्तं परिव्राजमुपागन्तुमपारयम् । चर्चा तु मयापि श्रुता, तं द्रष्टुमपि चाहं कामये, परमवकाशाभावाद्वाञ्छन्नपि—अहं तत्सत्सङ्गलाभं ग्रहीतुं न प्राभवम् । सति चावकाशेऽद्यश्वो वा परश्वो वाहं तत्समीपं गन्तुं मे विचारोऽस्ति ।"

प्रधानाध्यापकः—"यदा भवन्तस्तत्र गच्छेयुस्तदास्मानपि सर्वान् भवद्भिः सह नयन्तु । वयमपि च सर्वे तं दिदृक्षवः ।"

प्राणजीवनः—"अवश्यम् । यदाहं तत्र गन्ता तदा भवतः सर्वानपि तत्र मया सार्द्धमेव नेष्यामि ।"

[ ५ ]

नगरस्य पश्चिमदिग्भागे पर्वतक्रोडाञ्चलेऽधित्यतकायामेकस्यां सुविशाल एकः शिवालयो विद्यते । तस्याङ्गणैकदेशे प्रसन्नसलिला वापी, पुष्पवाटिका चैकास्ते । तत्र शिवालयं परितो वनमतीव सघनमास्ते । तद्वनं दशक्रोशान् यावत्

विस्तृतं वर्तते । तत्र च वने सिंहव्याघ्रभल्लूकशूकरमहिषादयोऽनेके हिंस्र-जन्तवः प्राचुर्येण निवसन्ति । शिवालयस्यास्य वामपार्श्वतो विष्णुमन्दिरं, दुर्गादेव्याः स्थानकं तथा गणेशभैरवादीनां मूर्तयश्च यत्र तत्र संस्थापिता वर्तन्ते । दक्षिणपार्श्वे मन्दिरस्यैका धर्मशाला विद्यते । मध्येशिवालयमेको निम्बवृक्षः सघनच्छायसनाथः शोभते । वृक्षस्याधो वृहती चैका मृण्मयी वेदिकास्ते, सा च गोमयलिप्ता स्वच्छा चास्ति । अस्यां हि वेदिकायां दर्भासनोपरि संन्यासिप्रवरो निषण्णोऽस्ति बद्धपद्मासनः । परितो मृगचर्मासनानि कुशसनानि च विततानि विद्यन्ते । तेषु चासनेषु केचन नागरिकाः पुरुषा महिला बालकाश्चोपविष्टाः सन्ति । मध्ये संन्यासिप्रवरस्य प्रपुष्टसर्वाङ्गीभव्या तेजोमयी मूर्तिर्विराजते । यतिप्रवरस्यास्य सुविशालंस्निग्ध-चिक्कणं सद्योमुण्डितं शिरो, निशालो भालपट्टो, दीर्घापाङ्गे सघने भ्रुवौ, कर्णान्तिलम्बिनी सुविशाले नेत्रे, शोभना नासिका, संततमन्त्रोच्चारा-भ्यासवशात् पल्लववत् प्रस्फुरन्तावधरोष्ठौ, रेखाचितयोपशोभिता कम्बुकला-ग्रीवा, सुविशालं वज्रवत् सुदृढं वक्षः स्थलं, रेखात्रितयसुन्दरमुदरं, करभशुण्डा-नुकारिणौ प्रपुष्टौ स्थूलौ मांसलौ च भुजौ, आरक्तच्छवी सुस्निग्धौ पाणिपल्लवौ, हस्ताग्राङ्गुलिषु रुद्राक्षजपमाला, समग्रमपि कलेवरं भस्मोद्धूलितं, मध्ये-मध्ये रक्तचन्दनकेशरलाञ्छितत्रिरेखाचिह्नललितोऽस्य यतेर्मौतिको विग्रहो विलोकमाणानाम् जनानां हृदि तत्कालमेव कमप्यपूर्वं महाप्रभावमुत्पादयन्नास्ते । स च संन्यासिप्रवरोऽधुना सायंसन्ध्योपासनोपक्रमं कुर्वाणोऽस्ति । तदग्रे कदलीदलेषु निहिताः पुष्पपत्रदूर्वाक्षताः शोभन्ते । सम्मुखमेवैको जलपूरितो मृद्घटोऽपि संस्थापितोऽस्ति । इत्थं वर्तमानस्य तस्य यतिप्रवरस्य सम्मुखमुभयोः पार्श्वयोश्चोपनिषण्णा नागरिका भक्तजनास्तस्य परिव्राजः सन्ध्योपासनकर्म-काण्डक्रियातन्त्रं मौनमालम्ब्य परिपश्यन्तस्तत्प्रभाववशगा इव सन्तिष्ठन्ते । नीरवं, निःस्तब्धं, प्रशांतं च तत्रत्यं वातावरणं वर्तते । दर्शनार्थमागता जना यदा कदा घण्टारवं कुर्वन्ति तदैव ध्वनिरुपजायते । क्रमशो वायुमण्डले विलीने-ऽथ घण्टानादे पुनस्तत्र पूर्णतस्तूष्णींभावो निःस्तब्धता च सर्वतःप्रसरति । स चासौ परिव्राड् मुहुर्मुहुर्मन्त्रोच्चारपूर्वकमितस्ततो जलाञ्जलीन् प्रक्षिपति । एकतो दीपाधारे घृतपूर्णो दीपकः प्रज्वलन्नास्तेऽपरतश्च धूपपात्रे प्रज्वालिता धूमवर्तिका धूमधोरण्यो महान्तमुक्तटं हि सुगन्धं वितरन्ति । तेन तत्रत्ये वायुमण्डले कापि बाञ्छनीया सघनता परिव्याप्नुते ।

अस्मिन्नेव समये केचन भद्रजना देवालयस्य द्वारदेशे समागच्छन्तोऽ-दृश्यन्त । यावत्ते मन्दिराङ्गणं प्रविशन्ति तावदेव घनगम्भीरेण कण्ठध्वनिरवेण स परिव्राड् तान् प्रत्युवाच—

"अयि, भोः ! नागराः !!! उपानहस्तावत्तत्रैव द्वाराद्बहिरेव क्वचित् संस्थाप्यन्ताम् ! यष्टिकाच्छत्रादीन्यपि च तत्रैव क्वचिदवालम्बयन्तु !!! न जानन्ति किं भवन्तो यदत्र भगवद्देवालयोऽस्तीति ? अत्र भवद्भिः सावधानं समर्यादं च प्रवेशो विधेयः । (स्वगतम्) त इमेऽत्रत्या जना महामूढा नास्तिका इव प्रतिभान्ति मे । ननु मूर्खाश्चैते देवालयस्य मर्यादामप्युल्लङ्घमाना न लज्जन्ते ! हुम् !!"

ते च सर्वे नवागन्तुका निशम्यैवैतत् यतिकृतं भर्त्सनावचनं मिथो मुखान्यवलोकमाना अन्तर्गूढं किञ्चिदिव मन्दस्मितं कृत्वोपानच्छत्रलगुडादीनि तत्रैव बहिः कोणे देवालयस्य तस्य द्वारपार्श्वयोर्यत्र तत्र समस्थापयन् । पुनस्तेऽन्तः प्रविश्य शिवपञ्चायतनस्य दर्शनानि कृत्वा, प्रदक्षिणां विधायान्ते संन्यासिनाध्युषितां धर्मशालां प्रविश्य तं महात्मानं प्रणम्य तत्सम्मुखमेवास्तृतेषु कटासनेषु न्यषीदन् । ते सर्वेऽपि च महात्मनस्तस्य सन्ध्योपासनागौरवं परिपालयन्तो मौनमास्थायावाङ्मुखं तस्थुः ।

अथ व्यतीते हि घण्टार्द्धप्राये समये स महात्मा संन्यासिप्रवरो नवागतांस्तान् सर्वान्निपुणं विलोक्य पपृच्छ--

"ननु केऽत्र भवन्तो भवन्तो नागरिकाः किमर्थं चात्र प्राप्ताः ?"

तेष्वेकोऽब्रूत,--भगवन् ! वयं सर्वेऽत्रत्यस्य विद्यालयस्य प्राध्यापकाः । भवन्महिमानं, यशः, कीर्त्ति, वैदुष्यं च श्रुत्वा वयमत्र भवतां दर्शनार्थमेवाभ्युपेताः स्मः । (सङ्केतं कृत्वा) अयं हि महानुभावोऽस्माकं विद्यालयस्य प्रधानाध्यापकः, स चासावितिहासभूगोलाध्यापकः, असौ विज्ञानगणिताध्यापकः, सोऽयं जीवशास्त्राध्यापकोऽयं हिन्दीसाहित्यशिक्षकोऽसौ संस्कृतभाषाध्यापकश्चास्ते । एवं क्रमेण ते सर्वेऽपि परिव्राजः परिचायिताः ।

ततः सर्वेषां तेषां प्राध्यापकानां नामधामादिकं पृथक्-पृथक् पृष्ट्वा कुशलं क्षेममनामयं शिक्षादीक्षादिकं चैकैकं सम्पृच्छ्य स परिव्राट् प्रधानाध्यापकमाह--

"अथ किं नामासौ संस्कृतपण्डितः ?"

प्रधानाध्यापकेन सङ्केतेन प्रेरितः संस्कृतपण्डितः संन्यासिनं प्रत्यवदत्-- "भगवन् ! जनोऽयं प्राणजीवनशर्मात्रैव महाविद्यालये संस्कृतशिक्षकत्वेन जीविकावृत्तिमुपार्जयन् कथमपि निर्वहति स्वकीयं गार्हस्थ्यजीवनम् !"

संन्यासी--"ब्राह्मणस्त्वं पुनः संस्कृतज्ञः, किमर्थमेतावत्कालपर्यन्तं नागतो मत्समीपम् ?"

प्राणजीवनः—"यतिप्रवर ! पराधीना हि वयं राजसेवकाः। अवकाश-एव नोपलभ्यते। तत एव नात्र शीघ्रतरमागन्तुमपारयाम।"

संन्यासी—"यदि च बलवती भवेदिच्छा, सात्त्विकी श्रद्धा, धर्मानुरागः, सत्सङ्गप्रवृत्तिश्च तात्त्विकी तदा तु सर्वमपि सम्भवति। परमधुना कलिहतके प्रवर्तमाने द्विजातयः सर्वे शूद्रप्राया नास्तिकाश्च बभूवुः। केवलमुदरभरणमात्रपुरुषार्थास्ते दासत्वमेव कुर्वाणाः स्वजीवनमपक्षपयन्ति। ब्राह्मणानां दासत्वभावादेव विनष्टोऽसौ वर्णाश्रमसनातनधर्मः। अतीवाश्चर्यमेतत्, यद्धि सर्वेऽप्यत्रत्या ब्राह्मणास्त्वत्र नित्यमेवायान्ति। सत्सङ्गसुखं चानुभवन्तो मोमुद्यन्ते, त्वं पुनरवकाशाभावमेव कथयसि। नैतदुचितं भवति। सत्यं ब्रूहि, किमर्थमेतावद्विलम्ब्यागतस्त्वम् ?"

प्राणजीवनः—"भगवन् ! इदानीन्तनो जीवनसङ्घर्षस्तावदतीव जटिलो विषमश्च संजातोऽस्ति। मादृशा मध्यमवर्गीया बहुकुटुम्बा गृहस्थाः पुनरगत्या सार्वकारस्य सेवावृत्तिमङ्गीकुर्वाणाः सत्सङ्गार्थमपि चावकाशं प्रायेण नोपलभन्ते। नाहमस्यापवादः।"

संन्यासी—"अरे, मा जल्पैवम्। त्वमेवात्रत्यो वृहस्पतिकल्पो विद्वद्धुरीणः प्रसिद्ध्यसि। राज्याश्रयात्त्वं मुह्यमानोऽसि ततस्ते यतिभिः सह समागमनेन किं प्रयोजनं स्यात् ?"

प्राणजीवनः—"सम्भवति, कदाचिदहमेवंविधेषु सत्सङ्गेषु बतास्थां निष्ठां बह्वीं न दधीय। परं भवन्तो यन्मामत्रागतमाक्षिपन्ति, नैतद्भवदनुरूपम्। भवन्तस्तु त्यक्तसर्वपरिग्रहा वीतरागाः समदर्शिनः कथमत्र क्षुद्रे फल्गुनि च विषयेऽन्यथाबोधमाश्रयन्ति ? यते ! समाधीयतां स्वमनः !! इत्थं क्रोधाविष्करणं न भवत्सु बतोपपद्यते !!!

संन्यासी—"अहह ! दृश्यताम् !!! मूढोऽयं मामेवोपदेष्टुमारभते !!! अरे, प्राणजीवन ! सावधानो भव ! त्वं तु वृथैव पाण्डित्यगर्वमुद्वहसि !! यदि त्वं सत्यमेव सुशिक्षितो दीक्षितः कुलीनोऽसि किल प्रतिभासम्पन्नो विद्वान्, तदाद्य सर्वजनसमक्षमत्रैवेदानीं शास्त्रार्थं कुरुष्व ! नो चेत् त्वं धर्मदण्डेन, राजदण्डेन, समाजदण्डेन च दण्डनीयोऽसि मया। अपित्वं जानीषे ? अहं हि शङ्कराचार्योऽस्मि ! त्वादृशानां पथप्रदर्शनार्थमेवाहं सदादेशे विदेशेषु च बंभ्रमीमि ! यदि त्वमत्र मया साकं शास्त्रार्थयुद्धं न युध्यसि तदाहं ते ज्ञाति बहिष्कारं कारयिष्यामि। अपि श्रुतं त्वया ?"

प्राणजीवनः—"श्रुतं ज्ञातं च सर्वम्। भवद्भिरपि चैतज्ज्ञातव्यमुचितं भवति यदधुना वर्तमानो युगो बत नास्त्येव स युगो यत्र भवादृशां कथनमात्रेणैव

ज्ञातयः पक्षबलादुराग्रहाद्वा कमपि सदोष निर्दोषं वा जनं दण्डयन्ति स्म। इदानीं रूढीवादिसमाजस्यान्यायपूर्वकं व्यक्तेरुत्पीडनं प्रागिव न सम्भवति। अद्यत्वे शतशोऽथ सहस्रशो जनानज्ञातीन् बहु मन्यन्ते। ततः पुनर्विशृङ्खलिता द्रोहिणो ब्राह्मणास्त्वद्यत्वे स्वात्मघातादतिरिक्तं न कस्यापि किमप्यपकर्तुं पारयन्ते। एवं सति भवतामित्थं विकत्थनं, मम धर्षणं, तिरस्करणं बत सर्वथोपहासास्पदम्! त्वमनीशानः प्रकुप्यसि दण्डिमहाशय !! (सर्वेऽपि च प्राध्यापकाः परस्परमवलोक्यान्तर्गूढमुपाहसन्)

**संन्यासी**—"धिङ्मूर्ख! नास्तिकोऽसि त्वम्! तेनैवं ब्रवीषि! नो चेत् भवत्समाजसदस्यास्तु मां नित्यमेव श्रद्धया, भक्त्या, प्रीत्या च स्वगृहे भिक्षार्थमामन्त्रयन्ति। त्वं तु प्रथमदर्शन एवेत्थं मां तिरस्करोषि, न्यक्करोषि, दुर्वचनैश्चायमन्यसे, सर्वजनसमक्षम्! वस्तुतस्त्वमेव धूर्तोऽसि दाम्भिकः!"

**प्राणजीवनः**—"स्यामहं कदाचिद्दाम्भिको धूर्तो वा। परं भवन्तो वीतरागाश्चाप्यमुं मां स्वाश्रममागतमतिथिरूपमपि प्रथमसम्भाषण एवाचिक्षिपुः। कुत्रत्योऽयं न्यायः? कश्चैषो यतीनां क्रमः?? अक्रोधनाः शान्ता दान्ताः सर्वभूतहिते रता हि यतयो भवन्ति पूज्या आराध्याश्च गृहस्थानाम्, न तु भवादृशा निर्निमित्तं कुप्यन्तोनन्वाग्रहग्रहिला यत्किञ्चनवादिनो भिक्षुका एव केवलम्।"

**संन्यासीः**—"हुं जाने त्वाम्। अरे मा जल्प मूर्ख! मा विकत्थस्व!! अपयाहि दूरं शीघ्रमस्मात् स्थानात्!!! गच्छसि न वा? नो चेद्धन्तव्योऽसि! अपसर दूरम! दूरमपसर गच्छ, गच्छ; रे! त्वरितमपगच्छ!!"

**प्राणजीवनः**—"यदि न गच्छेयं तदा...?"

**संन्यासीः**—"रे शठ! न पश्यसि किं त्वमेनं मम सुदृढं वज्रकल्पं पलाशदण्डम्? सोऽयं मया। त्वादृशानामखर्वगर्वोद्धतानां घृष्टाधमानां धर्षणायैव घृतोऽस्ति नूनम्! निर्घृण!! पापिन्!!! पलायस्व!!! अपव्रज!!! मद्दृष्टेस्तिरोहितो भव!!!"

**प्राणजीवनः**—"धन्योऽसि महाभाग! क्वायं ते संन्यासाश्रमः, क्व च तवासौ ब्राह्मणे जने मय्यनागसि कोपकलुषितो हि दुर्व्यवहारः!! अहं तु तवामुं काषायवस्त्रवेषं पश्यन्नेव शान्तोऽस्मि, नो चेत् का नाम तव शक्तिर्मम पुरोदण्डोत्तम्भनस्य? ममापि च सक्षमं सबलं च वर्तत एव हस्तपादादिकम् सर्वमप्यक्षुण्णम्! अहं त्वां योग्यं सुयोग्यं च प्रत्युत्तरं दातुं समर्थः प्रसिद्धयेयम्! अद्य ज्ञातं मया यदेवं विधा भवन्ति भुवि शङ्कराचार्याः!"

**संन्यासीः**—"ब्राह्मणापसद ! अधम !! राक्षस !!! दूरं पलायस्व शीघ्रम्, नो चेत् सत्यमेवेदानीमत्र हन्तव्योऽसि मया ! आः ! न त्वमेवमपभास्यसि, भोः ! विरम ! विरम !! रे नीच !!! (क्रोधावेशवशगः स खलु संन्यासी दण्डमुद्यम्य प्रहर्तुमिच्छति । तत्रोपविष्टाश्च सर्वे जनास्तदिदमकाण्डताण्डवं दृष्ट्वा सहसा ससम्भ्रममुत्थाय बहिर्गन्तुमुपचक्रमिरे)

शिवालयस्य तस्य प्राङ्गणमायातः प्राणजीवनः–

"यदि भवान् 'शेषं क्रोधेन पूरयेत् !' इत्येव हि गुरुज्ञानं प्रव्रज्याधर्मं वा मनुते तदालमायासेन । कौपीनं मौञ्जीपरिकरं च सुदृढं नियम्य, बध्वा च सम्यक् साहसमत्रागच्छ दूर्वाक्षेत्रे किलावां मल्लयुद्धमाचरेव, येन तवासौ निरर्थकः क्रोधः क्षणादेव शमं यायात् !"

**संन्यासीः**—"दृश्यताम्, दृश्यताम् ! भोः !! स एष पुनरपि दुश्चेष्टते राक्षसः ! हुँ फट् ! नाहं जातुचिदपि तवापराधमिमं क्षमिष्ये, शठ ! अस्तु, श्वोऽहं प्रातरेवावश्यमेव राज्ञः समीपं गन्तास्मि । राजानं निवेद्य तव देशादस्मात् निवसिनमेव कारयिष्यामि । नृशंस ! त्वमपि श्वो ज्ञास्यसि संन्यासिनो मम शक्तेः प्रभावस्य च चमत्कारम् !!"

**प्राणजीवनः**—"अहो ! दृष्टवानस्म्यहं ते विक्रमं पराक्रमं च । साक्षात् विद्यमानस्यापि मे किमपि विप्रियं पापकर्तुमक्षमोऽधुना राज्ञः शरणं गन्तुमिच्छसि, राज्ञो बलाच्च मां धर्षितुं प्रवृत्तोऽसि ! स्वबलं ननु ते क्वापगतम् येनान्याश्रय वाञ्छसि ? यदि त्वमेवंविधोऽसि सिद्धाचार्यस्तदा द्वन्द्वयुद्धं कस्मान्न युध्यसि मया साकमत्र देवालयाङ्गणे ??

"संन्यासिन् ! हा, हन्त ! हन्त !! कीदृशीयं ते महती विडम्बना ! यदि त्वं कामपि सिद्धिं वा स्वेष्टदेवताराधनफलं वासादितवानसि तदा स्वमन्त्रबलादेव किं न मां शपसि ? किमर्थं चात्रैवेदानीं मां क्षणाद्भस्मसान्न करोषि ?? वस्तुतस्त्वं वृथापुष्टोऽसि भिक्षुको लम्बोदरः ! साधूक्तमेतत्—'अर्द्धो घटो घोषमुपैति नूनम् !' इति ।"

**संन्यासीः**—"हं हो ! ब्राह्मणाधम ! निवर्तस्व, झटिति स्थानादस्मात्, जघन्य ! पामर !! निवर्तस्व !!!"

**प्राणजीवनः**—"अरे, भिक्षुकाधम ! गृहाण स्वहस्ताञ्जलौ जलम् ! मन्त्रयित्वा चाजन्मसञ्चितेन तेजसा तज्जलं, 'पाषाणत्वं यातु पामरोऽसौ

प्राणजीवनहतको, विक्षिप्ततां च व्रजत्वय हि ब्राह्मणाधम ! जडतां गच्छतु नीचोऽसौ द्विजः !! प्रेताविष्टो भवत्वयं दुरात्मात्रैवाधुना !! !' इति वदन् तं जलाञ्जलिं मामुद्दिश्य मद्दिशि प्रक्षिप येन मत्पराभवो भवेत्तव विजयश्च सम्पद्येत, तव दुर्मनोरथश्च संसिद्ध्येत् । नाहं तव वृथाविकत्थनैर्मनागपि-प्रभावितोऽस्मि ! तृणाय मन्ये त्वादृशान् भिक्षुकाधमान् !! त्वं तु निर्विषोऽसि भुजङ्गमः ! न त्वं मम रोमोत्पाटनेऽपि प्रभवसि, मूढमहात्मन् !

"अथ यदि त्वं मम ब्राह्मणस्य ब्रह्मतेजो, मन्त्रबलं, पराक्रमं, सिद्धिं वा द्रष्टुमुत्सहसे तदा तथा ब्रूहि ! अहं हि स्वेष्टदेवताप्रसादात्, गुरोः कृपया च त्वामत्रैवाधुना चमत्कारचाकचक्यं लोकोत्तरं दर्शयितुं समर्थोऽस्म्येकल एव । ब्रूहि भोः ! किं न ब्रूषे ? राज्ञो बलमाश्रित्यात्मशक्तिं मां जेतुमिच्छसि त्वं ननु स्वयम्भुर्निर्घृणो निर्लज्जश्च !"

प्राणजीवनस्य ब्रह्मतेजोमयीं तामिमां दुर्धर्षां भयङ्करीं क्रोधोद्धुरां प्रचण्डशक्तिमतीं मुद्रां विलोक्य संन्यासिप्रवरोऽसौ पर्यन्ते तेजोभ्रष्ट इव तूष्णीमवाललम्बे ।

ततस्ते सर्वेऽपि प्राध्यापकादयः कथं कथमपि तौ द्वावपि समाश्वास्य पृथक्कृत्य प्रशमं नीतवन्तः । तत्कालमेव ते प्राणजीवनेन सहदेवालयान्निष्क्रम्य स्वगृहान् प्रति प्रतस्थिरे । संन्सासी चाक्रोशन् विक्रोशन् मन्दिरान्तः प्रविश्य स्वासनमुपविवेश ।

अथ द्वितीयेऽह्नि प्रातर्नगरे सर्वत्र दुर्घटनायाः सम्वादः सर्वतः प्रससार यद्धि प्रोक्तः संन्यासिप्रवरः प्रत्यूषे स्वाध्युषितस्य देवालयस्य पश्चाद्वर्तिवनं गतः शूकरैर्हतः क्षतविक्षतो जात इति । एतदपि चाश्रूयत यद्राज्ञा प्रेषितेन मृत्तरयानेन सलोकैः कैश्चित् चिकित्सालयं नीतस्तत्रैव रुग्णशय्यामधिशयान-स्तिष्ठतीति च । विद्यालयस्याध्यापककक्षमुपविष्टाः सर्वे प्राध्यापकास्तमिमं दुस्सम्वादमाकर्ण्य साट्टहासं जहसुः ।

प्रायः पक्षदिनानन्तर स परिव्राट् तस्मान्नगरात् प्रतस्थे । गते च तस्मिन् नगरस्यारक्षिविभागे तस्य संन्यासिनो विषये मोहमय्या न्यायाधीशस्य सम्वादोऽसौ लिखितरूपः प्राप्तो 'यदसौ संन्यासिमहाशयो बत कांचिद्युवतिमेका-मपहृत्य ततः पलायितोऽस्ति । स चेदानीं भारते क्वचिदितस्ततो भ्राम्यन् वर्तते । सोऽपराधवृत्तिको दशवारं दण्डितोऽस्ति विभिन्नै राज्यैः । वस्तुतो नायं परिव्राड् वर्तते प्रत्युत शिवचरणनामा कश्चनोत्तरप्रदेशवास्तव्यो मत्स्यजीवी ग्रामीणो

वर्तते । स खलु न केवलं धनवतः कस्यचिद्वणिजो युवतीमेवापजहारापि तु तस्य महाजनस्य दशसहस्रमूल्यात्मकं धनमपि चापहृत्य पलायितोऽस्ति । स स्वकीयं वेशभूषादिकं परिवर्त्य संन्यासिरूतं धृत्वा प्रच्छन्नाकारो निगूढं विचरन्नास्ते । श्रूयते, यत्सोऽयमस्माकमपराधी भवतां नगरं प्राप्तोऽस्ति, तत्र च कचिन्मन्दिरे प्रकल्पितावासस्तिष्ठतीति । यदि स तत्रैवास्ति चेत् तदा तं स्वारक्षिविभागद्वारा बन्दीकृत्य मोहमयीस्थ न्यायालयं प्रापयन्तु ।' तमेतं सम्वादं निशम्य स्वयं राजा, तं परिचिन्वाना जनास्तत्सत्सङ्गगोष्ठीषु सम्मिलितास्तथा कथिता भक्ताश्च साश्चर्यं खेद वहन्तो नन्वद्भुतमेतन्मानवचरित्रमिति वदन्तो लज्जावनतमुखास्तस्थुः ।



# गर्दभपुरे नापिताचार्यस्य प्रतिष्ठानम्

एकदा वयं पञ्चप्रायाः सुहृदो विश्वदर्शनयात्राप्रसङ्गात् नगरान्नगर ग्रामाग्द्रामान्तरं च पर्यटन्तः पार्वत्यप्रदेशे वर्तमानामेकां जनवसतिमगच्छाम। यदा वयं मृत्तरयानेन तन्नगरोपकण्ठं प्राप्तास्तदा तत्रैकं सुविशालं निर्मलजल-शोभित सरोवरमद्राक्ष्म। सृत्तरयानानां विश्रामस्थलं तत्रैव सरोवरोपकूलं परिकल्पितमासीत्। ततो मृत्तरयानादवारुह्य यावद्वयं तत्रेतस्ततो दृष्टिं प्रसार्य पश्यामस्तावदस्माभिरनेके बृहदाकाराः प्रस्तरशिल्पमनोहरा देवालयाः, प्राचीनस्थापत्यकलाकौशलोत्कीर्णा विविधमूर्तयस्तथाधुनातनसर्वकारस्य नवनिर्मितानि कार्यालयभवनानि, सुचिक्कणसुधालेपभास्वराणि मन्दिराणि, वृक्षलतागुल्मपत्रपुष्पफलसनाथानि भव्यानि वाटिकोपवनानि, पण्यवीथिका, गोपुराणि, परिखाप्राकारा, राजमार्गाश्चावलोकिताः दृष्ट्वा चैतत् सर्वं वयं सर्वेऽन्तर्मनस्यतीव प्रासीदाम, स्थानस्यास्य रमणीयतां सम्भाव्य महान्तं मोदं संतोषं चान्वभवाम।

अथ नगरावलोकनाय बद्धस्पृहा वयं सर्वे तत्रैव कियद्दूरे वर्तमानमेकं विश्रान्तिगृहं चायचषकपानेच्छयाऽव्रजाम। तस्य विश्रान्तिगृहस्य द्वारं प्रविश्यान्तः स्थापितेषु काष्ठासनेषूपविश्यास्माभिस्तत्र विद्यमानाय भृत्याय पञ्चशश्चाय-पात्राण्यानेतुमादिष्टम्। स खलु ह्योटलसेवकोऽस्मन्मुखान्यवलोक्य स्वान्त-र्हृदीषन्मन्दं मन्दं स्मितं कृत्वास्मानब्रवीत्—'महाशयाः! अन्यत् सर्वं तु वस्तु जातमस्मत्सविधे विद्यमानमास्ते, परमिदानीं यावद्दुग्धविक्रेतानागतस्ततो भवद्भयश्चायचषकं सद्य एवाधुना समुपस्थापयितुमहं सर्वथाऽसमर्थोऽस्मि! यदि च भवन्तोऽत्र भवन्तः कञ्चित्कालं प्रतिक्षेरंस्तदासौ दुग्धविक्रेता पथि समा-गच्छन्नेव स्यात्। समायाते हि दुग्धेऽहं श्रीमतां चायपानव्यवस्थां झटित्येव कुर्यां, परन्तु दुग्धं विनाद्य प्रातरेवात्मनोऽसामर्थ्यं प्रकटयितुं विवशोऽस्मि संजातः। क्षम्यताम्! मनाग्विलम्बो वा वेलातिक्रमणं तु भवति, परन्तु श्रीमन्तोऽर्द्धघण्टामितं कालक्षेपमत्रैव कुर्युश्चेत्तदाहं तादृशं चायचषकपेयं कारयेयं भवद्भयो यादृशं नाद्यावधि कदापि क्वापि कृतं स्यान्महोदयैः!'

इत्थं निवेदयन्नसौ होटलसेवको मार्जनीमेकां गृहीत्वा विश्रान्तिगृहस्य तस्य शुद्धीकरणे संलग्नो बभूव। स्थातुं गन्तुं द्वयमपि नैव शक्नुवाना वयं विषयेऽत्र किमपि चिन्तयेम, तावदेव तत्र स्थितवतामस्माकं शिरसि मक्षिकासमूहा उत्प्लुत्योत्प्लुत्य निपेतुमारेभिरे। यावन्मक्षिकाभ्यो वयमात्मनो रक्षणं चिन्तयामस्तावदेव भृत्येन तेन मार्जन्या सम्मार्जितस्योच्चारराशेर्धूलिरजोरेणवः प्रस्तरकणिकाश्च सिकतपोमाः पादेष्वस्माकमाघातं कुर्वन्तो निपेतुः। नेत्रेषु ते रजोरणवो भूयो-भूयो निपतन्तोऽस्माकं चेतनामपबाधितुमुपचक्रमिरे। अस्माकं तत्रावस्थानं कष्टप्रदमजायत। ततो वयं स्थानात्तस्मादुत्थाय बहिरागत्य मार्गमनुलग्नाः। तदास्मास्वेकोऽब्रूत—'नगरं प्रविश्य ततश्चायपानं करिष्यामः, का हानिः?' 'न कापि क्षतिः! प्रविश्यताम्!! नगरम्!! नगरदर्शनाय त्वागता एववयमत्र, तन्नूनं द्रष्टव्यमेव, परं यात्राश्रान्तानामस्माकं चायपानं तावन्महदेवावश्यकमित्यपि तात्त्विकं विमृश्य नैव विस्मरणीयम्!' एवं चायपानाय सस्पृहाः सोद्यमाश्च वयं नगरप्रवेशायोपक्रान्ताः।

अथैवं मिथो वार्तालापान् कुर्वतां मार्गे सञ्चरतां चास्माकं पुरतो नगरस्यास्य प्रवेशद्वारं दृष्टिपथमवातरत्। वयं पदविन्यासपाटवमिवाभ्यस्यन्तः प्राकारपरिखामनुशोभमानं नगरस्य प्रवेशद्वाररूपं सुविशालकाष्ठकपाटदृढं गोपुरं प्राविशाम। प्रविश्य च नगराभ्यन्तरमितस्ततः स कुतुकं दृष्टिं प्रसारयन्तो राजमार्गे प्रचलन्तः कियन्तमध्वानं समत्यलङ्घ्महि। तत्र मार्गे चलद्भिरस्माभिरवलोकितं यद्धि नगरस्यास्य स्थितिः पर्वतत्रयमध्यभागे परिकल्पितास्ते। पार्वत्यप्रदेशेऽस्मिन् कठोरा कर्कशा च भूमिरुद्घातिनी विषमोच्चावचं गिरिगह्वर-कन्दरावनसङ्कीर्णातिसघनवसतिव्याकुला च वर्तते। त्रयाणां पर्वतानां मध्ये यावती मध्यगतोपत्यकेव प्रसृता पृथ्वी, सैवास्य नगरस्य दैर्घ्यविस्तारसीमा। अत्र द्वावेव हि प्रधानौ राजमार्गौ, पञ्चप्रायाश्चत्वरा लम्बाकाराः सङ्कीर्णाश्च नगररथ्यास्तासु च नीडनिबिडागृहाश्चादृश्यन्त। राजमार्गस्य द्वयोरपि पार्श्वयोर्विपणिहट्टानां पङ्क्तयो विद्यमाना आसन्। परन्तु नैकोऽपि च हट्ट इदानीमुद्घाटितकपाटो बभूव। यद्यपीदानीं प्रातःकाल एवासीत्तथाप्यत्र नगरे यातायातं जनानां विरल-विरलमेव जायमानमलक्ष्यतास्माभिः। चायपानाय सतृष्णानामस्माकं मनस्तदर्थ-मेवाधिकाधिकं तदेव भूयोभूयश्चिन्तनपरमभूत्ततोऽचिरादेवेमे हट्टा जनैरुद्घाटिताः स्युरिति परस्परं तर्कयन्तो ऽधिनगरमचलाम। मध्यमार्गं यत्किमपि यदृच्छया दृक्पथमवातरत्तत्सर्वं चर्मचक्षुर्भ्यामवलोकमाना अपि वयं मनोदृशा चायचषकमेव पश्यन्तः स्तोकमध्वानमतिक्रम्य नगरस्यास्य मध्यभागं केन्द्रचत्वरं प्राप्ताः। अत्रागत्यापि वयं नैकमपि च हट्टमुद्घाटितरूपमद्राक्ष्म। चत्वरेऽस्मिन् सर्वतो वणिजां विपणयोऽभूवन्। एकतो द्वित्राः शकट्यः संस्थापिता आसन्। राज-

मार्गमुभयतो निम्बाम्रपिप्पलादयो महावृक्षाः पङ्क्तिबद्धं स्थिताः शाखान्दोलनानि कुर्वन्तोऽभूवन् । स्थानमिदमासाद्य वयं तत्रैकतः प्रसृतासु प्रस्तरशिलास्वन्यतमायां पट्टिकायां समुपविश्य तत्रत्यं दृश्यमवालोकयाम । तथा हि चत्वरेऽत्र सघनवृक्षच्छायमधो नलजलकुण्डमेकं ससलिलं शुशुभे । पूर्वदिग्भागेऽत्र क्वचित् शिवालयः, क्वचिज्जैनदेवालयाः, क्वचिद्धनूमतो भगवतः प्रतिमा वटतरोर्मूले स्थापिता अभूवन् । व्यतीतेऽपि च प्रहरप्राये दिनसमये नात्र क्वापि च सूर्यालोकः प्रवेशं लेभे, यतो नगरमेतत् पर्वतावलीपरीते गर्तप्रायानुकारिणि सङ्कीर्णोपत्यकास्थले निर्मितमासीत् । अधुनापि च लोकानां यातायातमपि निरुद्धमिवाभूत् । तत्र चास्मिन् नगरस्य केन्द्रस्थले पूर्वोक्ते जलकुण्डे सलिलादानाय काश्चन नागर्यो महिला जलकलशान्नीत्वा यातायातं कुर्वत्यो दृष्टा अस्माभिः ।

इत्थमवलोकमानानामस्माकं तत्र मध्याह्नप्रायः समयो व्यतीयाय । यदा नन्वेतावत्कालपर्यन्तमपि च वणिक्पथे हट्टा अनुद्घाटिता दृष्टास्तदास्मास्वेकेन सहयात्रिणा कुतूहलाश्चर्यपरवशेन कश्चिन्नागरिको जनः पृष्टः—श्रीमन् ! कस्मादद्य भवतामस्मिन्नगरे इमा विपणयो जनशून्याः सर्वे हट्टाश्चाप्येतेऽनुद्घाटिता वर्तन्ते ? जातेऽपि च मध्याह्नप्राये समये किमित्यत्र भोः ! असञ्चारो लोकव्यापारश्च क्रियाशीलतां नासादयति ?? कस्माद्धेतोरत्र शून्यं स्तब्ध जडमिव सर्वं निस्पन्दं निचेष्टमिवावलोक्यते जनजीवनम् ???' श्रुत्वास्माकं प्रश्नानेतानापादमस्तकमस्मान् सूक्ष्मेक्षिकया निपुणं निरीक्ष्य तेन मन्दस्मितपूर्वकमभाणि—'अये ! किं न जानते भवन्तो यदद्य रविवासरोऽस्ति ! सर्वकारकृतनियमानुसारमत्र वसतौ प्रतिरविवासरं सर्वेऽपि हट्टा विपणयश्चानुद्घाटिता एव सन्तिष्ठन्ति । सप्ताहे किलैकवारं सर्वैरपि वणिग्भिः स्वहट्टो नोद्घाटयितव्य इति स एष राजकृतो नियमः ! अत्रत्याः सर्वेऽपि च वणिजो रविवार एव तमिमं नियमं परिपालयन्ति । तस्मादेवाद्य सर्वेऽपि मे हट्टा अनुद्घाटिताः सन्ति, वाणिज्यव्यापारप्रक्रियाश्च निरुद्धा वर्तन्ते ।'

श्रुत्वै तत्सर्वं वयं किञ्चिदिवाश्चर्यचकिता अभूम । यावद्वयं तत्र स्थिताः सर्वमेतत् पश्यामस्तावदेकस्मान्नगरमार्गात् पञ्चाशत्प्रायाणां गर्दभानां समूहस्तत्र कुण्डे जलपानायाजगाम । ते सर्वे गर्दभा अश्वतरा इव बृहदाकाराः परस्परं पादाघातैर्निघ्नन्तः प्रोद्दण्डप्रखरखरलीलामाचरन्तः स्वह्रेषितैर्दिग्गजानामपि कर्णकुहराणि बधिरयन्तो यथेच्छं जलपाने दत्तचित्ता बभूवुः । ततः क्षणात् द्वितीयं ततस्तृतीयं, तदनु चतुर्थमिति क्रमश एकमनुद्वितीयं खरयूथं तत्रागत्य कुण्डे जलं पीत्वा यथायातं तथा पुनः परावर्तत । दृष्ट्वैतत् सहयात्रिष्वेकोऽत्यन्तं चकित इवावदत्—'अहो ! नन्वेतदतीवाश्चर्यावहं यदत्र नगरे समागतैरस्माभिर्न गजा नाश्वा न

चोष्ट्रा गावो वृषभा महिषा महिष्योऽजा वावलोकिताः, परमेतानि गर्दभयूथान्येव प्राचुर्येण वयमत्रापश्याम । मन्ये, नगरमिदं गर्दभपुरमिवाभाति मे !'

मया शिष्टाचारानुरोधात्, सभ्यताविचारात् पुनः कलहभियाऽसौ सहचरो गर्दभलीलावर्णनोद्यतः सङ्केतेन निवारितो व्यापारादस्मात् । मया कथमत्यात्मनो हास्यवृत्तिमन्तर्गूढं परिगोपयतोक्तम्—'सुहृदः ! वयमत्र नवीने स्थानेऽधुनैवायाताः स्मः । देशकालौ, लोकपरिचयं, स्थानीयां परिस्थितिं च यावद्वयं न परिचिनुमस्तावदस्य स्थानस्य विषयेऽस्माभिः किमपि न वक्तव्यमेवोचितं भवति सम्भवति, कदाचिदस्मत्कृतां परिहासालोचनां श्रुत्वात्रत्या नागरिकाः स्वजन्मभूमेरवमाननां तिरस्कारं वा भावयन्तः क्रोधवशात् कलहमाचरेयुस्ततोऽस्माभिः किमपि न वक्तव्यम्, न वक्तव्यम् ! अत्रत्यं सर्वं समौनं निरीक्ष्यताम् !! ततोऽग्रे क्वचित् स्थानान्तरं गत्वा विषयेऽत्र पुनष्टीकाट्टिप्पणीश्च करिष्यामः !!!'

मया पुनः पुनर्निवारिता अपि मे सहयात्रिणो विनोदप्रियास्तेषां गर्दभानां स्वरूपचेष्टा, लीलाविलसितानि, तच्चीकत्कारसङ्गीतं, तदुद्दण्डव्यापारान्, तन्महत्त्वादिकं सर्वं परिहासभङ्ग्या वर्णयन्तो हास्यपरवशा मुहुर्मुहुर्जहसुः । तमिमं व्यतिकरं विलोक्य मया ते सर्वेऽप्यन्यत्र क्वचिद् गन्तुं प्रेरिताः । वयं सर्वे यावत्तस्मात् स्थानादुत्थायान्यत्र गन्तुं प्रयतामहे तावदेत्र पार्श्ववर्तिन्या रथ्यायाः कश्चिदेको ब्राह्मणकल्पो जनोऽस्मत्पुरतः समागम्यास्मान् सर्वान् सादरं सविनयं च प्राणमत् ।

तस्य नवागन्तुकस्य वन्दनपरस्य नागरिकस्य दर्शनाद्वयमतीव प्रभाविता अभूम, यतस्तस्याकारश्चेष्टाः सम्भाषणपद्धतिराकृतिर्लोचने भालपट्टे तिलकरचना वेषभूषादिकं सर्वमपि द्विजकल्पमदृश्यत । प्रणताय तस्मा आशीर्वादं प्रदाय वयं तद्गतमेव सर्वमवलोकमाना अतिष्ठाम । पश्यतामेवास्माकं सः स्वकीयं हट्टमुद्घाटयत् । यावद्वयं तस्य हट्टं गन्तुं चिन्तयामस्तावदेवानेके नागरिका जनास्तत्रागत्य तद्धट्टं प्राविशन् । चाक्षुषप्रत्ययाद्वयं क्षणादेत्रावागच्छाम यत् सोऽयं नास्ति ब्राह्मणः परमसौ नापितो वर्तत इति ।

स खलु नापितोऽतीव चपलो जल्पाकः स्वस्य ज्ञानमनुभवं योग्यतां लोकचरित्रपरिचयं च प्रगल्भं व्यावर्णयन् स्वव्यवसायकर्मणि स्फूर्तिस्फारं चेष्टमानः समागतानां ग्राहकाणां शिरोमुण्डने, बालकर्तने, नखलोमादिसुधारणे च दत्तावधानस्तन्मयश्च समभूत् परन्तु मुखेन स निरन्तरं किमपि किमपि भाषमाणो बभूव । यदा वयं स्थानात्तस्मादन्यत्र गमनाय व्यवसितास्तदासौ स्वहट्टाज्झटिति प्रोल्लम्प्यास्मत्पुरत आगम्य सविनयमवादीत्—

'अयि, भोः ! महाशयाः !! कुत्र प्रस्थिता भवन्तः ? नेत्थं मम हट्टं परित्यज्य श्रीमतां गमनमुचितम् ! आगच्छन्तु महाभागाः !! क्षणं मम हट्ट एव

विश्राम्यन्तु, चायपानं कुर्वन्तु, स्वपरिचयं प्रदाय ततो यथेच्छं विहरन्तामत्र नगरे. परं ममैतामभ्यर्थनां नास्वीकर्तुमर्हन्ति भवन्तोऽत्रभवन्तो महोदयाः !!!

तस्य तमिममनुरोधमाग्रहं च निषेद्धुमशक्नुवाना वयं सर्वे तद्धट्टमारुह्य काष्ठासनेषु न्यषीदाम। यावदेतत्सर्वं वयमकरवाम तावत्तस्य नापितस्य हट्टस्य पुरतोऽनेके जनाः क्षौरं कारयितुमुत्सुका अहमहमिकया समागत्य पङ्क्तिबद्धं तस्थुः ; उपविष्टेष्वस्मासु स पुनरपि स्वकर्मसम्पादने तत्परोऽभूत्।

स्वहस्ते रोमशत्रुं गृहीत्वा यथासौ बालकर्तनं करोति तथास्य जिह्वापि वाक्चापल्यमञ्चन्ती स्वकौशलमाविष्कुर्वाणोऽभूत्। स खलु नापिताचार्यो धारा-प्रवाहं भाषमाणो बभूव। स्वभाषणे स वैदिककालतोऽधुनापर्यन्तं घटितस्यैति-हासिकघटनाचक्रस्य वर्णनमकरोत्, समस्तदेशानां भूगोलं प्रत्यक्षं हस्तामलक-वद्व्यावर्णयत्, स सार्वराष्ट्रगतां राजनीतिं, क्रान्तिविप्लवविद्रोहादींस्तथा भारतीयं सर्वं नव्यं पुरातनं चेतिवृत्तं प्रमाणिकेन वर्णनाक्रमेणावोचत्, मध्ये मध्येऽनेक-संस्कृतश्लोकान्, सुभाषितानि, व्रजभाषाहिन्दीच्छन्दांसि, गुर्जरमहाराष्ट्रियोर्दू-भाषासूक्तीः, शास्त्रवचनानि, पौराणिकाख्यानानि, तथांग्लभाषावङ्गीयभाषा-नानाप्रान्तभाषाणां साहित्यसम्बन्धिनो नानाप्रसङ्गान् समवतार्य तत्रोपस्थितान् सर्वानपि ग्राहकानत्यन्तं प्राभावयत् स्वबहुश्रुतत्वेन ज्ञानगरिम्णा। प्रसङ्गात् स लक्ष्मीदेव्या झांसीमहाराज्ञ्याः प्रारभ्य महात्मनो गान्धेरहिंसान्दोलनपर्यन्तं सर्वमपि स्वराज्यप्राप्तिपुरुषार्थं, क्रान्तिकारिणां त्यागसाहसशौर्यादिकमपि चावर्ण-यत्। वयमपि तद्भाषणेनाकृष्टाइ वाभवाम। यदा चिरादपि तद्भाषणमुपसंहारं नो पस्पर्श तदाहं तमपृच्छम्—

अथ किमभिधानो भवान् ? का च भवतः शिक्षा दीक्षा वा ?? अथ चैव सुशिक्षितोऽपि भवान् किमर्थमेतन्नापितत्वं स्वीकृत्य लोकानां बालमुण्डनकर्मणि प्रवृत्तः ? के च भवतः कौटुम्बिकाः सदस्याः ? का वा जीविका ??'

अथ स श्रुत्वा ममैतान् प्रश्नान् कशाघाताहतस्तुरङ्गम इव स्वतेज-स्वितामाविष्कुर्वन् जगाद—'श्रीमन् ! बालानन्दाचार्य इत्यभिधानोऽहम्। जन्मना नापितोऽप्यहं संस्कारैर्ब्राह्मणत्वं गतः। वस्तुतो वयं नापिताः सर्वे ब्राह्मणा एव। परन्तु यज्ञकर्मसु ऋत्विजां क्षौरकर्मसु दीक्षिताः कालप्रवाहे पतिताः क्रमशो नापितत्वं गताः। अहं संस्कृते मध्यमां परीक्षां वाराणसेयामुत्तीर्णोऽस्मि, हिन्दीभाषायाः साहित्यरत्नपरीक्षामुदतरम्। आंग्लभाषामपीण्टरपर्यन्तमपठम्। किं न पश्यन्ति भवन्तस्तानीमानि मे प्रमाणपत्राणि नागदन्तेष्ववलम्बमानानि ?' इत्थं वदन् सः प्रमाणपत्राण्युत्थाप्यास्मत्पुरतो न्यधत्त। पुनरपि च स उवाच—'यद्यप्यहमतीवाल्पशिक्षितस्तथापि भूदेवानां गुरुजनानां कृपया साक्षरोऽहं

साहित्यादिविषयेष्वल्पाल्पं व्युत्पन्नोऽस्मि । अस्माकं शासकेन राज्ञा सहाहं विदेशानपि गतवानस्मि । तस्मान्मे लौकिकोऽनुभवो महान् । तत्र विदेशे गत्वापि मया 'स्वे-स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।' इति चिन्तयतात्मनः सहजं कर्म क्षौरमुण्डनादिकमेव हि शिक्षितम् । नानादेशवेशभूषोपयुक्तं क्षौरकर्म वालप्रसाधनादिकं विधिविधानोक्तं निपुणं जाने । अनेनैव स्वकर्मणा स्वकीयां जीविकावृत्तिमुपार्जयामि । मयान्तर्जातीयो विवाहोऽनुष्ठितः । शिक्षासमये विश्व-विद्यालये निवसतो ममैकया सुन्दर्या स्नातिकया सह प्रणयसम्बन्धो जातः । परिणामतो ह्यावामार्यसमाजविधिना गान्धर्वविवाहमकरवाव । मम द्वौ पुत्रौ कन्या चैकेति तिस्रः सन्ततयो वर्तन्ते । प्रथमपुत्रो मे विद्यालये बी. ए. कक्षायाम-धीयानोऽस्ति, द्वितीयश्चोच्चतरमाध्यमिकविद्यालये पठन्नास्ते । कन्या च मे पञ्च वर्षदेशीया प्राथमिकशालायां वर्णमालामभ्यस्यन्ती विद्यते । संततित्रयलाभा-नन्तरं मया शल्यचिकित्सया शिरामोक्षणं कारितम् । इत्थं प्रवर्तमानोऽस्म्यहं गृहस्थाश्रमे ।'

श्रुत्वैतज्जातविस्मयैरस्माभिः पुनः पृष्टम्—'सुशिक्षितो दीक्षितोऽपि च भवान् किमर्थमेतन्मुण्डनव्यवसायं करोति ? किमिति नौकरीं वा व्यापारं वा नाचरति ??'

सोऽवोचत्—'विप्रवरा ! संसारेऽस्मिन्न किमपि कर्म निन्दितमस्ति । धर्मधियापि चैतन्मम मुण्डनकर्म नास्त्येव गर्हितम् ! जानन्त्येव श्रीमन्तो यत् 'क्षुरस्य धारा निशिता' इत्युपनिषत्स्वपि प्रोक्तं ज्ञानविज्ञानविद्भिर्महर्षिभिः । अतोऽहं यदेतद्बालमुण्डनकर्माचरामि तन्मे निसर्गसिद्धं पराम्पराप्राप्तं सहजं कर्म । कर्मणानेनाहं स्वजीविकोपयोगि द्रविणमर्जयन्नपि धर्मकृत्यं सम्पादयामि, समाजसेवां साधयामि, लोकानां रुचिपरिष्कारं कुर्वाणः संस्कृतिमपि सुधारयामि । व्यवसायदृष्ट्यापि च मामकीनोऽयं व्यापारो बहुलाभप्रदः । यतोऽस्मिन्नवीने सभ्यताविकाशयुगे लोकाः सविशेषं शृङ्गारप्रिया बालप्रसाधनरसिकाश्च समुपलभ्यन्ते, ततो मदीयोऽयं कर्मयोगोऽनायासं सिद्धिप्रदः परिणमति । इदानीं यदा एम. ए. उपाधिधारिणो बी. ए. महाशयाः शास्त्रिण आचार्यादयोऽपि च निर्वाहोचितां साधीयसीं जीविकावृत्तिं सुखेन नासादयन्ति, तत्राहं स्वकर्मणैव प्रभूतं धनं लभे । तस्मादेवाहमात्मनस्तामिमां व्यवसायवृत्तिमभ्युदयकरीं निः-श्रेयसे क्षेमाय कुशलाय सर्वतो मङ्गलाय च मन्ये । तदत्र 'कः शोकः को मोहः ?'

एवं चपलस्य तस्य बालानन्दनापिताचार्यस्य प्रवचनानि शृण्वतामस्माकं भूयान् समयोऽतिक्रान्तः । 'यतः सतां सन्नतगात्रि सङ्गतं, मनीषिभिः साप्त-पदीनमुच्यते ।' इति वद्वयं जातपरिचयास्तद्वाक्पाटवमन्तर्मनसि प्रशंसन्तो मुहुरप्य-

पृच्छाम—'अयि, भोः ! नापिताचार्य !! ननु किमित्यत्र नगरे शून्यता स्तब्धता च परिदृश्यते ? किमर्थं चैते हट्टा विपणौ नोद्घाट्यन्ते । वयं यात्रिणोऽत्रागत्य तामिमां शून्यतामालोक्यातीव नैराश्यं गताः स्मः । अधुनावयमितः परावर्तितुमाकाङ्क्षामहे ।'

स खलु बालानन्दः किमपि गभीरं विचिन्त्य सस्मितमस्मान् पुनर्वभाषे—'श्रीमन्तः ! मया सञ्जातपरिचया भवन्तो ममातिथयो नैवमिदानीं सहसान्यत्र गन्तुमर्हन्ति । आगच्छन्तु, महाभागाः ! अहं श्रीमतां सर्वेषां परमप्रीत्या बालकर्तनं विदधे । ततोऽत्रैव शौचस्नानादिकाः क्रियाः कृत्वा, संध्यामुपास्य, भोजनं विधाय, क्षणं विश्रम्य तदनु यत्र रोचेत भवद्भ्यस्तत्र सुखेन गम्यताम् । यात्रिणो भवन्तोऽत्रेदं नगरमागत्य किञ्चित् कष्टमन्वभवन्निति मां दुःखाकरोति । मन्ये, क्षमाशीला भवन्तो मह्यं कमपि सेवावसरं नूनं प्रदास्यन्ति । नात्र प्रत्याख्यातुमर्हन्ति भवन्तः । आगम्यताम् ! आगम्यताम् भोः !!'

अथ तस्येदमाग्रहवचनं निशम्य वयं सर्वे परस्परं मुखान्यवलोक्य भावज्ञानं विचारविनिमयमिव च कृत्वा सङ्केतैरेव 'का हानिर्यदि वयमत्रैव निवसामश्चेद्यतो नात्र क्वचिदन्यत्रान्नपानादिकं सुलभं स्यात् !' इति तत्रैव बालानन्दनापिताचार्यस्य हट्टमातिष्ठाम । अथ सुखोपविष्टेष्वस्मासु स खलु नापिताचार्यः सर्वेषामस्माकमेकैकशः क्षौरं कर्तुमारभत । अस्मत्क्षौरकर्मानुतिष्ठतोऽपि तस्य वाग्धारा प्रवाहस्त्वजस्त्रं निर्निरुद्धं प्रवहन्नासीत् । तदैवास्मास्वेकेन सहयात्रिणा बालानन्दः पृष्टः—'अये, बालानन्द ! किमिति भवतोऽत्र नगरे सर्वत्र गर्दभा एव दरीदृश्यन्ते ?' स किलान्तर्मुखं मन्दं मन्दं विहस्याब्रवीत्—'मान्याः ! स्वराज्यात् पूर्वमत्र क्षात्रशासकानां प्रशासनमभूत् । अत्र हि राज्यस्य नागरिकाणां चाश्वा गजा गावोऽजा महिषाद्याः सर्वविधाः पशवः प्राचुर्येणाविद्यन्त, परं स्वराज्योत्तरं ते सर्वे संरक्षणाभावाद्विलयं जग्मुः । अधुना तु गर्दभा एवात्र महान्तमुपयोगं प्रतिष्ठामुत्कर्षं च दधते । यतो लोका गर्दभैरेवात्मनो हितं योगक्षेमनिर्वाहं धनलाभं सुखं शांतिं चामनन्ति । स्वयमहमपि च गजाश्वापेक्षया गर्दभानिमान् सुतरामुपयोगिनो मन्ये, यतस्ते स्वल्पमूल्येनैव सुलभा भवन्ति, तुषान् भक्षयन्तोऽपि महान्तं श्रमदानं कुर्वन्ति, दण्डाघातहता अपि स्वप्रभूणां विरुद्धं न किमप्यान्दोलनं प्रवर्तयन्ति, दिवानिशं स्वोद्योगेन राष्ट्रस्य नवनिर्माणे सर्वात्मना सहयोगं समर्पयन्ति । स्वचीत्कारनादैः सङ्गीतमाविष्कृत्य जनानानन्दयन्ति । पुनः स्वस्वामिभ्यो ह्येते प्रचुरं धनार्जनं कृत्वार्पयन्ति । तथा सति कथ नेमे रासभाः सम्मानमर्हन्ति ? अथाध्यात्मदृष्ट्यापि चैते गर्दभा महात्मानां चरितमनुकुर्वाणा जगति विश्वशान्तये प्रयतन्ते । त इमे सर्वथाऽहिंसा-

वादिनः। कस्याप्यहितं न चिन्तन्ति। सत्यं तथ्यं च ब्रुवते। अमीषु तपस्वि-तिक्षादयो गुणास्तु सर्वंसहानां मुनीनामपि सदाचारादतिरिच्यन्ते। यदा कदा त एते व्रतोपवासादिकमपि चाचरन्ति। न केवलमेते भौतिकीमेव श्रियं समृद्धिं च वर्द्धयन्ति वरं च परमपुरुषार्थवन्तो बलवन्तो वीरा राष्ट्रोन्नतये, समाजाभ्युत्थानाय स्वदलबलविवृद्धये ऽपि प्रभूतं परिश्राम्यन्तो न कमपि प्रत्युपकारमपेक्षन्ते। केचन निष्ठावन्तो भावप्रवणा गर्दभास्तु कविभ्यो लेखकेभ्यः साहित्यसेवार्थं कामपि भव्यां भद्रां रसवतीं प्रेरणामपि च प्रयच्छन्ति नाम नूनम्। एवं सति लोकसेवका इमे गर्दभाः सांस्कृतिकमुत्कर्षमपि राष्ट्रप्रजानां संसाधयन्तः कथं नादरणीयाः? अस्माकमत्रत्या नेतारोऽपि राष्ट्रिययोजनास्वेतेषां पक्षं समर्थयन्ते। तस्मादेवात्र स्थानीयाः प्रजापतयः (कुम्भकाराः) रजकादयश्च दूरदर्शिनो गर्दभपरिपालने ऽहम-हमिकया प्रवृत्ता बहुधनवन्तः सन्ति सञ्जाताः। अत एव हि केचनात्रत्याः प्रजा-पतयो विजयादशमी दीपावल्यादिपर्वप्रसङ्गेषु प्रागगजाश्वादीनिव राजानो यथा पूजयन्ति स्म तथैवाधुना गर्दभानपि पूजयन्ति। नानाविधैर्वर्णैश्चित्रयन्ति, पुनः शीतलादेव्या वाहनत्वेन तानेतानाराधयन्ति च।'

इत्येतावत् कथयित्वा बालानन्दो नापिताचार्यः क्रमशोऽस्माकं बालकर्तनं विधाय श्मश्रुकूर्चान् मुण्डयित्वा ततः सर्वेषां तैलाभ्यङ्गं कर्तुमारेभे। स खलु तैलमर्दनं कुर्वाणोऽपि मध्ये मध्ये नानाविधान् काव्यकथालापानपि च श्रावयन्नभूत्।

ततोऽस्मत्सहचारिणा केनचित् प्रोक्तम्—

'आचार्य! गर्दभशास्त्रस्य तु पारङ्गतो विद्वान् भवान्। तस्मादेवात्राद्य भवताऽश्रुतपूर्वं गर्दभगुणगानं कृतम्!'

श्रुत्वेदं बालानन्दो वक्रदृशा तमवलोक्य भूयोऽपि च वक्तुमारभत—

'मान्याः! भवन्तस्तु सर्वे बहुश्रुता ज्ञानवन्तो विद्वांसः। तत्किमेवमाश्चर्यं प्रकटयन्ति गर्दभगुणाख्याने? वस्तुतो गर्दभमहिमा तु साहित्येऽपि चोपवर्णितो विद्वद्भिः। किं न जानन्ति भवन्तो यथा नीतिशास्त्रविद्भिरुक्तम्—

"अविश्रामं वहेद्भारं शीतोष्णं च विन्दति।
स संतोषस्तथा नित्यं त्रीणि शिक्षेत गर्दभात्॥१॥'

अथापरं च शृंगारवर्णनप्रसङ्गेऽपि प्रोक्तम् केनचित्—

'आघ्रायाघ्राय गन्धं विकटमुखपुटो दर्शयन् दन्तपङ्क्तिं।
धावत्युन्मुक्तनादो मुहुरपि च रसाद्भ्रष्टया पृष्ठलग्नः॥

गर्दभ्याः पादघातद्विगुणितसुरतप्रीतिराकृष्टशिश्नो,
वेगादारुह्य मुह्यन्नवतरति खरः खण्डितेच्छश्चिरेणा ।।१।।

'क्षम्यताम्, दुःखान्तेऽस्मिन् काव्यप्रसङ्गे यदि मया किमप्यश्लीलं मन्योक्तं भवेत् अद्यतनचित्रटेपषु साक्षादश्लीलतापेक्षया त्वत्र नास्त्येवाश्लीलत्व-मिति मे द्रढीयान् हि विश्वासो निर्भ्रान्तं च मतम् । तथापि पक्षान्तरे स्यान्म-नागश्लीलता तदा क्षम्यताम्, क्षम्यताम् !'

एवमुक्त्वा स खलु बालानन्दो नापिताचार्यः पुनरपि स्वभाषणसूत्रं संसाधयन्नुवाच—'अहो माहात्म्यं गर्दभानाम् ! ननु जानन्त एव स्युर्भवन्तो यद्धि प्राख्यातयशा बङ्किमचन्द्रचट्टोपाध्यायमहात्म्यं लोकरहस्याभिधाने स्वकीये लेख-संग्रहग्रंथे 'गर्दभस्तोत्र'मपि लिलेख येन तत्प्रसिद्धिः सार्वभौमं सर्वतोदिक् प्रससार । समयो नास्ति, नोचेदहं गर्दभानां गुणोत्कर्षं तादृग्व्यावर्णयेयं येन साहित्यिके जगति महती क्रान्तिः काप्यभूतपूर्वा जायेत, आम्, नूनं जायेत क्रान्तिः !!'

अथैवं क्रमेण वयं सर्वेऽपि क्षौरकर्माभ्यङ्गस्नानादिकार्येभ्यः सानन्दं निवृत्ताः । ततस्तेन बालानन्देन वयं भोजनशयनार्थमपि मूहुर्मुहुरनुरुद्धाः परम् 'अधुना समयोऽतिक्रामति, अस्माभिरद्यैव सायन्तेन मृत्तरेणेतः प्रस्थातव्यमेव !' इति कथयित्वा बालानन्दनापिताचार्यस्य प्रतिष्ठानात् प्रस्थाय तत्कौशलं प्रशंसन्तो मरुत्त्वरयानानां विश्रामस्थलं पुनः प्राप्ता यथाकालमारुह्य यानं ततोऽग्रे यात्रामकरवाम ।

# स्वाभिमानः

आसीत् कश्चिन्महापराक्रमी राजा । स खलु सज्जनानामनुग्रहाय, दुर्जनानां निग्रहाय चातीव सुप्रसिद्धो बभूव । तस्य राज्ये प्रजानां योगक्षेमाय सरलसरला विधानविहिताः शासननियमा आसन् । यदि कोऽपि तस्य राज्येऽपराधं करोति स्म तदा स तं कठोरं दण्डयति स्म । यदि कश्चन सर्वकार-पदाधिष्ठितः कार्यकर्त्ताधिकारी सामन्तो राजपुत्रो वापि च प्रजानामुत्पीडनाया-पचेष्टते स्म, तदासौ राजा तस्मै निष्पक्षपातं कठोरतमं महान्तं दण्डं प्रयच्छति स्म । यदि कश्चन सम्माननीयः कुलीनो राजभक्तोऽपि च प्रमादालस्यादिदोषैः कर्तव्यात् स्खलति स्म तदा सः शासकः स्वयमेव हि तं स्वपुरतः समाहूय, तस्य भर्त्सनां कृत्वा कायिकं दण्डं ददाति स्म प्रचण्डपराक्रमवतस्तस्य नृपतेर्भयान्न कोऽपि च सहसापराद्धुं साहसं चकार । परं स नरेशः स्वयमेव सम्माननीयान् सुपदप्रतिष्ठितान्नृपतिनिर्विशेषान् महाकुलोत्पन्नान् सामन्तान् मन्त्रिणोऽधिकारिणो वा स्वल्पे क्षमायोग्येऽपि चापराधे सञ्जाते हस्ताहस्ति लगुडप्रहारैर्दण्डयितुमारेभे तदा तस्यास्य दुरभ्यासस्य प्रतिरोधायापवारणाय स्थगनाय च केचन सामन्ता नानोपायान्तराण्यन्वेष्टुं प्रयतिरे । अन्ततस्ते उपायमेकं विनिश्चित्य योजनापूर्वकं विषयेऽत्र नीतिं विनिर्णीयावसरं प्रतीक्ष-माणास्तस्थुः ।

अथ गच्छति काले कदाचित्तेन राज्ञा श्रुतं यत्तस्यैव राज्ञः कोऽपि सामन्तः सीमान्तप्रदेशे निवसन् तन्मार्गे व्रजतो यात्रिणो विशेषतो धनिकान् परदेशीयान् प्रसभं लुण्टितुमारेभ इति । सामायातायां तस्य सामन्तस्यात्या-चारसूचनायां राजाज्ञया रक्षाविभागस्याधिकारिणस्तस्य निग्रहं कर्तुं प्रयतिरे परन्तु दुर्दान्तस्य बलप्रचण्डस्य तस्य राजकुलोत्पन्नस्य प्रभावशालिनश्च सामन्त-शिरोमणेर्दमनं कर्तुं न पारयामासुः । अन्ततो राज्ञः कर्णकुहरेषु पीडितानां प्रजानामाक्रोशकोलाहलः कर्णपरम्परया भूयो भूयः प्रतिदध्वान । राजा च विषयेऽत्र सर्वं वृत्तं तन्त्राधिकारिणो विस्तरेण पप्रच्छ । तैश्च सर्वैर्निवेदितं यत् 'स खलु सामन्तः कृतेष्वपि प्रयत्नशतेषु रक्षाधिकारिणां वशं नायातीति ।

शस्त्रास्त्रबलसंदृप्तो धनसमृद्धिजुष्टोऽसौ यदा कदा स्वात्मरक्षार्थं राजपुरुषानपि च प्रहरते, तद्भयादासन्नप्रदेशवासिनो लोकाश्चापि सर्वसाधारणा बिभ्यति, न कोऽपि तदातङ्कात्तस्य दुष्प्रवृत्तिं षड्यन्त्रं वा कथयति, न हि कश्चन राजकीये न्यायालये निवेद्याभियोगं स्थापयति, न च तत्प्रभावात् कोऽपि साक्षित्वमपि दातुं साहसं कुरुते ! इत्थं सर्वानपि च तृणाय मन्यमानो यथेच्छं दुराचरति ! एवं दुर्धर्षः स दिनं प्रतिदिनं सर्वान् यात्रिणस्तन्मार्गगामिनः परिपीडयन्नराजकतां वितन्वानोऽकुतोभयं स्वच्छन्दं यथेच्छं च दुश्चेष्टमानो वर्वर्ति । वयमतीव लज्जामहे यत् स दस्युर्नाधुनापर्यन्तं वशमायात्यस्माकम् ! किमिदानीं कर्तव्य-मित्यत्र विषये देवपादा एव प्रमाणम् ।"

एतन्निवेदनमधिकारिणामाकर्ण्य स राजा प्रोक्तवान्—'आम्, जानेऽहमेतत्सर्वं हि वृत्तम् । भवन्तः सर्वे कञ्चित् कालं विषयेऽत्र तूष्णीमालम्बन्ताम् ! प्राप्ते हि समुचिते समये स्वयमेवाहं तन्निग्रहायोपायान्तरं किञ्चिद्विधास्ये !'

इत्थं गच्छति काले तेन लुण्टाकेन सामन्तेन बहवो निरपराधा धनिनो यात्रिणो लुण्टिताः । लोकेभ्यस्तेन बहुधनमपहृतम् । दुर्विषह्यस्य तस्या यमातङ्कः सर्वतः प्रससार ।

अथ कदाचित्तेन राज्ञा राजकीयकार्यव्यपदेशात् कमप्येकं महामहोत्सवं समायोज्यप्रजाजनाः प्रतिष्ठिता नागरिकाः सामन्ता अधिकारिणश्च समाहूताः । स दस्युराजोऽपि चात्र समारोहे सविधि सादरं समाहूतः । परिभुक्ते महोत्सवानन्दे, समाप्तिं गते च तस्मिन् महोत्सवमङ्गले मध्येसभं स दुष्टः सामन्त दस्युः सर्वं जनसमक्षं सोपचारमाज्ञप्तस्तेन राज्ञा—'सामन्त ! त्वया साकं कापि मन्त्रणा कर्तव्यास्ते, ततस्त्वं मामेकान्तेऽद्यैव मिल !' तामिमां राजाज्ञां लब्ध्वा स खलु सामन्तो राजप्रासादं व्रजन्तं तं राजानमनुवव्राज । प्राप्ते हि राजप्रासादस्य हर्म्यप्रकोष्ठे, सिंहासने सुखमुपमिष्टे च राजनि प्रच्छन्नदस्युः स सामन्तो भूपतिं ससम्मानं प्राणमत् । तस्मै योग्यमासनं प्रदाय राजा निर्मक्षिकं कृत्वा सामन्तमब्रवीत्—'श्रूयते. यत्त्वमस्माकं पुत्रनिर्विशेषाः प्रजा भृशंपीडयसि । तवायत्ते ऽस्मद्राज्यस्य सीमान्तप्रदेशे यातायातं प्रकुर्वाणानां यात्रिणां धनादिकम-प्यपहरसि । केषांचित् प्राणसंहारमपि कृतवानसि । एतत् सर्वमत्यन्तमनुचितं ते दुश्चेष्टितम् । विशेषतो यदा त्वं मे राज्यस्य सम्माननीयोऽसि सामन्तो भूयसीं राजप्रदत्तां जीविकां भुङ्क्षे, धनं च प्रभूतं तवाधीनं, राजसिका भूरिभोगाश्च त्वदायत्ताः, सदा सर्वदा सम्मानितोऽसि मया त्वं राजभक्त इति । तथा सति किमर्थमेतद्दुष्टाचरणमनार्यजुष्टं वर्तसे रे दुष्ट ! ब्रूहि, किं तेऽत्र विषये वक्त-व्यमास्ते ?

सामन्तोऽब्रवीत्--'राजन् ! नाहं तथाविधो यथा मां भवान् परिचिनोति। अहं तु श्रीमतां राज्यस्य सीमान्तरक्षक: प्रहरीव जागरूकं निवसामि तत्र मम ग्रामे। अन्यप्रान्तीयेभ्य श्चौरलुण्टाकेभ्य: प्रजानां रक्षणं कुर्वाणो राजसेवा-मेवाचरामि। यदा कदा बहिस्तो भवद्राज्यमागत्य ये चौरादय: प्रजा: पीडयन्ति तानहं दण्डयामि क्षात्रधर्मञ्च परिपालयामि। तदपि नाहं सदा सर्वदा करोमि प्रत्युत सति महति प्रयोजने विप्लवकारिणो विदेशादागतान् धनिनो जनानेव भीषयामि । इत्थमपि तदाहं करोमि यदा मे कोषो रिक्ततां याति, राजकीया: कर्मचारिणश्च मे भूमिकरलाभांशं त्वरितं न प्रयच्छन्ति यथाकालं तदाऽभावशतदु:खितोऽहं नान्यत्किमप्युपायान्तरं पश्यन् कुटुम्वपरिपोषणोपयुक्तमेव धनं किंचिद् गृह्णामि। राजकुलोत्पन्नोऽहं सम्माननीय: क्षत्रियो वीर: स्वभुजवलाश्रयं विहाय कामन्यां वृत्तिमाश्रयेयम् ? श्रीमद्भिर्नाहमपराधी परिशङ्कनीय: । क्षम्यतां देव ! क्षन्तुमर्हति भवान् माम् ! मान्यथा मां सम्भावयतु !!'

इत्थं वदतस्तस्य सामन्तस्य, राजान्त:क्षोभं संवृणीतुं न प्रवभूव। क्रोधपरवश: सहसा सिंहासनादवप्लुत्य, हस्तेनैकेन काष्ठदण्डमुद्यम्य तं सामन्तं यावत्ताडयितुं चेष्टते तावदेव स सामन्तो दण्डोद्यतं प्रहारायोत्थापितं नृपस्य हस्तं प्रकोष्ठे दृढं जग्राह स्वहस्तेन ।

एवमकस्मादवितर्कितसम्भवं सहसा जाते तस्मिन् विचित्रे महति व्यतिकरे राजा च दस्युसामन्तश्च द्वावपि तौ क्रोधाध्मातौ कोपपरवशौ स्थूलस्थूल मुच्छ्वसन्तौ परस्परं मुष्टामुष्टि निगडितौ, नेत्राभ्यां वह्निज्वालाविस्फुलिङ्गा-निवोदिगरन्तौ स्तब्धौ जडौ किंकर्तव्यविमूढाविव चकितचकितौ तस्थतु:। राजा किमपि नो भाषते, न च सामन्तोऽपि वज्रमुष्टिं विमुञ्चति। अथ व्यतीते क्षणार्द्धप्राये समये सामन्तो राजानमाह—

'राजन् ! न त्वं जानीषे किं यदहं त्वादृश एवैक: स्फूर्जद्बलवीर्यशक्ति: क्षत्रियोत्तम: ! त्वं राजा, सामन्तश्च तेऽहम् ! गुणकर्मस्वभावशीलैर्नाहमल्पी-यस्यां मात्रायां त्वत्तो न्यून: ! वयं सामन्ता एव ते भुजस्वरूपा: ! अस्मान्नि-राहत्य महाकालो मृत्युञ्जयोऽपि न स्यात् कुशली !! त्वं पुनर्मां रणनिमन्त्रण-मदत्वैवाहूय चैकाकिनमत्रापच्छलात् काष्ठदण्डेन प्रहर्तुमुद्यतोऽसि !!! लज्जायोग्य-मेतत्ते दुष्कर्म ! धिक्त्वाम् !! त्वयैतदिदमित्थं ज्ञातव्यं यदहं न ब्राह्मणो, न स्त्रीजनो, न च दास: ! अहं त्वेक: सत्योऽस्मि राजभक्त: !!! सार्वकालीनस्तव शुभचिन्तक: !!! मम शरीरं, मम प्राणा:, शिरो, रक्तमज्जादि समस्तमपि त्वत्कृते समुत्सृष्टुमुचितं भवति सत्यावश्यके महति प्रयोजने। परन्तु श्रीमांस्त्वत्र स्वयमे-वात्मना मां ताडयति काष्ठेन पशुमिव, तदसह्यम् !!! विद्यमाने ममात्मबलेऽक्षुण्णे

हि वीरोचिते साहसोत्साहगुणेऽविकलायां देहशक्तौ, स्वस्थेषु प्राणेषु मे प्रवहमाणे ? सक्षमे भौतिके देहबन्धे, वर्तमानायां मम पुरुषत्वाभिमानचेतनायां, स्वस्थे च मयि जीवति सति त्वं मां दास जमिवं, क्षुद्रं शूद्रमिव च मां हन्तुमभिलषसि, तन्नास्त्येव सम्भवमाकल्पान्तम् !!! तद्विरम्यतां दुर्व्यापाराद्दुस्साह साद्वास्मात् ! अथ च विचार्यतां क्षणमेकम् । तवाधीनं समग्रं राज्यतन्त्रम्, महती च ते शक्तिः, सुतरां सुलभास्ते कुशलाः कार्यकर्त्तारो, न्यायालयाश्च तव राज्ये दुष्टानामपराधिनां दण्डविधानाय सुप्रतिष्ठापिता विद्यन्ते । सत्यप्येवं विनैवाभियोगं, विना साक्षिणं, विना प्रमाणं, विनैवान्वेषणं च केवलं कर्णपरम्परया श्रुतेन सत्येनासत्येन वा तथ्यशून्येन चापवादमात्रेणैव मामिह हन्तुमुद्यतस्तन्नास्ति तवानुरूपम् ! नाहमत्र त्वत्तो लगुडदण्डमर्हामि सर्वथा ! मम सर्वस्वमपि तव हितायार्पयितुं युज्यते, परं मे पुरुषत्वाभिमानिनः स्वाभिमानो वात्मगौरवं वा यावदंशतोऽपि मय्यवशिष्यते न तावत्त्वं मामित्थमपमन्तुं सक्षमोऽसि ! केवलं कापुरुषा भयोद्विग्ना भीरवो दासत्वभावापन्नाः पराधीना निर्वीर्याः स्त्रीसामान्या जना एवेत्थं काष्ठदण्डप्रहारपूर्वकं शारीरं दण्डं सहन्ते न तु पुरुषसिंहा मादृशाः !!अहं तवैव सदृशः कुलीनो राजपुत्रस्त्वत्तो विडम्बनामीदृशीं सोढुं न :समर्थः ! अहं त्वत्राद्येदमाशासानोऽभूवं यन्नरपतिरयमस्माकं प्रभुःस्वामी कदाचिन्मयि भृशं प्रसन्नो मामेकान्ते समामन्त्र्य किमपि पारितोषिकं पुरस्कारमुपाधिं वा प्रदास्यति, परं श्रीमांस्तु मां बालकमिव यष्टिकया प्रहर्तुं पराक्रमत ! महदेवाश्चर्यमेतत् !! धन्यस्ते पुरुषार्थं एषः !!! अथवा धिक्त्वां, मामपि च मुहुर्धिक् यदहमेवंविधं पुरुषपुङ्गवं स्वस्वामिनमासादयम् !!!'

इत्थमुक्त्वा मौनमाश्रिते हि सामन्ते स राजामर्षवेगपरवशः किञ्चित् स्फुरिताधरोऽब्रवीत्—'दुष्टाशय ! विमुञ्च मे प्रकोष्ठम् !! दूरमपयाहि मे दृष्टिपथात् !!! नाहमतोऽधिकं त्वामुद्दण्डं किमपि सम्भाषितुमुत्सहे !!!

एवमुक्तवति राजनि स भीमाकृतिर्वज्रपुरुष इव सामन्तपरिवृढो भूपालस्य तस्य हस्तप्रकोष्ठं मुक्त्वा ततो यथायातं तथा झटिति प्रचलितः ।

अथ किञ्चिद्दूरमपगते तस्मिन् राज्ञा तस्य सामन्तस्य शौर्यं, बलं, वीरत्वं, निर्भीकतां, साहसं, स्फूर्तिमत्त्वं, क्षात्रत्वाभिमानं, जातिगौरवमात्मनिर्भरतां, पुंस्त्वं, तेजस्कत्वं चविचिन्त्यान्तर्मनसि परमा प्रसन्नतान्वभूयत । तत्क्षणमेव भृत्यानाहूय तस्मै महान्तं राजोचितं पुरस्कारं ससम्मानं प्रादातुमादिदेश राजा । स च सामन्तोऽपि पुरस्कारं स्वीकृत्याश्वमारुह्य स्वग्रामाभिमुखं प्रतस्थे ।

# अकिञ्चनस्यौदार्यम्

एकदा ग्रीष्मावकाशे रेलगन्त्रीयात्रां कुर्वाणोऽहं स्वजन्मभूमिं प्रति गच्छन्नासम् । स्वयमहं, मामकीना गृहिणी, मदीया दुहिता, मम दौहित्रश्चेति वयं सर्वेऽपि बास्पयानस्य भोजनालयप्रकोष्ठानुलग्नं तृतीयश्रेणिकं कक्षमुपाविशाम ।

यदा रेलयानं विश्रामस्थलात् प्रचलितं, क्रमशः शनैः शनैर्गतिशीलं तद् द्रुतवेगप्रवाहमाससाद, तदा कक्षयोर्द्वयोर्मध्यवर्तिनं द्वारकपाटमुद्घाट्य कश्चिदेको भोजनालयस्य भृत्यो मुक्तकेशकलापो जीर्णशीर्णविच्छिन्नपरिधानवस्त्रो, निरन्तरं भ्रमणशीलत्वात् रात्रिन्दिवं तत्र धूमशकटीसंलग्ने महानसे परिश्रमशिथिलाङ्गो ऽस्तव्यस्तसमस्तो, जागरणखिन्नः, स्ववेशभूषादिषु मन्दादरोऽनियमितस्नानशौचक्रियो, रूक्षश्मश्रुकूर्चकेशकलापो धूलिधूसराङ्ग इव, मलीमस इवास्मदधिष्ठितं कक्षं प्रविश्य, संसिद्धं भोजनं कर्तुं ग्राहकत्वमगङ्गीकर्त्तुं च तत्र स्थितान् सर्वान् यात्रिणो भूयो भूयः पृच्छन् तस्थौ । रेलगन्त्रीतीव्रजवं व्रजन्ती समभूत् ।

वयं ब्राह्मणत्वात् वर्णाश्रमधर्मानुगतमाचरमनुवर्तमाना यात्रासु पथि नितान्तं भोजननिर्व्यपेक्षाः स्वभावतोऽन्नपानादिषु निस्पृहा, अतस्तस्य वदतोऽपि भोजनालयसेवकस्य तस्य वचो निरपेक्षभावं शृण्वतो ऽप्यशृण्वन्त इव न च तद्विषये बह्वादराः परस्परं वार्तालापसंकथासु परमार्थतो दत्तावधाना अभूम । परं दौहित्रो मे शिशुर्द्विवर्षदेशीयः 'भोजनं क्रियताम् !' इति वचः श्रवणसमकालमेव बालसुलभं हठमाग्रहं च नाटयितुमुपचक्रमे । वयमात्मनो बालकं तदाग्रहान्मोचयितुं मधुरमधुरालापैर्विश्रम्भवाक्योपचारैस्तं प्रसादयन्तः समुपलालयन्तश्च तन्मनोवृत्तिमन्यत्राक्रष्टुकामा, आगामिनि रेलविश्रामस्थले दुग्धान्नपानादिकं तस्मै दातुं प्रतिजनाना विश्वासाश्वासशतैस्तन्मनो विनोदयन्तो हर्षनिर्भराः पन्थानं, कालं चातिवाहयन्तोऽभूम ।

तत्र कक्षान्तरं प्रविश्य नवागतः स भोजनालयस्य भृत्योऽस्माकं सर्वमपि तं कौटुम्बिकं सम्वादं तद्गतेन मनसा शृण्वन् क्षणं मां, क्षणं मे गृहिणीं, क्षणं मम दुहितरं, बालं च मम दौहित्रं पुनः पुनः स्वात्मीयानिव सुपरिचितानिवाव-

लोकनपरस्तस्थौ। अस्माकं वेशभूषादिकं परिपश्यन् मिथो भाषणसम्वादगतां भाषां च शृण्वानः स निगूढं किमपि रहस्यमयमिव चिन्तयन् व्यतीतां कामपि चिरस्मृतिं संस्मरन्निव तद्विषयेऽस्माकं निरपेक्षतां, व्यक्तित्वं, शिक्षां, दीक्षां, जीवनस्तरं, व्यवहारं च सर्वं तत्त्वतः परिचिन्वान इव कियन्तं कालं स्वहृदि किमपि विचारयन्निव कथमप्यात्मविश्वासात् स्फुरितोत्तराधरोऽभाषतास्मान्—

'अहं भावत्के प्रान्ते भवदीये नगरोपकूले ग्रामे लब्धजन्मा, अर्जुनसिंहाभिधानो राजपुत्रोऽस्मि। कुलीनोऽप्यहं शिक्षादीक्षाविरहितः स्वस्य कौटुम्बिकस्थितिवशात् जीविकावृत्तिमुपार्जितुं कैशोरे वयस्येव मोहमयीं गतोऽत्र रेलगन्त्रीभोजनालये भृत्यत्वं निर्वहामि।'

अथैतन्निशम्य तद्वचोऽस्माभिः स्वनगरोपकण्ठं वर्तमानेषु ग्रामेषु निवसतां परिचितानां जनानां कुलपरम्परागोत्रनामोच्चारपूर्वकं कृतैः प्रश्नशतैः स परिचितः प्रतीतश्च यदसौ नूनमस्मज्जन्मस्थानभूभागे जातः कुलीनः कश्चित् क्षत्रियो जनः परिस्थितिवशाद् भोजनालयभृत्यत्वं स्वीकृत्य कथमपि कष्टं जीवतीति विभावितम्। सहानुभूतिपूर्णैः समवेदनायुक्तैरुपचारवद्भिर्वचनैर्वार्ताविनोदैश्च कियान् समयो माधुर्येण व्यतीतः।

अथ च सम्प्राप्तेऽग्रिमे विश्रामस्थले, यत्र रेलगन्त्री प्रायेणापेक्षातोऽधिकं किञ्चिद्विश्राम्यति, वयं यानकक्षान्नीचैरुत्तीर्य दुग्धपानेन, मिष्टान्नेन, फलैश्च दौहित्रं परितोष्य पुनर्यानमारुह्य प्रस्थिताः।

मध्येमार्गं धावमानायां रेलगन्त्र्यां, वर्द्धिते च तज्जववेगप्रवाहे, प्रोक्तस्यार्जुनसिंहस्याधीनः कोऽप्यन्यस्तत्सहायको भृत्यो महतीं स्थलीमेकां नारङ्गैः कदलीफलैः सेवैर्मतीरैरन्यान्यैश्च विविधैः फलैः परिपूर्णामुद्धृत्य हस्तयोरर्जुनसिंहमपृच्छत्—'भोः! कस्मै समर्पयानि?' अर्जुनसिंहोऽपरकक्षान्तः स्थितोऽब्रवीत्— 'तत्र यो हि महाराजो विराजते तस्मै सादरं सविनयं प्रीत्या च समर्पय स्थालीमेताम्! गच्छ, निवेद्य स्थालीं शीघ्रमेव हि निवर्तस्व!' इति।

सोऽर्जुनसिंहस्य भृत्यो दृशं प्रसार्य तत्कक्षान्तर्वर्तिनः सर्वान् यात्रिणो महता प्रयत्नेनातिक्रम्य झटित्यस्माकं पृष्ठवर्तिनि दारुपट्टिकासने निषण्णायैकस्मै त्रिपुण्ड्रधारिणे, सिन्दूरारक्तकपोलाय, जटाजूटमण्डितशिरसे, मालामण्डितगलाय, रक्तकाषायाम्बरधारिणे, भस्मोद्धूलितसर्वाङ्गाय, टिकिटरहिताय, साधुमहाराजाय तां फलसम्भारपूर्णां स्थालीं सादरं समर्प्य ततः प्रतिनिवर्त्य पुनर्गमनाभिमुखो भूत्वा गन्तुमचेष्टत। स च साधुमहाशयोऽकस्मात् समर्पितां तां स्थालीं

दृष्ट्वा विस्मयं गतः स्वप्नोत्थित इवात्मानं यावदधिगतवांस्तव स्थितिज्ञानं सम्पादयेत् तावत्तस्य मनोदशातीव विचित्रा सन्देहदोलामाश्रयन्ती तां स्थालीमुपहाररूपेणार्पितां स्वीकर्तुमस्वीकर्तुं वा 'स्थातुं गन्तुं द्वयमपि सखे! नैव शक्तो द्विरेफः।' इतिवत् न काममपीति कर्तव्यतामाललम्बे। यतः स साधुर्महात्मान्यप्रान्तीयोऽस्मत्प्रादेशिकीं ग्राम्यभाषामजानानोऽभूत् तस्मादर्जुनसिंहेन सार्धं तत्र कक्षे क्षणात् पूर्वं जातमस्माकं परस्परं वार्तालापैः सद्यः सम्पन्नं परिचयलवलेशाङ्कुरं तत्त्वतो नो विवेद तस्मात् क्षणं विभ्रान्त इव किंकर्तव्यविमूढ इव दिङ्मूढ इवालक्ष्यत।

अत्रान्तरे स खल्वर्जुनसिंहोऽपरकक्षातोऽस्मत्कक्षं प्रविश्य स्वभृत्यं त साधोः सकाशात् फलस्थालीं पुनरादातुं प्रणोदयन् मामित्थमुवाच—'धन्योऽसौ दिवसो यत्राद्यास्माकं पूज्याः पण्डिताः स्वजन्मभूलब्धजन्मानः प्रान्तबन्धवो भूदेवा अकस्मादत्र मिलिता दर्शनैश्च मामकिञ्चनमनुगृहीतवन्तः! विषमेऽत्रास्थायिनि भ्रमणशीले जीवने, स्वीकृते जीविकोपार्जनाय भोजनालयभृत्यत्वकर्मणि, सर्वतः पराधीनो दीनः सर्वसाधनहीनोऽहं राजपुत्रः पण्डितानां भवादृशां कामन्यां, सम्भावनां, सपर्यां, पूजां, सत्कारं वा कर्तुं पारयेयं, भगवन्!' इति विनम्रं वचो यावदुपसंहरते, तावत्तां फलपूर्णां स्थालीं साधोः सकाशादानीय सोऽर्जुनसिंहानुचरो मम पुरतः स्थापयामास। नाहममज्ञासिषं यदर्जुनसिंहोऽत्रान्तरेऽवकाशमासाद्याकस्मात् सहसा क्व नु कुतस्तिरोदधे।

मनसि मे विकल्पः समभूत्—'सोऽयमर्जुनसिंहोऽस्माकं प्रान्तबन्धुरतिकष्टां दशां गतोऽपि जन्मभूमिवात्सल्यात् स्नेहार्द्रहृदयत्वाच्च क्षत्रियत्वेन मां ब्राह्मणपण्डितं पूज्यमवधार्य सम्भावयितुमुद्यतः पुनर्मे दौहित्रस्य बुभुक्षाकुलत्वं सम्भावयन्नत्र रेलगन्त्रीकक्षे मह्यं फलस्थालीं समर्पयति। तस्येयं स्नेहशीलता, त्यागभावो, व्यवहारपाटवं च पुनः शिक्षितान् ब्राह्मणान् प्रति पूज्यतामतिरिति सर्वे गुणा मामेतां स्थालीमुपायनत्वेनोपस्थापितां स्वीकर्तुं प्रेरयति। तन्मया सैषा स्वीकर्तव्या न वेति महांस्तर्कविभ्रमावर्तः क्षणमेकं मे मानसं भावतरङ्गैर्व्यालोडयत्। अथान्यो विचारविकल्पः सहसा प्रोद्दिदीपेऽन्तर्मनसि मे—'अयमर्जुनसिंहः श्रमजीवी, निरक्षरोऽशिक्षितो, मदपेक्षयागृहधर्मेष्वनासादितशोभनस्थितिर्दयनीयश्च वर्तते। सत्यपि तत्स्नेहातिरेके, श्रद्धाभावे, पूज्यत्वविचारे च मयि, कथं नाम मयास्य फलोपायनं स्वीकर्तव्यम्?' इति। अन्यच्चाभून्मेऽन्तर्हृदि—'फलस्थालीयं क्षणात् पूर्वमेवाधुनास्मै साधवे महात्मने समर्पिताऽभवत्। गृहस्थधर्मावलम्बिना शिक्षितेन पण्डितेन च मयान्यस्मै प्राक् समर्पितमुपायनं परस्मै सङ्कल्पितं स्वीकर्तव्यम्? स्वीकृतमपि च तन्न मे श्रेयसे स्यात्!

इत्यादिस्थालीफलानां स्वीकारे स्वात्मनः पात्रत्वे कोऽप्यनिर्वचनीयोहापोहो महानजायत।

यावदहमेतत्सर्वमवधायालोचयेयं, स्वात्मनः कर्तव्यनिर्णये प्रभवेयं तावदर्जुनसिंहः कुतोऽप्यागत्य स्वयमेव तां स्थालीं मत्पुरतः संस्थाप्य निर्विकारभावेन भोजनालयकक्षं गतः।

अथेदानीं मम गृहिणी तत्सर्वं पूर्ववृत्तं निपुणं जानन्ती भावगम्भीरं किमपि मां नेत्राभ्यामेव पृच्छन्ती—'अथ किमधुना कर्तव्यम् ?' इति ममानुमतिं प्रतीक्षमाणेव तस्थौ। शिशुश्च मे दौहित्रो मम दुहितुरङ्के प्रसुप्तः। दुहिता च ताटस्थ्यभावेन सर्वं जानानापि शिशोः सपर्यायां मग्नासीत्। 'स्वीक्रियन्तां तानीमानि फलानि प्रीत्या समर्पितानि स्वप्रदेशवासिना बंधुना !' इति पत्नीमुक्त्वा स्थाल्यां रूप्यकपञ्चकं निधाय सा तद्भृत्यद्वारार्जुनसिंहं प्रति परावर्तिता।

अर्जुनसिंहः कक्षान्तरात्पुनरागत्य रूप्यकाणि परावर्त्य मामुपालब्धुमारभत—'पूज्या भवन्तो भूदेवा अस्माकं क्षात्राणाम् ! यद्यपि भवन्तः शिक्षिता दीक्षिताः सर्वसम्पद्वैभवसम्पन्ना अतीव निःस्पृहास्तथापि स्नेहान्मया समर्पितमिदं 'पत्रं पुष्पं फलं तोयं' नास्वीकर्तुमर्हन्तीति नाहं गुरुभ्यो रूप्यकाणि गृहीतुं पात्रं दीनोऽपि क्षत्रियत्वादिति तद्रूप्यकपञ्चकं मम हस्ते धृत्वा त्वरितमपगतः।

ममानुमत्या तानि सर्वाणि फलानि गृहीत्वा मे धर्मपत्नी तत्र कक्षे स्थितेभ्यः सर्वेभ्यः सहयात्रिभ्यो व्यतरत्। तस्मै साधुमहात्मनेऽपि च कानिचित्फलानि समर्पितानि। सर्वेषु तत्फलाहारं कुर्वाणेषु कक्षान्तवर्तिषु यात्रिषु, कक्षस्य द्वारदेशे यात्रिणां चिटिकानिरीक्षकोऽकस्मात्प्रादुरासीत्। टिकिटविरहितः स साधुर्महात्मा कमपि मानसोद्वेगमन्वभूत्। 'वेपथुर्मलिनं वक्त्रं दीना वाबगद्गदः स्वरः' इत्यादिकं सर्वं तस्य मुखाकृतौ पर्यदृश्यत। तावत् सर्वैरपि च तत्कक्षान्तःस्थितैः सहयात्रिभिर्मानवधर्मानुरोधात् कानिचित् फलानि तस्मै सद्योऽन्तः प्रविष्टाय 'बाबवे' चापि समर्पितानि।

सोऽपि टिकिटबाबुस्तत्रैवोपविश्य वार्ताविनोदालापैः प्रमोदमानमानसः फलाहारे सरुचि प्रसक्तः। जाते हि तावति परिचयलवलेशे सश्चिटिकानिरीक्षकः सौहृदं सभ्योचितमात्मीयताभावं सामाजिकीं सभ्यतां परिपालयन् विनैव टिकिटनिरीक्षणं यथायातस्तथा गतः। स च साधुर्महाराजः पुनः स्वस्थितिं निर्बाधामिवान्तर्मनस्याकलयन् किमपि स्वास्थ्यं लेभे। तस्य हर्षोत्फुल्लयोर्नयनयोर्द्वयोरुल्लासो हर्षः सन्तोषश्च परिलक्ष्यते स्म साडम्बरम्। ततः प्रबुद्धो मे शिशुर्दौहित्रः

फलसम्पदं परितः प्रकीर्णां विलोक्य बालोचितां मुदमनुभवन् महान्तमानन्दातिरेकमनु क्रीडासु प्रसक्तः। रेलगन्त्र्यां विश्रामस्थलं प्राप्तायां सत्यां वयं स्वपथावलम्बने व्यस्ता अभूम। स च साधुर्महाशयो मन्दं मन्दं हसन् पुनः पुनरस्मान् परिवर्त्य परिवर्त्य परिपश्यन् दृष्टितोऽस्माकं तिरोहितोऽभूत्। यदाहं स्वात्मीयैः सहितो नगरं गन्तुमेकमश्वयानमारुह्य मार्गमनुलग्नस्तदा बाष्पयानं चीत्कारं कृत्वा मन्दं मन्दमपसर्पितुमारेभे। चलन्त्या रेलगन्त्र्याः कक्षावातायनगवाक्षे स्वोर्ध्वाङ्गं बहिर्निष्कास्य सन्तुलितदेहभारोऽर्जुनसिंहोऽश्वरथारूढं मां सस्वजनं साञ्जलिबन्धं प्रणमन् कामपि मनोवाचामगोचरां परां निर्वृत्तिं संतोषं सुखं कृतार्थतामिव समनुभवन् बभूव। बाष्पयानं च क्रमशो गतिवेगप्रवाहमासादयत् शनैः शनैर्मम दृष्टितस्तिरोदधे।

—०—

# हास्यपरवशो राजकुमारः

कस्यचित् नृपस्य एकः राजकुमार आसीत्। सर्वैः गुणैः युक्तः अपि सः सदैव हास्यप्रियोऽभूत्। स सदा सर्वदा हसन् एव तिष्ठति स्म। यदा स हास्ययुक्तो भवति स्म तदा स किमपि अन्यत् कार्यं यथार्थतः सम्पादयितुं न प्रबभूव।

संयोगात् एकस्मिन् दिने तस्य भूपस्य राजभवने धनं चोरयितुं चौराः प्रविष्टाः। स्वस्य कक्षे प्रविष्टम् एकं चौरं स राजकुमारः बलात् भुजपाशे बध्वा 'चौरः ! चौरः !!' इति उच्चैः आक्रोशत्। राजकुमारस्य तम् आक्रोशं श्रुत्वा सः राजा तत्र आगच्छत्। राजकुमारेण धृतं तं चौरं दूरतः दृष्ट्वा राजा युवराजम् अवोचत्—'भोः ! भोः ! राजकुमार !! तव सहायतां कर्तुं चौरं च दण्डयितुम् अहम् अधुनैव आगच्छामि। तावत् त्वं चौरं धृत्वा तिष्ठ। यदि चौरः त्वां हासयितुम् अपि चेष्टेत तथापि त्वं तं मा मुञ्च !' इति। राजकुमारः स्वजनकस्य तस्य नृपस्य तद् वचनं श्रुत्वा स्वहास्यस्य स्मृतिं लब्ध्वा स्वभाववशात् हसितुं प्रारभत।

अथ चौरः राजकुमारस्य हास्यदुर्बलतां ज्ञात्वा स्वयमेव तं कुमारं बहु हास्यं जनयित्वा हासयामास हास्यमग्नः कुमारः यावत् हास्यपरो भूत्वा ही, ही ही !' इति हसति तावत् चौरः तस्य भुजपाशस्य बन्धनं शिथिलं कृत्वा स्वात्मानं मोचयित्वा तत्क्षणं शीघ्रं पलायितः।

अतः वयमपि वृथा हास्यपरवशतां स्वभावे स्थिरीकृत्य राजकुमार इव न कदापि स्वकार्यं विनाशयेम ! महता कारणेन विना हास्यं नाम धीरतां, वीरतां, शौर्यं, पाण्डित्यं अन्यान् च सर्वान् पुरुषोचितान् गुणान् नाशयति। वृथाहास्यं अनर्थकरम् इति ज्ञातव्यम्।

—०—

# त्रयस्तमाखुव्यसनिनः

कस्मिंश्चित् स्थाने त्रयस्तमालपत्रसेविनो जनाः समवेताः। तेष्वेकस्त-माखुपत्रचूर्णं नस्यरूपेण, अन्यो धूम्रपानरीत्या, तथापरश्च सुधामिश्रितफक्किका-रूपेण सेवते स्म। यदृच्छया तत्र मिलितास्ते त्रयोऽपि व्यसनिनो भूमावुपविष्टाः स्वस्वपद्धत्या तमाखुसेवनपरा मिथो मोदमाना गोष्ठीसुखमनुभवन्त आसन्।

अत्रान्तरे कश्चिदन्यो निर्व्यसनः सज्जनो मादकद्रव्यनिषेधव्रतदीक्षितः समाजसुधारकस्तत्रागच्छत्। नमस्काराभिवादनादिकं शिष्टाचारं निर्वर्त्य स नवागन्तुकस्तानपृच्छत्—'अयि भोः! किमर्थं यूयमत्र स्थले समवेताः स्थ ? किं वाथवात्र कुरुथ ??' इति। तैस्त्रिभिरप्यथ तमालपत्रसेवनरसिकैस्तमाखुपत्र-सेवनस्य लाभा गुणा आनन्दोद्रेकाश्च वर्णिताः। प्रसङ्गात्तत्रोपविष्टानां तेषां परस्परं वार्ताविनोदालापाः प्रावर्तन्त। तेष्वेकेनोक्तम्—

'तमाखुपत्रं राजेन्द्र ! भज मां ज्ञानदायकम्।'

अथान्योऽवदत्—

'बिडौजाः पुरा पृष्टवान् पद्मयोनिं
धरित्रीतले सारभूतं किमस्ति ?
चतुर्भिर्मुखैरित्यवोचद्विरञ्चि-
स्तमाखुस्तमाखुस्तमाखुस्तमाखुः ! ? ।।"

अपरोऽप्युक्तवान्—'अरे ! किमर्थं वृथा तमाखुं निन्दसि ? पृथिव्यामिह कोऽस्ति तादृशो मनुष्यो यो हि तमाखुं नैव सेवते ? यावदहं जाने, भूलोकेऽत्र महन्तो महात्मानो महर्षिप्रवराः साधवः संन्यासिनो विद्वांसः सम्राजो राजानो धनिकाः व्यापारिणो देशभक्ता नेतारोऽनुयायिनस्तथा दीना हीना निर्धनाः श्रमिकाः कर्षका वनवासिनो ग्रामीणाश्चापि सर्वे समानं तमालपत्रमासेवन्ते। त्वं न जानीषे किं यदत्र संसारे महतीं क्रान्तिमभूतपूर्वां कुर्वाणाः शासनपटवो राजनीतिकूटतन्त्रज्ञा गौराङ्गाः श्वेतचर्माणः पीतत्वचः कृष्णशरीराः रक्त-देहाः सर्वसाधारणाश्चापि तमाखुपत्रं सेवमाना मानवोत्तमा दरीदृश्यन्ते। अथ विज्ञानाविष्कारैर्जगज्जनानां चेतांसि चमत्कुर्वन्तो वैज्ञानिकाश्चापि तमाखुपत्रं

सेवमाना महास्त्राण्याविष्कुर्वते ! अर्थशास्त्रिणो व्यापारनिपुणा वणिग्जनास्तु तमाखुपत्रमन्ताराष्ट्रियमूल्यविनिमये महदुपकारीति मन्यन्ते । तस्मादलं तमाखुनिन्दया !'

अन्योऽब्रवीत्—'अये, भगवन् ! दयस्वात्मनि, दासेषु च तेऽस्मासु कृपय, मात्र किमपि विप्रियं ब्रूहि, तमाखुसम्बन्धि किमपि मा प्रयच्छ प्रतिवचनं निन्दात्मकम् ! अथ त्वं किमर्थं निरर्थकमत्रागत्यास्माकमुपस्थितानां गोष्ठीरसं नीरसं विरसं च विदधासि ? यदि त्वं स्वयमेवेदममृतकल्पं सर्वौषधिरससारं तमाखुपत्रं न सेवसे तत्कस्मात्त्वमेतन्निन्दसि ? दयालो ! मा कोपं भजतु भवान् !! यदि च तेऽभावस्थानमस्मत्सङ्गतौ न रोचते, तदा तेऽयं शोभनः पन्था यथायातं 'श्रीमता' तथैव ससुखं 'गम्यतामथवात्र तूष्णीं' स्थीयताम् !!'

तेषां त्रयाणामपि तमाखुपत्रसेवनव्यसनिनामेवं विधानाक्रोशान् श्रुत्वा श्रुत्वा स सुधारकमहाशयो नवागतः क्षणं निरुत्तर इव भूत्वा तेषां व्यसनचर्यामधीतुमभिलषन्निव तत्रैव न्यषीदत् किञ्चिदन्तर्गूढं विचार्य सस्मित इवात्मनः स्थितिं शान्ततामनैषीत् ।

अथाधुना तस्य सुधारकस्य तत्र स्थितस्यैव समक्षमेको धूम्रपानं कर्तुं व्यवसितोऽन्यस्तमाखुपत्रचूर्णं सुधया व्यामिश्र्याभक्षयदपरश्च मञ्जूषाया नस्यं निष्कास्य मुहुर्मुहुर्नासारन्ध्रं जिघ्रन् महान्तमानन्दमपूर्वं किमपि सुखं चान्वभूत् ।

तेषां त्रयाणामपि तथाविधां तमाखुसेवनव्यसनितामालक्ष्य सुधारकोऽवादीत् 'अयि महाशयाः ! श्रीमतां तमाखुपत्रे निरतिशयां भक्तिं दृष्ट्वाहमत्राद्य नितरां प्रासीदम् । सुखमुपभुज्यतां तमाखुर्यथेच्छम् ! परमेतज्जानीथ किम् ? यदत्रव्यसने बहुसेविते केचन दोषाश्चापि भवन्तीति ?'

श्रुत्वैतत्तेषु धूम्रपानपरो जगाद—'महाशय ! जानीते भवान् यद्धि धूम्रपानकरणादेव वैज्ञानिकानां प्रतिभा दिने दिने विलक्षणां विकाशप्रगतिं व्रजन्ती परमाणुशक्तिप्रयोगं यावत् प्रस्फुरन्ती विराजते ? फलतो धूमधोरणीमन्वाभान्त्यविष्काराः सर्वेऽपि वैज्ञानिकाः । स एष वै प्रभावो धूम्रपानस्य सर्वतोदिक विजयतेतमाम् ।। अथ भवानपि प्रारभतां धूम्रपानम् । उपग्रहमारुह्य गगनयात्राविहारानन्दं, सुखं श्रियं, कीर्त्तिं च दिग्दिगन्तव्यापिनीं, प्रचुरं धनं, शाश्वतं यशश्च लभताम् !'

अथ नस्यप्रियेणोक्तम्—'अयिभोः ! सज्जन !! भारतीयोऽपि भवान् तमालपत्रस्य स्वदेशजातस्य महौषधिकल्पस्य गुणांस्तच्चूर्णचमत्कारं न वेत्तीति परमाश्चर्यम् !!! समग्रं भौतिकं विज्ञानं, नस्यं संसेव्याविष्कृतं यूरोपीयैर्विज्ञानविद्भिराईनस्टीनाचार्यप्रभृतिभिः, साहित्यमुन्नेतुं च प्रयतितं

भारतीयैस्तिलकादिभिर्नेतृभी रवीन्द्रादिभिर्महाकविभिश्च नस्यप्रभावादेव हि काव्यप्रेरणाऽलभ्यत ! एवं सति भवान्न सेवते नस्यं प्रशस्यं यशश्च लभसे !!'

अथ तृतीयस्तमालपत्रचूर्णफक्किकां सुधामिश्रितां भक्षयन्नुवाच— 'अये, महात्मन् । सुधारकप्रभो !! तमाखुरयं दिव्यौषधिः । सरहस्यं रसरसायनशास्त्रं साक्षात्कारयति यदा सुधामिश्रितस्यास्य चूर्णं मुखेऽधरादधो निक्षिप्यास्वद्यते ! महर्षयो वेदान् शास्त्राणि चाधीत्यामृतत्वं तमाखुमासेव्यैवापुरिति हृदयं सर्वासामुपनिषदाम् !!: यतः साधूक्तम्—

"एषा त्रिपथगा गङ्गा पुनाति भुवनत्रयम् ।
क्वचिद्धुक्का क्वचित् शुक्का क्वचिन्नासाग्रगामिनी ।।"

सुधारको महाशयस्तु श्रुत्वेत्थं तेषां जल्पतां तमाखुपत्रगुणान् त्रयाणामपि व्यसनिनां मुखात् क्षणं चित्रलिखित इव दिङ्मूढ इव स्तब्धोजडोऽवधूत इव सर्वं-सह इव तत्सर्वं तेषां निगूढमन्तर्ज्ञानं श्रुत्वा च किञ्चिद्विहस्यान्तर्हृदि बभाषे—

"श्रूयताम् भोः ! एतत्तमाखुपत्रं नाम मादकद्रव्यं यदा व्यसनत्वं भजति तदा तत्सेविनां भवादृशां त्रिविधा दशा जायते । तथा हि—यो धूम्रपानं करोति, मन्ये, स दुराग्रहपरवश इत्थं स्वमनोभावं नाटयतीव 'तमालपत्रचुरुटिकामग्निना प्रज्वाल्य ये धूमघोरणीभिर्गगनमापूरयन्ति ते, शङ्के, वदन्तीवेत्थम्—अहमनेनाग्निनात्मानं, स्वास्थ्यं, सुखं, धनं च सर्वं भस्मसात् कुर्यां परमेतद्दुर्व्यसनं जातुचिन्न त्यजेयम्, न त्यजेयम् !'

'यश्च सुधामिश्रितं तमाखुपत्रं भक्षयति स सिद्धं तच्चूर्णं सफटफटाशब्दं करतलाभ्यां परिमर्द्यन्नेवं वदतीव, मन्ये—'काममहं षण्ढो भूत्वा नगरग्रामरथ्यासु गृहे गृहेभैक्ष्यमाचरेयं परं तमालभक्षणव्यसनं न कदापि मुञ्चेयम् !'

'यो हि नस्यं प्रकल्प्य तमाखुपत्रं नासारन्ध्राभ्यामुपसेवते, स शङ्के, वदतीत्थमात्मगतम्—'अहं हि श्रमजीवित्वमङ्गीकृत्य पाषाणान् खण्डशः कुर्वाणो जीवनं समस्तमतिवाहयेयं परन्त्वेतन्नस्यचूर्णोपसेवनव्यसनं जातुचिन्न त्यजेयम् !' इति ।

'धन्योऽयं भवतां त्रयाणामपि दुर्व्यसनिनां दुराग्रहो हठवादश्च ! महाशयाः ! भवन्तो न जानते यदस्मिंस्तमालपत्रे 'निकोटिन'—नामकं महाभयङ्करं मारकमुग्रतरं विषं विद्यत इति । विषस्यास्यासौ प्रभावो यद्धि यत्र व्यापारिणस्तमाखुं सगृह्णते तत्र सर्पादयो विषधराः सरीसृपा अपि तत्स्थानस्य

समीपं नैव गच्छन्ति प्रत्युत तद्दूरत एव परिवर्जयन्ति। अपि च तमाखुसेवनाद्विषव्रणादयः (केन्सर) प्राणान्तकरा रोगा भवन्ति। तमाखुसेविनो लोका दुर्गन्धमुखा मलिनवस्त्रा यत्र तत्र थुक्कारमाचरन्तो घृणापात्रं भवन्ति! तमाखोर्हिक्कावमनादयो दोषा जायन्ते। शरीरं प्रविष्टं तमाखुविषं रक्तवीर्यादीन्धातून् क्षिणोति, क्षुधमपबाधते, दन्तांश्च निर्बलान्विधत्ते। पुनर्व्यसनरूपं तमाखुसेवनं सदा सर्वदा जनं पराधीनतां नयति। सभ्या जनास्तमाखुसेविनं व्यवसनग्रस्तं मत्वा निन्दन्ति जुगुप्सन्ते च। अपरश्चायं दोषस्तमाखुभक्षणस्य यद्धनहानिर्महती हि जायते। इत्थं नानाक्लेशैर्युक्तं दोषदुष्टमिदं तमाखुसेवनं सर्वथा निषिद्धम्। तद्भवन्तो मे हितैषिणो वचनं कर्णकृत्वा किञ्चिच्चिन्तयेयुस्तदा विषपरिणाममेतद् व्यसनं नूनमेव परित्यजेयुः।"

एवमुक्त्वा स सुधारकस्तु यथाभीष्टां दिशं जगाम। ते त्रयोऽपि तमाखुसेवनव्यनिनः कञ्चित्कालं तु सुधारकमहाशयस्य तस्योपदेशानुपजहसुः परं गतेषु केषु चिद्दिनेषु ते व्यसनपीडां तद्दोषांश्च सुधारकवर्णितान् प्रत्यक्षमनुभवन्तः पर्यन्ते तद्दुर्व्यसनं परित्यज्य तद्दोषेभ्यो मुक्ता नवजीवनं स्वास्थ्यं सुखं च लेभिरे।

●

# भ्रातृ--स्नेहः

[१]

श्रीकान्तो नाम द्विजयुवकोऽभिजनवतां ब्राह्मणानां कुले लब्धजन्मा कस्मिंश्चिन्नदीतटासन्नवर्तिनि ग्रामे वसन् यजमानवृत्तिनिर्वाहयोग्यं ब्राह्मणोचितं कुलपरम्पराप्राप्तं सामान्यं प्रारम्भिकं ज्ञानमाप्तवान्। दिनशुद्धि-मुहूर्तादि-ग्रहगोचरं, स्वस्तिवाचनादि कर्मकाण्डं, चण्डीपाठावधि मन्त्रशास्त्रं, रुद्राभिषेक-सन्ध्योपासन-ग्रहशान्तिजपानुष्ठानप्रभृतीनि सर्वाणि कार्याणि निपुणं जानानः स स्वस्थः प्रसन्नः प्रोद्दामयौवनोन्मादोद्धतो ग्रामवासिनः सर्वानन्यान् सम-वयस्कान् बालकान् बलेन, विनयेन, गुणैश्च तैस्तैरतिशेते स्म। सरित्तटे बाल्यक्रीडासु, मल्लयुद्धे, खेल-कूर्दनादिषु, वृक्षारोहणे, जलप्रवाहसन्तरणप्रति-स्पर्द्धासु, ज्ञातीना भोजनोत्सवविवाहादिपूत्सवेष्वन्नपानप्रसङ्गेषु, दुर्गमासु ग्रामाद्ग्रामान्तरगमनयात्रासु च श्रीकान्तो बलोद्रेकाच्छरीरसौष्ठवात् स्फूर्त्या लाघवाज्जवाच्च स्वयंसिद्धो महामल्ल इव निर्भीकः साहसोत्सहसंदृप्तः प्रासिद्धचत्, विवाहयोग्ये वयसि च स ग्राम्यां वधूमुदवाहयत्। गार्हस्थ्यसुखेऽनतिस्पृहो द्विजयुवा श्रीकान्तोऽतीव विद्यानुरागरसिकतामधत्त। उच्चशिक्षायां शास्त्रार्थे-ष्वव्युत्पन्नोऽपि स यावज्ज्ञानं भूयोभूयः पूजापाठप्रसङ्गेषु प्रवर्तमानः स्तोत्रमन्त्रा-श्रयि संस्कृतवाङ्मयं साडम्बरं प्रपठन्नुच्चैः स्वरं प्राणबलौजःस्फूर्तिस्फारं सततमभ्याससंस्कारैर्मुहुरध्येतुं वासनां निरतिशयं पुपोष।

ग्रामान् भ्राम्यन्नेकदा श्रीकान्तोऽकस्मान्मोहमयीं जगाम। तत्रत्यं संसार विचित्रमिव पश्यन् स चाकचक्यचकितो मुहुर्मुमोह। व्यक्तित्वमात्रेण 'कुलीनोऽयं विद्वांश्चेति। मोहमयीनगर्यां केषांचिन्नागरिकाणां सनातनधर्मावलम्बिनां सतामाश्रयमासाद्य तत्र महानगरे स्वस्थितिं चकल्पे। संस्कारवशात्तत्रापि च पूजनपाठयज्ञप्रतिष्ठादिधार्मिकेषु समारम्भेषु यत्र तत्र विचरन् तीर्थयात्रासु पर्यटनाय सकुतूहलं प्रवृत्तः। ऊर्जस्वलं सक्षमं दृढीयांसं च भौतिकं देहबन्धं दधानोऽन्तर्मुखोऽयं ब्राह्मणकुमारः श्रीकान्तस्तदेकतानमना नवनवं पर्यटना-नन्दसुखमनुभवन् शनैः शनैः क्रमेण सर्वमपि कौटुम्बिकं जगद्विसस्मार। प्राप्ते चोपयुक्ते प्रसङ्गे स चैकदाऽऽस्तिकानां वैष्णवानां वणिजां यात्रिसङ्घपरम्परा-

संलग्न उत्तरापथं गन्तुं प्रवृत्त इति तं विचिन्वानैस्तत्परिवारजनैः कर्णाकर्णि श्रुतं, तर्कितमनुमितं परन्तु वस्तुतः स क्वनु खलु कुतो वा वर्ततेऽस्मिल्लोक इति सविनिश्चयं सप्रमाणं च वक्तुं न कोऽपि प्रबभूव ।

[२]

द्विवर्षाधिके गच्छति काले श्रीकान्तस्याग्रजो लक्ष्मीकान्तः परां चिन्तामाप । विशेषतोऽधुना लक्ष्मीकान्तस्य सूनोः परमेश्वरस्य यज्ञोपवीत संस्कारमङ्गलमवश्यकर्त्तव्यताकमभूत् परं त्वविज्ञातायां श्रीकान्तस्य प्रवृत्तौ सोऽतीवान्तर्व्यथां महतीमसह्यां वेदनां विडम्बनां चानुबभूव । ततो विचार-विमर्शसम्मतिग्रहणप्रसङ्गेष्वात्मीयानां कुटुम्बिनां ज्ञातीनां च मते पूर्वं श्रीकान्त-स्यान्वेषणमनिवार्यं, तदनु यज्ञोपवीतोत्सव इति सर्वैस्तद्धितचिन्तकैः स्वाभिप्रायो व्यक्तीकृतः । विद्वेषिभिः कैश्चन ज्ञातिजनैस्तत्कुलमर्यादा साक्षेपं विडम्बितेति पूर्व-वैरशोधनस्यायमुपयुक्तोऽवसर इति च यत्र तत्र विषयमिममधिकृत्य निन्दावादा व्यङ्ग्यकटाक्षा आक्षेपाः परिहासाश्च प्रारब्धाः । यदा कदा स्नानार्थं नदीं गच्छतो लक्ष्मीकान्तस्य केषांचिद्ग्राम्यपञ्चायतनभैरवाणां-प्रतिपक्षाश्रयिणां गृहान्तर्भित्तिषु, कदाचिच्चत्वरेषु, रथ्यासु, देवालयेषु, यजमानवृत्तिप्रसङ्गेषु च दुर्वादा जायमाना अश्रूयन्त । एकदा तु ग्रामीणानां ब्रह्मराक्षसानां कानिचित् कटूनि निन्दावादवचनानि स्वयं लक्ष्मीकान्तस्य कर्णकुहरेषु पतितानि तथाहि—

—'यावत् श्रीकान्तस्यास्तित्वविषये प्रामाणिकं किमपि वृत्तं नोपलभ्यते, तावत् परमेश्वरस्य यज्ञोपवीतमङ्गलमनुचितं स्यात्, यतः श्रीकान्तस्य नवयौवना सुन्दरी वधूर्गौरी संदिग्धाचरणाशङ्क्यते प्रमुखैर्ज्ञाति-भट्टोत्तमैः !'

यदि च लक्ष्मीकान्तः स्वभ्रातरं श्रीकान्तं कुतोऽपि कथमपि चान्विष्यात्र ग्रामं नानयेत्तावज्ज्ञातयः कथं निर्णेतुं पारयेरन् यत्तस्यानुजो जीवति मृतो वा चरिताद्भ्रष्टो वा प्रव्रज्यां गतो वा तत्पत्नी चाक्षुण्णचरिता वा विमार्गगामिनी वेति ।'

—'महाशयाः ! बहु भ्रान्तमनेन लक्ष्मीकान्तेन वराकेणानुजान्वेषणाय, बहु द्रव्यं क्षपयतानेन देशस्य सर्वे प्रान्ताः पर्यटिताः ! न कुतोऽपि कोऽपि च श्रीकान्तस्यास्तित्वविषय इदमित्थमिति तत्त्वतो यथार्थं वक्तुं पारयते । एवं सति, संदिग्धमृत्योः श्रीकान्तस्यान्त्येष्टिमौर्ध्वदैहिकं संस्कारं विना कथं तद्गृहजनाः शुद्धिमर्हन्ति, ज्ञातयश्च, कियत्पर्यंतं तमिममभियोगं स्थगयेयुःस्तैः साकं पङ्क्ति-भोजनं च निर्बाधं समर्थयेरन् ? धर्मतो न्यायतश्चास्माकं वर्णगुरूणां भूदेवानामयं महानेवानर्थंकरोऽधः पातः परिगण्यते सर्वैः कुलीनैर्ग्रामवासिभिः !!!'

—'अथ गौरी च कथं शुद्धिमर्हति ? विगतभर्तृका सा, ततस्तस्याश्चारित्र्ये लोका विशेषतो यजमानाः सम्भ्रान्ता अस्माकं ब्राह्मणानां समस्तां जातिमेव हि प्रत्यहं निन्दन्त्याक्षिपन्त्यवमन्यन्ते च । सर्वेऽपि च ग्रामवासिनो जना ब्राह्मणानस्मान् भ्रष्टाचारानुद्घोष्योद्घोष्य वृत्तिच्छेदं कर्तुं व्यवसिताः ! इत्थं श्रीकान्तसम्बन्धिनीयं समस्या महती विडम्बनेवास्माकं जीविकां, कुलीनतां, सदाचारं, चरित्रं धर्मं, सभ्यतां, संस्कृतिं च बाधतेऽधुना ! नांशतोऽपि ज्ञायते वस्तुतः श्रीकान्तोऽयं क्व नु बत कुतस्तिरोहितो मृतो वा जीवितो वेति सत्योऽयमाक्षेपो लोकानां श्रीलक्ष्मीकान्तं प्रति । न्याय दृष्ट्यापि चायं न्याय्यः पक्षः । माभूदस्माकं सर्वेषां भूदेवानां यजमानवृत्तिमात्राश्रयाणामववादः । मा भूद्वृत्युपरोधो द्विजन्मनामत्र ग्रामे जीवनं निर्वाहयताम् !!'

—'अयि भोः ! ज्ञातयस्त्वत्र श्रीकान्तं जीवन्तं, कल्याणीं गौरीं चापि सौभाग्यवतीं कामयन्ते, परमत्र सन्देहनिवृत्तये पुनः शोधं वा शुद्धिं वाथवा लक्ष्मीकान्तः किमर्थं नाचरति ? एकस्य हेतोः समस्तां समष्टिमेवास्माकं कुलीनानां निष्कलङ्कानां ब्राह्मणानां निन्दन्तो न विरमन्ति जना इत्यहह ! महदेव सुदुस्सहम् !!'

—'यावदेकवारं भूयोऽपि पुनः स्वपुरुषार्थमालम्ब्याखर्वगर्वोऽसौ लक्ष्मीकान्तो भ्रातुरन्वेषणं कृत्वाऽत्रानीय साक्षान्नोपस्थापयेत्तावत्तद्गृह-सदस्याः सर्वे ज्ञातिपङ्क्तो बहिष्क्रियन्ताम् !'

इत्थंविधान् शतशोऽपवादान् सभ्रूभङ्गं सनासाक्षिसङ्कोचं च वितन्वाना ज्ञातयः सम्बन्धिनः सुहृदो हितैषिणश्च श्रीकान्तसम्बन्धिनीं महतीं चिन्तां कुर्वाणा अपि प्रत्यक्षतो न किमपि वदन्ति लक्ष्मीकान्तम् । स्वयं लक्ष्मीकान्त एकतो भ्रातुरनिष्टमाशङ्क्य करुणामन्तर्वेदनां चानुभवति, ततोऽपरतश्चायं ज्ञातिकृतो दुराक्षेपो, गौर्याश्चारित्र्यं ततो यजमानवृत्तिच्छेदस्ततो भिक्षुचर्या-सामान्यं जीवनयात्रां महता काठिन्येन कष्टेन च निर्वाहयन् भूयो भूयो भ्रात्रन्वेषणाय क्षपितबहुधनो निःस्वो ब्राह्मणो लक्ष्मीकान्तो महतीं तामिमां दुःस्थितिं गतोऽतीव क्लेशस्य परां काष्ठां प्राप । कुलीने गौरवशालिनि सम्माननीये च द्विजकुले लब्धजन्मा लोकापवादभीरुर्मर्माहतो ज्ञातीनां ग्रामीणजनानां व्यङ्ग्योक्तिगर्भैः कटाक्षैर्भग्नहृदयो लक्ष्मीकान्तो दिवानिशं शोकाग्निना दन्द-ह्यमानोऽभूत् पुनर्यजमानवृत्तिच्छेदमाशङ्कमानः साध्वीं सच्चरित्रामपि युवतिं गौरीमनुजवधूं ग्रामकण्टकेभ्यो विटभुजङ्गमेभ्यो रक्षितुमात्मानमसमर्थं प्रतिकूले देशे काले पात्रे समाजे परिस्थितौ वातावरणे चानुभवन् विशेषतोऽनासादितायां श्रीकान्तास्तित्वप्रवृत्तौ कथमस्मादपवादात् कुलप्रतिष्ठां रक्षेदिति सर्वतश्चिन्ता सन्तानव्याकुलमनाश्चैकदा निशीथे निभृतं गृहात् प्रतस्थे ।

हिमगिरेः पुण्यप्रदेशेषु ग्रीष्मर्तौ तीर्थाटनं कुर्वाणा यात्रिसङ्घा हरिद्वारतः श्रीबदरीनाथाश्रमं जिगमिषवः पार्वत्यभूमावुच्चावचं पद्भ्यामेव लङ्घमानाः स्थानात्स्थानान्तरेषु पान्थशालासु विश्राम्यन्तो शान्तिसुखमानन्दमाह्लादम-निर्वचनीयं चानुभवन्तो रमणीयं प्राकृतिकं सौन्दर्यं पश्यन्तः,स्वकीयं मानवं जन्म सफलमिव विभावयन्तो हिमसङ्घातशिलाकीर्णेऽपि पथि मोदमाना वव्रजुः। तत्र सार्थमनुलग्नैका ब्राह्मणी तत्पुत्रश्च प्रौढवय स्कोऽभूताम्। प्राप्ते हि बदरीनारायणाश्रमे, कृत्वा च भगवतः पवित्राणि दर्शनानि, वयःपरिणामान्मार्गजनितक्लेशेभ्यश्च सा जरठा ब्राह्मणी तत्रैव धर्मशालायां स्वजीवनलीलां संववे। मातृभक्तस्तस्यास्तत्पुत्रो निर्वर्त्य जनन्या श्रौर्ध्वदैहिकीं क्रियां, पक्षप्रायं समयं तत्रैव व्यतीयाय। एकदा प्रातः स्नानसन्ध्यादिकं, नित्यकर्म सम्पाद्य कृताल्पाहारस्तत्र धर्मशालायाः कुटचां विश्रान्तुमासीनः स भावानु-भूतिवशगो भावुको ब्राह्मणो गम्भीरां चिन्तामतिमहतीमापेदे। तन्मनस्तस्य वृद्धाया जनन्या मृत्योः शोकविकलं हृदयं च धैर्यच्युतं विषादविह्वलं महती-मसह्यां दारुणां वेदनामन्वभूत्। स खलु करुणकरुणं बाष्पावरुद्धकण्ठं सगद्गद-मस्पष्टं मन्दं मन्द किमपि विललाप—

'हा हन्त! धिङ्मां मन्दभाग्यम्!! सैषा मे पूज्या जननी जरातुरा पुत्रानिष्टमसहमानान्तर्व्यथां सोढुमपारयन्ती, मां चैकाकिनमनाथमशरण-मनन्यगतिकं शोकसागरे निमज्जन्तं विहायाकस्मात् स्वर्गं गतवती!!! नाहं तां बहु चिन्तयामि। यतस्तस्यास्तीर्थप्रदेशेऽत्र सुरमुनिदुर्लभे देहत्याग-स्तावन्मोक्षायैवेति कथमपि समाधीयते मम मनः। परम्..............................

अहह! हाहन्त!! हन्त!!! क्व गच्छामि मन्दभाग्यः! किं नु मे शरणम्!! को मे साहाय्यमाचरेत्? यत्किमपि रङ्कजनोचितं द्रविणं मेऽभूत्तदशेषं तीर्थाटनं कुर्वता मया क्षपितम्! जनन्या अन्त्येष्टिं सम्पादयता मया सर्व-स्वमपि चापहारितम्! सम्प्रति रिक्तहस्तोऽहम्! भ्रातृविरहितस्त्वहं पूर्वमेवासमधुना मातृवञ्चितश्चाभूवम्। क्व नु खलु गच्छेयम् किमाचरेयम् किं कुर्याम्, किं वा न वेति कर्तव्यमात्मनो निश्चेतुं न पारये!! क्व नु खलु गत्वा, कमालम्ब्य, कस्मै वा विनिवेद्य मनोव्यथामन्तर्दुःखं मनाक् शांति-माप्नोतु मे मनः!!! गृहान् प्रति कथं व्रजेयमहं मेकाकी कुलकलङ्कोपराधीव पराधीनो लाञ्छनां गतो नितरां निर्धनः?? अहो नैष्ठुर्यं विधातुः!! व्यर्थमेव जीवनं मे व्यपगतमत्र संसारक्लेशैः सततं क्लिश्यतः! हा हा! नाथ, बदरीश्वर! प्रभोः!! पाहि मामनाथम्! प्रयच्छ मे शरणं शरण्य!! यदि च त्वं भगवन्! मय्यनाथे नो दयसे, सर्वान्तर्यामिन्! तदा कृतं मे

गृहस्थाश्रमेण !!! ...................श्राम्, शृणोमि ते दयालोः सन्देशम् ! पश्यामि ते भक्तवत्सलताम् !! अस्तु, तावदद्य गमनागमननिर्धारणं विरम्यतामत्रैव ! श्वोभूते भगवान् यथा मां प्रेरयति तथैव करिष्ये । यच्च भाव्यं तद्भवतु । अतः परं किमन्यत् स्यादनिष्टं मे ? परमात्मनः प्रबलामुत्प्रेरणां विना नाहमतः प्रस्थातुमुत्सहे कल्पान्तं यावत् ।' इत्थमस्पष्टाक्षरं प्रलपन् विलपन् स ब्राह्मणोऽर्द्धमूर्च्छित इव दीनहीन इव कान्दिशीक इव दुःखवेशपरवशो भावावेशे किञ्चिदिव स्तिमिते तन्द्रामनु निद्रां लेभे ।

अथापराह्णे पुनः प्रबुद्धो ब्राह्मणस्तस्माद्धर्मशालाया उटजाद्दर्शनाकाङ्क्षया बहिर्गन्तुं मनश्चक्रे । स ततः स्थानान्निष्क्रम्य कालक्षपणधियेतस्ततो यत्र तत्र सर्वत्र निर्लक्ष्यं भ्राम्यन् तत्रत्यानि तीर्थस्थानानि, दर्शनीयानि मनोहराणि रमणीयानि स्थलानि, जलाशयान्, देवालयान्, हिमालयस्य प्राकृतिकान् प्रदेशान्, नानादिग्देशेभ्यो यात्रार्थं समागतान् यात्रिणो जनान् दर्शं दर्शं सायाह्ने पोतविहङ्गम इव भूयोऽप्यथ बदरीश्वरदेवालयाङ्गणमगात् । तत्र महति विशाले देवालये समन्तात् प्रज्वालितेषु सन्ध्यादीपेषु, प्रकाशे सर्वतो विच्छुरिते, धूमघोरणीभिर्व्याप्यमाने तत्रत्ये वातावरणे, सुगन्धे समन्ततः प्रसृते, ध्वनितेषु दुन्दुभिढक्कामञ्जीरादिषु मङ्गलवाद्येषु, सशङ्खध्वनि सघण्टानिनादं च प्रधानेन तीर्थपण्डितेन दीपदाननैवेद्यफलपुष्पोपचारैः पूजिते परमेश्वरे श्रीमबद्रीविशाले समन्त्रोच्चारं नीराजनमङ्गलमारभ्यत ! 'जयजगदीश !! हरे !!! 'इति नीराजनासङ्गीतं सर्वेऽपि भक्ता गायन्तो नृत्यन्तो भावमग्नाः सन्तो भगवन्मूर्त्ति तद्गतेन मनसा पश्यन्तस्तच्चितास्तग्दतप्राणा इव ध्यानमग्ना बभूवुः । पर्यवसिते नीराजनाविधौ, समर्पिते च मन्त्रपुष्पाञ्जलौ बदरीनाथाय, गृहीते च चरणामृतप्रसादे भक्तैः सर्वैस्तत्रोपस्थितैः स ब्राह्मणोऽपि ततो देवालयान्निवर्त्य बहिर्निश्चक्राम । स यावत् स्तोकमध्वानं गच्छति तावत् तस्याग्रतो व्रजन्तमेकं तेजोमयं पुरुषं ददर्श । अन्यमनस्कः खिन्नो दीनोऽपि स ब्राह्मणस्तं प्रचण्डभौतिक विग्रहं प्रज्वलन्तमिव प्रखरेण ब्रह्मचर्यतेजसा, तपसा जाज्वल्यमानवपुषं दुर्द्धर्षं, महर्षिकल्पं कौपीनचीरवाससं, जटाजूटमण्डितशिरसं काषायाम्बरान्तराभासमानयज्ञोपवीतसूत्रं, परिघभुजं, त्रिपुण्ड्रधारिणमुत्तराशां प्रति गमनाय बद्धलक्ष्यं तरुणं तपस्विनं किमप्यभूतपूर्वं सुखमाकर्षणं चान्वभूत् । तादृशं तमुच्छलद्यौवनबलवीर्यसङ्घातप्रपुष्टं वायुवेगेनेव स्फूर्त्तिमता जवेन व्रजन्तं तं दिव्यविग्रहं ब्रह्मचारिणमनुसरन् स ब्रह्मणो लक्ष्मीकान्तः स्वात्मनि तीव्रां जिज्ञासामन्ततो न संवरीतुमपारयत् । कयाप्यदृष्टशक्त्या प्रेरित इव स ब्राह्मणो लक्ष्मीकान्तस्तं ब्रह्मचारिणं मध्येमार्गं प्रोच्चैस्तरां सम्बोध्य पपृच्छ—'अयि भोः !

तपस्विन् !! त्वामहमभिवन्दे !!! अहमत्र तीर्थयात्राप्रसङ्गेन बदरिकाश्रम-धाम प्राप्तोऽस्मि। नाहं तत्त्वतो वेद्मि कानि कानि चात्रत्यानि दर्शनीयानि तीर्थस्थलानि, पुण्यानि मनोहराणि रमणीयानि स्थानानि वा सन्तीति ? के चात्र पार्वत्यप्रदेशा वर्तन्ते यत्र सिद्धा महात्मानो यतयस्तपोधना योगिनो निर्धूत-पापा निवृत्ततर्षाश्च निवसन्ति ? के वा सत्सङ्गयोग्यानां साधूनां जीवन्मुक्तानां परमहंसानामाश्रमाः ? एतत् सर्वं भवन्तमहं प्रष्टुमिच्छामि। यदि च भवान् मे निदर्शनं दिग्दर्शनं च प्रददीत तदा महानेवोपकारभारोऽनुग्रह आभारश्च भवेन्मयि'। इत्युक्त्वा गमनाय त्वरमाणमपि तं यतिप्रवरं निरुद्धनिसर्गगतिवेगं विधाय तं वार्तालापायाभिमुखी कर्तुं प्रायतत।

अथ च स युवा तपस्वी पृष्ठतः प्रोच्चार्यमाणानि तानि ब्राह्मणस्य वचनानि समाकर्ण्य सिंहावलोकनभङ्ग्या किञ्चित् तिर्यक् परिवर्त्योर्ध्वाङ्गं वामस्कन्ध-दिशाऽऽरक्ते लोचने व्यापार्य तस्मिन् ब्रह्मणि ईषदक्ष्पातं कृत्वा शनैः शनैर्मार्गा-भिमुखं व्रजन्नवदत्—'सन्त्येवात्र बहूनि तीर्थानि, देवायतनानि, स्त्रोतांसि, निर्झरा नद्यः सरोवरा वनानि गुहाः कन्दरा हिमशृङ्गाणि सर्वविधाश्चर्यमयान्य-द्भुतानि तानि तानि दर्शनयोग्यानि च स्थलानि। अथ किम्, हिमाचलप्रदेशेऽत्र न केवलं महात्मानो महानुभावास्तपस्विनः सज्जना मनुष्या एव प्रत्युत देवाः गन्धर्वा अप्सरसो विद्याधरा महर्षयोऽवधूताः परमहंसाश्चापि विहरन्ते। नाहं न चान्यः कश्चिच्चर्मचक्षुर्भ्यामत्रत्यं पूर्णतयाल्पतया वा कारयितुं समर्थः। त्वमपि-नात्र पथि स्वक्षमतामर्यादाधिक्रमतोऽग्रे गन्तुमर्हसि। दृष्टे भगवति बदरीनारायणे सर्वं समीहितं सम्पद्यते यात्रिणामित्यवधार्य मनसि साधो ! गम्यतां धर्मशालां प्रति !! न मेऽधुनावकाशो वार्तालापस्य, दूरेऽतो मे वर्तते गुरोराश्रमः। ततो विरम्यतामत्रैवेति भूयो भूयो वदन्, पुनरेकवारं लोचनापाङ्गैर्निगूढां पारदर्शिनीं दृष्टिं तस्मिन् ब्राह्मणे निःक्षिप्य झटिति प्रस्थितः। पश्यत एव तस्य यात्रार्थिनो ब्राह्मणस्य स तापसो गतिप्रकर्षात् क्षणे क्षणे दूरं गतः। यावत् स द्विजो भूयोऽपि तं तपोधनं पश्येत् तावत् स गतोऽयं गतः स गतो गत एवेति सहसा तिरोदधे। ब्राह्मणश्च धर्मशालां प्रति निवर्तितुमनास्ततः स्थानादेव परावर्तत।

धर्मशालाया द्वारदेशमागत्य खिन्नमानसोऽसौ द्विजस्तमेव तपस्विनं मुहुर्मुहुश्चिन्तयन् मनसि विविधान् सङ्कल्पविकल्पानकरोत्—'तस्य खलु तापसस्य मुखाकृतिर्भ्रातुर्मे श्रीकान्तस्य बहु सदृशीवाभूत्। परं न तेन मया साकं वार्ता-लापोऽप्यकारि ! सम्भाव्यते, स युवा कदाचिच्छ्रीकान्त एव स्यात्। परमधुनाऽहं किं करवाणि ? स तु मां विमुच्य गत एव ! हा, दुर्भाग्यम् ? कष्टं भोः ! सम्मुखागतमपि तमहं नो परिचेतुमपारयम्। नूनं स श्रीकान्तो न चान्यः।

हे परमात्मन् । त्वं मां कां दशां प्रापयः !! इत्थं जीवनात्तु मे हतभाग्यस्यात्र मरणमेव श्रेयः !!!' इत्यादींस्तर्कानूहापोहांश्चान्तर्हृदि कुर्वाणः कंचित्कालं निनाय । उद्विग्नमना स कथमपि धृतिं नादत्त । सर्वतो निराशः स तत्रैव व्यवस्थापकस्य कार्यालये वेत्रासनमुपविश्य तत्र नवागतं दैनिकं समाचारपत्रं पठितुमुपाक्रमत । तत्र च धर्मशालाया द्वारदेशे व्यवस्थापकस्य कार्यालये सततं यात्रिसङ्घा यातायातं कुर्वाणा आसन् । अत्रान्तरे 'बावा काली कमलीवाले' इति स्वनामधन्यानां सुप्रसिद्धानां परोपकारिणां महात्मनां कश्चिद्भृत्यः समुपस्थाय मासिकमायव्ययपत्रं व्यवस्थापकस्य पुरतो निधायाब्रवीत्—'मौखिकोऽयं सन्देशस्तेन कार्यालयाध्यक्षेण प्रहितो यत्तस्य हिमगुहामधिवसतो नवागतस्य श्रीकान्तनाम्नो ब्रह्मचारिणः सेवासपर्याविधौ श्रीमद्भिः कः प्रबन्धो विहित इति झटिति निवेदयन्तु ।' व्यवस्थापकोऽब्रवीत्—'विहितोऽस्माभिः सम्यक् सर्वोऽपि प्रबन्धो भवदाज्ञानुसारमिति स महात्मा निवेद्यताम् ।' इत्युक्त्वा व्यवस्थापकेन भृत्यः प्रस्थापितः ।

श्रीकान्त इति नामाक्षरश्रवणसमकालमेव स ब्राह्मणो लक्ष्मीकान्तो घूर्णितमस्तिक इव प्रेताविष्ट इवाकस्माद्भूमौ पपात । मूर्च्छांगतोऽपि स किमप्यस्पष्टं मन्दंमन्दं विलपन् संज्ञाहीनो बभूव । पतितं विसंज्ञं तवमलोक्य तत्र स्थिताः सर्वे जनास्तं शयनीये कृत्वा तत्क्षणं तं चिकित्सयितुं सत्वरा अभूवन् । औषधोपचारविधिं च सम्पाद्य तत्रैव शयनीयं प्रकल्प्य तमस्वापयन् ।

अथ च निशीथे लब्धचेताः स ब्राह्मणो लक्ष्मीकान्तस्तत्राधिकारिभ्यःस्वात्मानं स्वास्थतां गतं विनिवेद्य तैश्चाज्ञप्तः स्वशालाकुटीं जगाम । पुनः पुनः श्रीकान्तसम्बन्धि किमप्यात्मगतं चिन्तयन् विचारतरङ्गसन्ततिं मनोगतामवरोद्धुमपारयन् मानसीं व्यथामतिमहतीं जेतुमप्रभविष्णुः पुनः कथमपि निद्राङ्के प्रसुप्तः ।

प्रातर्ब्राह्मे मुहूर्ते प्रबुद्धः स शौचस्नानसन्ध्यादिकं नित्यविधिं परिसमाप्य बदरिकाश्रमाद्दूरवर्तिषु हिमालयस्य पार्वत्यप्रदेशेषु हिमगुहान्तर्गभेषु तपस्यतां केषांचित् साधूनां महात्मनां योगिनां च महापुरुषाणां योगक्षेमायाहारमिन्धनादिकं च नीत्वा तदाश्रमान् प्रति व्रजता केनचिद्भृत्येन साकं हिमालयस्योत्तुङ्गाधित्यकापथे वव्राज स भृत्यस्तु हिमप्रदेशनिवासित्वात् परिचिततत्तद्भूमिप्रदेशः सक्षमत्वात् सबलत्वाच्च तद्ब्राह्मणस्याग्रे प्रचलितः सवेगं, परं स ब्राह्मणोऽस्वस्थश्चिन्ताकुलो जीर्णशीर्णशरीरो दुर्बलो महता प्रयासेन क्लेशेन च शनैः शनैः पदानि कानि चिद्दधानो गच्छन्नास्ते । 'कियानध्वा गन्तव्योऽधुनावशिष्यते ? कुतो वा श्रीकान्ताश्रमः ?? कदा च त्वया श्रीकान्तस्तत्राश्रमे दृष्टः ??? अपि च ते निश्चयो यच्छ्रीकान्तो महात्माधुनापि तत्रैवाश्रमे कृतवसति-

विद्यते ???' इति नानाविधान् प्रश्नाननेकान् तं भृत्यं भूयोभूयः परिपृच्छन् तद्विषयिणीं जिज्ञासामात्मनस्तीव्रमौत्सुक्यं च गूढं निगूहितुं चेष्टमानोऽपि स्वकीयां मानसीं स्थितिं दुःखं च गोपायितुमपारयंस्तत्र मार्गेऽतिहिमशीतायां भूमौ संचरन् जडतापादकेन तीव्रवेगेन वायुना वर्षाजलेन चोत्पीड्यमानः, क्वचिन्मध्येमार्गं प्रस्खलत्पदः, क्वचिदुच्चावचैर्विलुठतां हिमखण्डानामाघातैः प्रहृतः, पतन्नपि पुनः पुनः समुत्तिष्ठमानो महता श्रमेण क्लेशपरम्पराभिश्च खिद्यमानः कथमपि क्रोशद्वयमितं मार्गमलङ्घत। क्षुत्तृड्भ्यां परीतःशुष्यदोष्ठतालुकण्ठजिह्वो महतीं वेदनामसह्यामनुभवन् दुःस्थां स्थितिं गतः। अतोऽग्रे गव्यूतिमात्रं लङ्घितेऽध्वनि स भृत्यस्तं ब्राह्मणमवादीत्—'अये भूदेव ! याचिन् !!! दृश्यतामिदं श्रीकान्तस्य योगिन आश्रमस्थलम् !!! स च तस्य हिमगुहान्तर्गर्भे वर्तते कुटी। त्वमस्यां हिमशिलायामुपविश, यावदहमस्या हिमशर्कराच्छादिताया: कन्दराया द्वारमुद्घाटयामि।' उक्त्वैवं स भृत्यः स्वकरस्थं दुग्धपात्रं, फलानि, कन्दमूलशाकपत्रादीनि, काष्ठेन्धनानि च तत्समीपमेव हि संस्थाप्य कुद्दालेनैकां पार्श्ववर्तिनीं हिमभित्तिं खनितुमारभत। दूरीभूते महति हिमशर्करासङ्घाते, विदारितायां हिमभित्तौ, हस्तप्रमाणे चतुरस्रे च्छेदे जाते स भृत्यः सम्बोधयति—'महात्मन् ! श्रीकान्तयोगिन् !! गृह्यतामयमाहार इन्धनानि चेमानि गृह्यन्ताम् !!!' इति वदन् हिमगुहान्तःस्थं तं तपस्विनं सम्बोध्यसम्बोध्य मुहुर्मुहुः कोमलामन्त्रणैरामन्त्रयामास।

यावत् स तमाह्वयति तावदेवाकस्मात् कयाप्यज्ञातशक्त्या प्रेरित इव स ब्राह्मणो हिमशिलाया उत्थाय वायुवेगात्तस्य भृत्यस्य समीपमुपाजगाम। तत्र गत्वा सद्यश्छिन्ने तस्मिन् हिमभित्तिविवरे यावत् पश्यति तावत् पूर्वेद्युः सन्ध्यासमये दृष्टं तमेव महात्मानं सोऽपश्यत्। दृष्ट्वैव ब्राह्मणोऽब्रूत—'भ्रातः ! श्रीकान्त !! प्रियानुज !!! वत्स !!! कथं त्वमस्मान् सर्वान् निराधारान् निराश्रितान् सहसैवैकपदे त्यक्त्वा भूमिमेतावतीं प्राप्तः ? देहि मे प्रतिवचनं भ्रातः !!! कृपणा इमे मम प्राणा नातोऽधिकमधुना जीवितुं पारयन्ते !!! किं न पश्यसि मां तेऽग्रजं लक्ष्मीकान्तमत्र ते समक्षं समुपस्थितम् !!! हा निष्ठुर !! हा भ्रातः !!! अहह ! हन्त !! हन्त !!! अये बन्धो !!! श्रीकान्त !!! किमिति नो मां सम्भाषसे ? हे प्रभो ! बदरीश्वर !!! हा·······इति वदन् मूर्च्छां गतः।

तदिदं दृश्यं विलोक्य स भृत्यस्तु चकितचकित इव विभ्रान्त इव मूढ इव तत्त्वतः किमप्यबुद्ध्यन् भूमिपतितं तं लक्ष्मीकान्तं द्विजं प्रयत्नात् संरक्षन् महात्मनस्तस्य वचः प्रतीक्षमाणस्तस्थौ। यथापूर्वं स तत्र हिमभित्तौ कृते छिद्रेऽ

वलोकनपरः क्षणादनन्तरमेव श्रीकान्तस्य महात्मनः स तेजोमयं मुखमण्डलमपश्यत्। श्रद्धावनतः सतं प्रणनाम। तं विलोक्य महात्मोवाच—'गोपाल! अपि त्वमागतोऽसि? साधु, दुग्धं फलाहारं शाकपत्राणि वेन्धनानि चानीतवानसि किम्?? आयाहि, प्रयच्छ त्वयानीतं सर्वमत्र मे। कोऽयमपरस्ते सहायः? इत्युक्तवति तस्मिन् महात्मनि, तेन सेवकेन निवेदितमिदानीं यावज्जातं समस्तंवृत्तजातम्। महात्मनाज्ञप्तः स भृत्यो हिमगुहाद्वारदेशं पुनरधिकं खनित्वा विततं चकार। महात्मा च गुहागर्भद्वारमार्गेण बहिरागत्य संज्ञाशून्यं मूर्च्छितं मृतप्रायं तं लक्ष्मीकान्तं स्वज्येष्ठभ्रातरं सस्नेहोद्रेकं गाढमालिङ्ग्य वनौषधिरसादिभिरुपचर्य ससंज्ञं विधातुं तत्परोऽभूत्।

अथार्द्धमुहूर्तप्राये व्यतीते समये लक्ष्मीकान्तोऽर्द्धचेतनां लेभे। कियति कालान्तरे सोऽक्षिणी व्यापार्य यावत् पश्यति सर्वतस्तावदात्मानमङ्कगतमवबुद्ध्य। स्पष्टाक्षरमब्रूत—'क्वाहम्! कस्त्वम्!! कुत आयातोऽसि!!! अहो! भ्रातः!! श्रीकान्त!!! वत्स!!! प्रेयन्!!! त्वामेवाहं पश्यामि किमुताहोस्वित् स्वप्नमायाम्? अपि च त्वं सत्यमेवासि मे प्रियोऽनुजः श्रीकान्तः?? किं न ब्रूषे प्रेयन्??? देहि मे प्रतिवचनम्! नूनमहं त्वां विनाद्यात्रैव प्राणांस्त्यक्ष्ये!! हा! मृत्युरपि मयि निष्ठुरः! हा, हन्त!! हन्त!!!'·······इति विलपतस्तस्य वचो निरुद्ध्य लक्ष्मीकान्तस्य ललाटे स्वकरतलं परामृशन् श्रीकान्तोऽब्रवीत्—'अये मे ज्येष्ठ भ्रातः! लक्ष्मीकान्त!! अग्रज!!! स एषोऽहं ते प्रियोऽनुजोऽस्मि श्रीकान्त एव। धैर्यमवलम्बस्व! धारयात्मानम्!! रक्ष स्वप्राणान्, जीवनं च कामयस्व!!! किमिति त्वं मत्कृतेऽतीव दूरस्थामेतावतीमगम्यां पावर्त्यभूमिं हिमदुर्गम्यां प्राप्तः? स्वस्थो भव! अत्र हिमालयप्रदेशे क्षणं वर्षा, क्षणं हिमपातः, क्षणं प्रचण्डातपः, क्षणं प्रभञ्जनः, क्षणं च जडतापादकं शीतमपबाधते प्राणिनः। क्षणक्षणविलक्षणाप्रकृतिरचनात्रत्या। तदुत्तिष्ठ, स्वास्थ्यं लभस्व। मा भून्मे योगसाधनायां विघ्नः। अद्य त्वमनेन भृत्येन सार्द्धं पुनर्बदरिकाश्रमं प्रतिनिवर्तस्व! श्वोभूतेऽत्र पुनरागन्तव्यम् त्वर्यताम्! त्वर्यताम्!!'

श्रीकान्तोक्तानि वचनानीमानि लक्ष्मीकान्तस्य कर्णपुटेषु पीयूषमिवावर्षन्! तस्य मोहनिद्रा व्यपगता। स्वप्नकल्पनाडम्बरो विलयं गतः। साक्षाद् वर्तमानं स्वानुजं यथार्थतः सत्यमेव परिचिन्वानः सुप्तोत्थितः श्रीकान्तं विलोकमानो भूतार्थे सत्यपि च सन्दिहान आशङ्कातङ्काकुल इवोन्मुक्त कण्ठ धाराप्रवाहं स्खलद्वाक्यं दिशो रोदसी चानुरोदयन् भृशं करुणकरुणं रुरोद। दुःखवेगे किंचित् स्तिमिते, व्यवस्थितेषु श्वासोच्छ्वासेषु, कथमपि

धृतिमालम्ब्य श्रीकान्त प्रेमातिशयादुपालम्भमानोऽब्रवीत् —

'भ्रातः ! श्रीकान्त !! त्वं सर्वानस्मानेकपदे त्यक्त्वाऽनाथांश्च विधाय कुतो वैराग्यं गतो योगिजनोचितामतिकठिनां साधनामत्र निर्मानुषे स्थले स्वीकृतवानसि ? त्वामन्विष्यता मया किं किं न कृतम् ! त्वमेतत्सर्वं योगाभ्यासाडम्बरं परित्यज्य परित्यज्य मया साकं व्रज गृहान् । वधूस्ते भ्रातृपत्नी बालाश्च स्वजन्मभूमौ त्वां मां च विना न जाने कां शोच्यां दशामनुभवन्तः स्युः ! त्वरस्व बन्धो !! दयस्व नः !!! क्षिप्रं वद, को नु ते निश्चयः ? यदि त्वमिदानीमेव मया सह नागच्छसि, तदाहमधुनात्रैव कृपणान् प्राणांस्त्यक्त्वाऽचिरेण चिरशान्तिं लब्धास्मि !!!'

श्रीकान्तः—'बन्धो ! अलंविषादेन ! मा त्वं वृथात्मानं मां च क्लेशय !! अहमवश्यमेव त्वया साकं गृहान् गन्तास्मि ! विश्वसिहि ममेदं निर्मायिकं वचः !! गृहागमनमहं स्वेष्टदेवतासाक्षिकं प्रतिजाने !! अधुनाहमत्र गायत्रीपुरश्चरणानुष्ठाने तत्परोऽस्मि । किञ्चिदेव कर्मावशिष्टं वर्तते । विधिविधानपूर्वकं समारब्धमेतन्मे पुरश्चरणव्रतं मा भून्मध्ये प्रयोगं विघ्नबाधाहतम् । त्वं सम्यक् वेत्सि तात ! यद् भ्रष्टे पुरश्चरणप्रयोगेऽनिष्टापत्तिः स्यादिति । त्वं स्वयमेव शास्त्रज्ञोऽसि विचक्षणो विद्वान् ! मामकीने सत्ये वचने निष्ठामास्थां श्रद्धां विश्वासं च रक्ष । नाहमन्यथा चिन्तयामि, ब्रवीमि च । एष तेऽहं चरणौ स्पृष्ट्वा प्रतिज्ञां करोमि, यदावां द्वावपि सदैव गृहान् व्रजिष्यावो ध्रुवम् । सप्ताहावधि परिसमाप्यानुष्ठानमिदं त्वयोक्तं सर्वमनुष्ठास्यामि । अधुना तु गम्यताम्, यतोऽत्र प्रकृतिक्षोभः सम्भाव्यते, ततो निवर्त्यतामितः ।'

लक्ष्मीकान्तः—'अयि प्रियबन्धो ! सप्ताहस्य तु का कथा ? अहं त्वया विना क्षणमेकमपि जीवितुं न प्रभुरात्मनः । यदि त्वं दुराग्रहान्नैवाधुनाऽऽगच्छसि तदाहमपि यावदनुष्ठानपूर्तिं त्वया सहैवात्र स्थातुं कामये । अपरश्चायं मे मनसि विकल्पो यदहं त्वां महता कष्टेन प्राप्तमपि विमुच्य बदरीनाथाश्रमं प्रति परावर्तेय, त्वं च पुनरितः प्रपलय्यान्यं कमप्याश्रमान्तरमाश्रयेस्तदा का वा गतिर्मे स्यात् ?'

श्रीकान्तः—'ज्येष्ठबन्धो ! सत्योक्ते मयि न त्वमविश्वासं कर्त्तुमर्हसि । केवलं मे प्रयोगोऽयं मा भूद् भ्रष्ट इति विनयोऽनुनयश्च । अतोऽग्रे त्वमेव प्रमाणम् ।'

लक्ष्मीकान्तः—'प्रतिजानीहि ! न त्वामहं क्षणमपि त्यक्तुं वाञ्छामि, तथापि यदि त्वमेतत् सर्वं सशपथं वदसि, तदा नास्त्येवाविश्वासस्य कारणम् ।

श्रीकान्तः—'मम त्वेतावदेव निवेदनं यत्त्वं श्वोभूतेऽत्रायाहि साकमनेन भृत्येन ! तदाऽऽवां कार्यक्रमं सर्वं विनिश्चेष्यावः । अहं भगवत्या गायत्र्या वेदमातुः साक्षिकं शपथं कृत्वा मनसा वचसा कर्मणा च न त्वामपलपामीति सत्यं प्रतिजाने । न त्वामहमितोऽग्रे जातुचित्त्यक्ष्यामि प्रत्युत त्वया साकं नूनमेव गृहानागमिष्यामि ।'

इत्थं मुहुर्मुहुः कथमपि सप्रश्रयं परितोष्य सस्नेहवचोभिः श्रीकान्तेन महता काठिन्येन प्रतीतो लक्ष्मीकान्तस्तेन भृत्येन सार्द्धं यथागतं बदरीनाथाश्रमं गत्वा धर्मशालायाः कक्षे विश्रामं चकार ।

अथान्येद्युः प्रातः शीघ्रमुत्थाय निवृत्य शौचस्नानादिकाः क्रियाः सन्ध्योपासनविधिं—चोपपाद्य 'कालीकमलीवाले बावेति' मोहान्तस्य कार्यालय-भृत्येन सार्द्धं लक्ष्मीकान्तः पुनः श्रीकान्ताध्युषितां हिमगुहां प्राप । भृत्यो गुहाद्वारमुदघाटयत् । विवृते कन्दराद्वारमुखे श्रीकान्तो बहिरागत्य भ्रातरं तं लक्ष्मीकान्तं ववन्दे । ततस्तयोः सुखमुपविष्टयोर्मिथो दीर्घं समयं यावत् वार्तालापा अजायन्त । अतीते च सप्ताहाधिके समये श्रीकान्तस्य पुरश्चरणं सविधि समाप्तिमगात् । होमयज्ञादिकं कृत्वा पूर्णाहुतिं सम्पाद्य ब्राह्मणभोजनं विधाय सर्वतो निवृत्ते कार्यकलापे लक्ष्मीकान्तेन मातुर्मरणसम्वादोऽपि श्रावितः । तस्यास्तीर्थाटनं कुर्वत्या मरणं मोक्षायैवेति कथमपि तज्जन्यं शोकं सह्यतां नीत्वा भगवतः श्रीबदरीनारायणस्य दर्शनानि कृत्वा स्वगृहाभिमुखं तौ द्वावपि ततः प्रतस्थाते । मार्गे सहयात्रा सुखमनु भवन्तौ तौ यथासमयं मोहमयीं, कालिकातां, तथान्यान्यानि महानगराणि पश्यन्तौ, स्थाने स्थाने तीर्थानि पर्यटन्तौ सानन्दं सकुशलक्षेमं च स्वगृहमाजग्मतुः । सर्वेऽपि कौटुम्बिका हितैषिणः सुहृदः सखायश्च श्रीकान्तमागतं ज्ञात्वा दृष्ट्वा च प्रसेदुः । गौरी गौरीव तपस्यन्ती पत्युः प्राप्तेः किमप्यनिर्वचनीयं मनोवाचामगोचरं सुखमन्वभूत् । ज्ञातिभिः कृतं विप्रियमाकर्ण्य श्रीकान्तः स्वकीयैरेव पुरुषार्थैस्तत्र ग्रामे पाठशालामेकां, पुस्तकालयं, छात्रावासं, देवमन्दिरमुद्यानं गोशालां च प्रतिष्ठाप्य राष्ट्रियहितसाधनाय शिक्षाविस्ताराय सर्वजनसहयोगमामन्त्र्य समाजसेवासु संलग्नः । लक्षाधिकानां रूप्यकाणां धनसंग्रहं सम्पाद्य स्वात्मना प्रतिष्ठापितानामासां सर्वासां संस्थानां सञ्चालनाय निधिं प्रकल्प्य समितिमेकां च कल्पे । राजेष्टीकरणं कारयित्वा संस्थानां जीवनं सुदीर्घायुः प्रामाणिकं चाकार्षीत् । गार्हस्थ्यसुखमनुभवन्तौ तौ द्वावपि भ्रातरौ सुखं चिरं न्यवसताम् ।

# वीरपरीक्षा

एकदा द्वौ नवयुवकौ वीरौ कस्यचिन्नृपस्य राजसभामगच्छताम्। यदा तौ नृपं प्रणम्यय थास्थानमुपविष्टौ तदा किञ्चिद्विचार्य नृपोऽपृच्छत्—'अयि भोः! युवानौ!! किमर्थं युवामत्रागच्छतम्? मम सकाशात् किं वा वाञ्छथः??' नृपस्य प्रश्नं श्रुत्वा तौ वीराववदताम् 'सम्माननीय नरेश! आवां वीरौ स्वः। रणक्षेत्रे शत्रुभिः सह युद्धमेवावयोः कार्यं, स्वस्य प्रभोः शुभचिन्तनमावयोर्धर्मो, रणकौशलप्रदर्शनं चावयोर्गुणः। श्रीमान्नरेशः शूरो वीरो गुणग्राहकश्चेति भवतो यशः कीर्त्तिं च लोकेभ्यो भूयोभूयः श्रुत्वावां भवतो दर्शनमाश्रयं जीविकां च लब्धुं भवत्सेवायां समुपस्थितौ स्वः। राजन् प्रसन्नो भव, कृपां कुरु! यदि श्रीमतो राज्येऽस्मद्योग्यं किमपि कार्यं सेवा वा भवेत्तदाज्ञापयतु भवान्! आवां मनसा वचसा कर्मणा प्राणपणेन सर्वात्मनापि च स्वाश्रयप्रदातुः श्रीमतः सेवां करिष्यावहे!'

अथ राजा तयोस्तद्वचनं श्रुत्वा स्वमनसि किञ्चिद्गूढमहसत्। स्वविषये कथितानि तयोर्द्वयोर्वीरयोर्वचनानि नृपो न सत्यानि मेने, प्रत्युत स ससन्देहं मिथ्यात्मश्लाघाममन्यत। तयोर्वचनेषु शरवीरतायां च शङ्कमानः स नृपोऽवदत्—'अयियुवकौ! यदि युवां सत्यमेव शूरौ वीरौ वा स्थस्तदात्रेदानीमेव किमपि चमत्कारयुक्तं शूरोचितं वीरताकार्यं कर्म गुणं वा प्रदर्शयतम्। तदाहं भवतोर्वीरताया गुणानां च परीक्षां कृत्वा युवाभ्यां किमपि पारितोषिकं दास्ये, स्वस्य सेनायां युवां नियोक्ष्ये।'

नृपस्य तद्वचनं श्रुत्वा तौ द्वावपि वीरौ राजसभायां नृपस्य सम्मुखमेव हि स्वस्य खड्गौ कोशाभ्यां बहिर्निष्कास्य परस्परं योद्धुमारभताम्। एवं रणकौशलं प्रदर्शयन्तौ मुहुर्मुहुर्मिथो युध्यन्तौ क्षणादेवान्योन्यं शिरसी छित्वाम्रियेताम्। तयोः कबन्धौ भूमावपतताम्।

नृपस्तयोर्धीरतां वीरतां शक्तिं बलं सामर्थ्यं युद्धचातुर्यं सत्यप्रियतां च दृष्ट्वातीव प्रासीदत् परन्तु तयोर्द्वयोरपि वीरयोस्तत्रैवेत्थं मरणादतिदुःखमन्वभूत्। स खलु पश्चात्तापं कुर्वाणोऽवदत्—

'इमौ तु सत्यमेव वीरौ बभूवतुः। मया सर्वसाधारणमिव तौ परीक्षितुं समादिष्टौ परं तौ त्वेतौ परस्परं खड्गाभ्यां शिरसी छित्वा मम पुरत एव मृतौ! एतादृशयोरनयोर्वीरयोः परीक्षां कुर्वाणो नाहमजानां यदिमौ मम समक्षमेव मरिष्यत इति। हा धिक! मया सत्येऽपि च तयोर्वीरत्वे सन्देहं कृत्वा परीक्षितौ तौ स्वर्ग गतौ! यदि चाहं तौ परीक्षां विनैव स्वसेनायां सैनिकौ न्ययोक्ष्यं तदा ताविमौ सत्यामावश्यकतायां मम हिताय कियद्वा पराक्रममकरिष्यताम्! हा! हन्त!! इमौ परीक्षमाणेन मया साधु न कृतम्! एवं विधयोर्वीरशिरोमण्योः प्राणत्यागान्मम वीरहत्यादोषो महाञ्जातो हानिश्च महती बभूव, यतस्तादृशौ वीरावधुनातीव दुर्लभौ!!' इत्यादि वदन् स नृपो भृशं दुःखमन्वभूत्।

अनया लघुकथया वयं शिक्षां लभामहे यत्पूर्णतः सत्यवस्तुनः, सत्यस्य मनुष्यस्य च विनोदभावेन कौतुकवशाद्वा परीक्षणं नोचितमिति।

--०--

# भाग्यं पुरुषार्थश्च

एकदा कस्यचिन्नृपस्य सभायां भाग्यपुरुषार्थयोर्विवादः प्रचलितः। तत्रैकोजनो भाग्यं बहु प्राशंसदन्यश्च पुरुषार्थमतीवाश्लाघत। नरेशस्तयोर्द्वयोर्विवादं श्रुत्वा न्यायनिर्णयं कर्तुमेकमुपायमकरोत्। स तौ द्वावपि विवदमानौ पुरुषौ कारागारस्यैकस्मिन्नन्धकारमये कोष्ठेऽक्षिपत्।

तत्र कारागारस्यान्धकोष्ठे पतितौ तौ द्वावपि विवदमानौ कंचित् कालमतिष्ठताम्। एवं क्रमशो रात्रिः समभूत्। तावचिन्तयताम्—'आवामद्य विवादं कृत्वाऽकारणमेव नृपमकोपयाव! एवं पश्चात्तापं कुर्वाणौ तौ रात्र्या प्रथमं प्रहरं तु कथमपि येन केन प्रकारेणात्यवाहयताम्। तत्र भाग्यवादी तु 'यद्भाव्यं तद्भविष्यति!' इत्युक्त्वा तत्रैव कोष्ठे भूमावेवास्वपत्। स खलु निद्रासुखमनुभवितुमारेभे।

ततः पुरुषार्थवादी समचिन्तयत्—'केवलं भाग्यस्याश्रयादस्मादन्धकोष्ठात् कथं नाम मोक्षः स्यात्? तन्मया पुरुषार्थमवलम्ब्य कोऽप्युपायः खलु कर्तव्यः। कर्मप्रधानेऽस्मिन् संसारे यः स्वयमेवात्मनोऽभ्युदयायोन्नतये मुक्तये वा सदुपायं न करोति, तमीश्वरोऽपि कातरमलसं निर्बलमकर्मण्यं च मत्वा तत्साहाय्यं न करोति। तस्मान्मयात्र कारागारेऽपि किमप्युपायान्तरमवश्यमेव हि कर्तव्यम्।' एव विचिन्त्य स तत्रैवान्धकारमये कोष्ठे स्वस्य हस्तपादं प्रसार्यान्वेषणं कर्तुं तत्परो बभूव। इत्थमन्वेषणपरः स तत्र कोष्ठस्य भित्तावलग्ने नागदन्ते (खूंटी पर) अवलम्बमानमेकं तैलेन पूरितं, वर्तिकया युक्तं दीपपात्रं, तत्समीपमेव निहितामेकां दीपशलाकानां पेटिकां चालभत। दीपशलाकामेकां प्रज्वाल्य स तं दीपकं प्राज्वालयत् दीपकस्य प्रकाशेन स यावत् पश्यति, तावत्तत्रैकस्मिन् कोणे निर्मलेन शीतलेन सुपेयेन च जलेन भरितमेकं जलपानायोपयुक्तं जलपात्रमपश्यत्। अन्यत्र च कोणेऽपरस्मिन् सुरक्षितरीत्या स्थापितं घृतगुडपिष्टैर्मिश्रितमेकं बृहदाकारं महान्तं मोदकं दृष्टवान्। परत्रैकस्मिन् कोणे शयनयोग्यान्यास्तरणानि वस्त्राणि चापश्यत्। अन्यत्र कोणे च संस्थापितानि सुन्दराणि सुगन्धीनि पुष्पाणि तथा ताम्बूलवीटिकाः पुस्तकानि चाप्नोत्।

एवं सर्वाणि तानि वस्तूनि लब्ध्वा प्रसन्नोऽभवत् । भाग्यैकशरणं शयानं निद्रावशं गतं तं स्वप्रतिवादिनं तत्क्षणं जागरयित्वा सोऽवदत्—'अहो, महिमा सोऽयं पुरुषार्थस्य ! त्वं तु भाग्यवादी कमपि पुरुषोचितमुद्योगमुपायं प्रयत्नजातमायासं प्रयासं वाऽकृत्वा भाग्यमेव सर्वं मत्वा प्रसुप्तः । परन्तु मयात्र पुरुषार्थमालम्ब्य किमपि प्रयतितम् । फलतोऽयं दीपकोऽसौ जलकुम्भ इमान्यास्तरणानि, वस्त्राणि, पुष्पाणि, ताम्बूलानि, नानावस्तून्यत्र प्राप्तानि ! तत्त्वमिदानीमालस्यं प्रमादं च त्यक्त्वोत्तिष्ठ । आवामिमं मोदकं भुक्त्वात्मनः क्षुधां निवारयाव । भोजनानन्तरं च ताम्बूलानि चर्वयित्वा, पुष्पाण्याघ्रायास्तरणानि प्रसार्य, ससुखं शयावहै । पुस्तकानि चापि वाचयाव एवं सुखेन रात्रिर्गमिष्यति भोः !'

एतच्छ्रुत्वाभाग्यवादी समब्रवीत्—'साधु, साधु ! बहु पराक्रान्तं त्वया ! प्रशंसनीयस्तेऽयमुत्साहः किलायुष्मतः !' एवमुक्त्वा तौ द्वावपि प्रसन्नेन मनसा तं मोदकमभक्षयताम् । ततो यथारुचिजलमापीय ताम्बूलवीटिकाश्चाचर्वयताम् । शयनीये समास्तीर्य तौ सानन्दं स्थितौ पुष्पाण्याघ्राय यथेच्छं पुस्तकानि च पठित्वा शांतिपूर्वकमस्वपताम् ।

अथ प्रातर्नृपस्याज्ञया राजसेवकैस्तस्य कोष्ठस्य द्वारकपाटावुद्घाट्य तौ द्वावपि ततो बहिर्निष्कास्य राजसभायां नृपस्य पुरत उपस्थापितौ । तौ दृष्ट्वा नरेशोऽपृच्छत्—'अपि युवयोर्विवादस्य कोऽपि निर्णयो जातो न वा ?' तच्छ्रुत्वा पुरुषार्थवादी गर्वेणावदत्—'राजन् ! निर्णयः सुस्पष्टं बभूव । पुरुषार्थस्यैव विजयः समभूत् । यतो मया तत्र कारागारस्य कोष्ठेऽवरुद्धेनापि च यथासम्भवं पुरुषार्थमवलम्ब्य प्रयत्नः कृतः । परिणामतो दीपकं, मोदकं, जलकुम्भमास्तरणानि, ताम्बूलानि, पुष्पाणि च प्राप्यावां द्वावपि क्षुधानिवृत्तिमकरव सुखेन चास्वपाव । यदि चाहं पुरुषार्थमवलम्बय कमप्युद्योगं नाकरिष्यं तदासौ भाग्यवादीवाहमप्यालस्यात् क्षुधातुर एवास्थास्यम् ।'

पुरुषार्थपरस्य तानि वचनानि श्रुत्वा नृपस्तं भाग्यवादिनमपृच्छत्—'भोः भाग्यवादिन् ! त्वं किं कथयसि ?' तदा सोऽभाषत—'राजन् ! अहं तु मन्ये, भाग्यस्यैव विजयो बभूवात्र प्रकरणेऽस्मिन् । यतोऽहं तु भाग्यमेव सर्वत्र फलतीति सत्यं मन्यमानो 'यदभावि न तद्भावि भावि चेन्न तदन्यथा' इति निश्चिन्तो भूत्वा तत्र कारागारस्यान्धकारमये कोष्ठेऽशये, सुखेन निद्रायाः समाधिसुखं चान्वभवम् । रात्र्याः प्रथमे प्रहरे व्यतीतेऽयं पुरुषार्थवादी महाशयो मामजागरयत् । प्रबुद्धोऽहं प्रज्वलितस्य दीपकस्य प्रकाशे

सर्वां स्थितिं सुस्पष्टमबुद्ध्यम् । पुनरसौ भाग्यवादिने मह्यं मोदक, जल ताम्बूलानि, पुष्पाणि, शय्यां च प्रददौ । अयं तु मे भाग्यस्यैव चमत्कारो यत परिश्रमस्त्वनेनैव कृतः परं मया तु श्रममायासं प्रयासं प्रयत्नं वा विनैः सर्वमन्नपानादिकं राजसिकं सुखं यदृच्छया प्राप्तम्! अपरं पुनर्भोजः कुर्वता मया मोदकमध्ये निहितमेतद्दीनारं (स्वर्णमुद्रां) चापि प्राप्तम्।' एव मुक्त्वा स भाग्यभक्तो नृपस्याग्रे दीनारं दर्शितवान्। एतत् सर्वं दृष्ट्वा पुरुषार्थवादी चकितो विस्मितश्चाभूत्। तदा नृपोऽब्रवीत्—'युवां द्वावपि स्वस्वविश्वासानुसारं विजयिनौ स्थः। अनेन पुरुषार्थवादिना स्वोद्योगाश्रयात् सुखं लब्धम्। भाग्यवादिना त्वया च भाग्यादेव परिश्रमं विनैव स्वत एव सिद्धं सर्वं सुखं प्राप्तम्। अतोऽधुनाहं निर्णयामि यद्भाग्यवान् भाग्येन तथा च पुरुषार्थवान् पौरुषेण च संसारे स्वमनोरथं साध्नोति। वस्तुतो भाग्यं पुरुषार्थश्च द्वावपि जीवनेऽस्माकमावश्यकौ भवतः। तदेवोक्तम्—

"यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत्।
तथा पुरुषकारेण विना भाग्यं न सिद्ध्यति ॥१॥"

—०—

# श्रमदेवी

[ १ ]

आसीत् सा वणिजो भक्तवत्सलस्य वधूः। कनकवर्णावदाता, दीर्घा, कुसुमकोमला च तस्या देहयष्टिः, चन्द्रबिम्बमिवातिरमणीयं परमसुन्दरं नयनाह्लादकं मधुरमधुराकृतिमञ्जुलं मुखं, भीतचकितायाः कातराया हरिण्या इव दीर्घापाङ्गे नयने, आकर्णान्ते तिर्यगाकुञ्चिते भ्रुवौ, काञ्चनपट्टिकाभास्वरो भालपट्टः, ईषद्रक्ताभौ सुस्निग्धौ ललितसुकुमारौ कपोलौ, शुकतुण्डानुकारिणी नासिका, नितम्बबिम्बावलम्बी भ्रमरमालामनोहारी केशकलापः, गोललोलपीनौ भुजौ, कम्बुग्रीवा, कोकिलकण्ठस्वरालापा, प्रोत्फुल्लयौवनारम्भे नवे वयसि पदं दधाना, सर्वतो देदीप्यमानकान्तच्छविः, स्वरूपलावण्यतारुण्यविभवैः सम्पन्ना सर्वैरपि कुलरमणीरत्नसुलभैर्गुणैः वासन्तीलतेव पुष्पिणी पल्लविनी चकासदच्छाच्छच्छविर्जङ्गमा हेमवल्लीव यदा सा पतिगृहे विचचार, तदा स्वभर्तुः परिवारजनानां, प्रतिवेशिनां, सर्वसाधारणानां नागरिकाणां च मनः स्वकीयेन कोमलकान्तमनोहरेण सौन्दर्येण समाकर्षन्ती विरेजे। लज्जाशीलापि सा गृहकार्यकलापेषु नितरां स्फूर्तिमती, परमकुशला, साक्षात्क्रियासिद्धिरिव योषिद्विग्रहवती शुशुभे। शीलगुणाधिक्यात् सा महता प्रयोजनेन बिना न बहु भाषते, तथापि सति परमावश्यके यदा यदा साऽल्पाल्पं किमपि वदति तदा तदा कलकोकिलकूजनस्वरालापोऽपि च मन्दतामेति स्म। न केवलं सा स्वरूपसम्पदा, यौवनोल्लासैः, प्रोद्दामदीप्तिमता शृङ्गारवैभवेन सविभ्रमेण, नयनासेचकेन मोहनाकारणैर्वापितु स्वाभिजात्यशीलेन, सम्भ्रान्तजनोचितेन शोभनेन स्वभावेन गृहिणीगुणैः, शालीनतया, शीलेनापि च सा स्वकीयानां परकीयानां परिचितानामपरिचितानामपि सर्वेषां मनो जहार। गृहकर्मसु कुशला सा सर्वकार्यारम्भेषु सोत्साहं सोद्योगं च प्रवर्तमाना, स्वकर्मकौशलमाविष्कुर्वाणा सविवेकं गार्हस्थ्यधर्मान् सर्वान् महद्भिः प्रयत्नैः सम्पादयन्ती तांस्तान् क्रियाकलापान् मनोयोगेन परिश्रमेण च नित्यमेव हि निपुणं सम्पादयन्ती सदा सर्वदा प्रसन्नचित्ता स्मितपूर्वमालपन्ती समभूत्। आर्थिकदृष्ट्या सा निम्नमध्यमवर्गीयाणां गृहस्थवणिजां कुलकन्यकासीत्, ततः सा विषयभोगसुखेषु नातिसतृष्णा बभूव। यदृच्छया

प्राप्तेन स्वपतेर्धनलाभांशेनैव सन्तुष्टा हृष्टा प्रसन्ना हर्षभरमुल्लसन्ती स्वजीवने न कमप्यभावमंशतोऽप्यन्वभूत् । लक्ष्मीरिति तस्या अभिधानं सर्वात्मनान्वर्थं बभूव । तस्याः पतिश्च भक्तवत्सल इतिलोकेषु ख्यातो बभूव ।

अथ कालक्रमेण लक्ष्मीर्यौवनोत्फुल्लगात्री स्वपत्युर्भक्तवत्सलस्य नयनयोः स्वरूपसुधामाधुरीरसानासिञ्चन्ती भोगोपभोगैश्च तैस्तैर्विश्रम्भालापैः सर्वोपचर्यादिभिस्तं परितोषयन्ती दिने दिने तरलतरतारुण्यश्रियं समासाद्य पुष्पिणी पल्लविनी सफला प्रफुल्ला लतेव पुत्रमेकं सुषुवे । पुत्रजन्महेतोः सा सर्वेषां कुटुम्बिनां प्रियापि सुतरां प्रीतिपात्रं बभूव । श्वशुरालये, पितुर्गृहे, ज्ञातिषु, समाजे च तस्याः समादरो महान् स्नेहसद्भावोऽनुरागश्च समभूत् । लक्ष्मीदेव्या गार्हस्थ्यं कल्पलतासनाथं स्वर्गभवनमिव रेजे । नागरिकाश्च तं भक्तवत्सलं वणिजं लक्ष्मीपतित्वेन सद्गृहस्थं भूरिभाग्यभाजं सर्वतः सफलं सुखिनं सज्जनं च पुरुषं मेनिरे । यस्यां किल नगरवसतौ भक्तवत्सलो वसति स्म तत्रत्याः सर्वेऽपि च प्रतिवेशिनो जनास्तस्यः गार्हस्थ्यं बहुपुण्योपचयलब्धं तपसः फलमिवान्तर्मनसि भावयन्तः कामपि स्वस्थां निर्दोषां स्पर्धां श्रद्धामास्थां च दधानास्तत्सुखाय स्पृहयन्ति स्म । इत्थं तस्य गृहस्थाश्रमः स्वर्गीयसुखवैभवं चापि समतिशेते स्म ।

[ २ ]

भक्तवत्सलो वणिक् धान्यानां वाणिज्यव्यवसायं कुर्वन्नासीत् । ग्रामेषु ग्रामीणानां हृदये तस्य महती प्रतिष्ठास्था विश्वासश्च बभूव । स खलु प्रायेण सदा सर्वदैव प्रातः शीघ्रमुत्थाय स्नानसन्ध्याभगवत्पूजाराधनादिकं नित्यनियम यथाविधि सम्पाद्य गोवृषभमेकमारुह्य ग्रामाद्ग्रामान्तरं जगाम । स तत्र ग्रामेषु कृषीवलानां गृहान् गत्वा पण्यवस्तूनां क्रयं विक्रयं च चक्रे । यदा कस्यापि कर्षकस्य गृहे विवाहोत्सवः प्रसवो, मरणं व्रतोद्यापनं, यात्रागमनादिप्रसङ्गः समुपतिष्ठते स्म तदाऽसौ भक्तवत्सलो वणिक् तेभ्यो धन धारयति स्म । चातुर्मास्यारम्भे कृषिकर्मोपयोगीनि साधनोपकरणानि, धान्यबीजानि, हलकर्षणोपयुक्तान् वृषभान्, वस्त्राणि गुडतैललवणादीन् गार्हस्थ्योपयोगिनो नानाविधान् पदार्थान्नगरादानीय मूल्यविनिमयेन तेभ्यः प्रयच्छति स्म । वसन्ते, शरदृतौ च परिपूर्णे कृषिकर्मणि, धान्यराशिषु प्राप्तेषु कृषीवलानां हस्तेषु स तेभ्यस्तत्क्षमतानुरूपं धान्यकणान् जग्राहांशतः, सत्यामावश्यकतायां पुनरपि स कर्षकेभ्यो धान्यं धनं च धारयितुं सन्नद्धस्तस्थौ । भक्तवत्सलो वैष्णवो वणिगासीत्ततः स धान्यानां व्यापारं स्वकुलपरम्पराप्राप्तां धर्म्यां वृत्तिं मत्वा समाचचारप रन्तु स न कदापि न्यायविरुद्धं कुसीदं धान्यादिपदार्थाश्चादत्ते स्म । न च स कृषका-

दीनामधमर्णानां भर्त्सनामवमाननां तिरस्कारं वा जातुचिच्चकार। यदि कदाचित् दुर्भिक्षवशात्, रोगप्रसारात्, राजकारणादन्यस्मादपि वा कस्माच्चिद्धेतोस्तस्या धमर्णा ग्रामीणास्तेन धारितं धनं धान्यादिकं च तस्मै प्रत्यर्पितुं न शेकुस्तदा स तेभ्यः सहानुभूतिं, समवेदनां च प्राचीकटत्। तेभ्यः प्रदत्तस्य पूर्वधनस्यादानमचिन्त्यैव स पुनरपि धनधान्यादिकं प्रादादभावक्लेशकष्टविलष्टेभ्यो ग्राम्यजनेभ्यः। यदि केचन ग्रामीणा भक्तवत्सलस्याधमर्णत्वं गताश्चिरायापि तन्मूल्यं परिवर्ते प्रदानोचितं धान्यादिकं च प्रतिदातुं न पारयँस्तदापि स तेभ्यो मनागपि न चुकोप प्रत्युत तान् सर्वान् प्रति सभ्यशिष्टजनोचितं व्यवहरन् पुनः पुनस्तेभ्यः साधनसम्पदं प्रदाय भूयोऽपि च कृषिकर्मोद्योगमाचरितुं प्राणुदत्। स खलु भक्तवत्सलो वणिक् स्वस्य मृदुलेन व्यवहारेण, मधुरेण सम्भाषणेन धनधान्यादिप्रदानेनान्येनापि सर्वविधसाहाय्येन सर्वानपि ग्रामीणान् कुलवृद्धः पितेव प्रभूतं पुपोष। धैर्यधनो महाजनः स तेषां परिस्थितिं क्षमतामार्थिकीमायव्ययादिकं च विचार्य शनैः शनैर्यथासमयं तेभ्यः स्वकीयमृणधनं जग्राह। इत्थं स व्यापरे व्यवहारे च कामप्यभूतपूर्वां नैपुणीं दधानो बहूनां ग्रामवासिनां प्रजाजनानां प्रियो विश्वासार्हो महाजनः सभ्यो वाणिज्यव्यापारकर्त्ता च प्रासिद्धचत्। स्वगुणैः सभ्याचरणैर्हितचिन्तनैः स तेषां सर्वेषां हृदयानि जिगाय।

इतो भक्तवत्सलस्य गृहे सदा सर्वदा ग्रामीणा जना अनिवार्यतयावश्यकान् कृषिकर्मोपयोगिनो धान्यादिसम्भारानाहर्तुं समायान्ति स्म, तांस्तानशेषान् पदार्थानादाय स्वगृहान् प्रति निवर्तन्ते स्म। प्रातः कालादारभ्य सूर्यास्तमनवेलापर्यन्तं तस्य गृहाङ्गणे यूथशो भिल्ला मालाकाराः, काष्ठशिल्पिनो दारुकास्तैलिकास्तन्तुवायाश्चर्मकारास्तथान्येऽपि चैवविधा ग्रामीणाः कृषाणा दीना हीनाः सर्वसाधनविहीना जना भक्तवत्सलस्य वणिजो गृहं समागत्य तत्प्राङ्गणभूमौ नानाविधान् क्रेयपदार्थानावश्यकान् क्रेतुं प्रतीक्षमाणाः सन्तिष्ठन्ते स्म। ते च तत्रोपनिषण्णाः केचिन्मृण्मयनलिकासु तमालचूर्णमापूर्याग्निना प्रज्वाल्य च धूम्रपानं कुर्वन्तो नानाविषयगतान् वार्तालापान् व्याजह्रुः भक्तवत्सलस्य गृहाङ्गणं जनसम्मर्दाकुलमापणमेलकमिव कोलाहलध्वनितं तस्थौ। तैलगुडलवणधान्यतमालपत्रगोधूमादीन् विविधान् पदार्थान् विक्रयोचितान् वस्त्रपोट्टलिकासु ग्रन्थिबद्धान् कृत्वा शिरसि निधाय चानिन्युस्तद्भारतोलनं कृत्वा कृत्वा मूल्यं विनिश्चित्य भक्तवत्सलाय प्रार्पयन्, तत्परिवर्ते च मूल्यधनं जगृहुर्वा सत्यावश्यके यावदभीष्टं वस्तुजातमक्रीणन्। येषां सविधे द्रव्यमुद्रा नाभूवंस्ते प्रायेण धान्यविनिमयेनाभीष्टान् पदार्थान् गृहीत्वा स्वगृहान् प्रति जग्मुः। नगरविपणिषु शासनकार्यालयेषु चावश्यकान् कार्यकलापान् निर्वर्त्य सायं स्वग्रामान्

प्रति जिगमिषुभ्यो ग्राहकेभ्यो भक्तवत्सलो वणिक् यदा कदा तद्बालकबालिकानां कृते प्रसादरूपेण गुडमोक्षफलीचणकादीनि भोग्यवस्तूनि दत्वा दत्वा तान् सर्वान् समतोषयत्।

अथ व्यवसाययोग्ये ग्राहकैः साकं व्यवहारे च लक्ष्मीः स्वपत्युः साहाय्यमाचरन्ती कमपि महान्तमेवोद्योगमाचचार। प्रायेण सा सदा सर्वदा स्वगृहाधितिष्ठन्ती ग्राहकत्वेन तत्र प्राप्तान् ग्रामीणान् जलपानेन, शिष्टमधुरेण वाग्व्यवहारेण, तेषां गार्हस्थ्यधर्मनिर्वाहसम्बन्धिभिः कुशलक्षेमप्रश्नादिभिः, सहानुभूत्या, सुखदुःखयोः समवेदनया च परिचरन्तीव सदा प्रसन्नमुखी मन्दस्मितपूर्वमाभाषमाणा, कर्तव्यकर्मसु व्यापृतापि निरुद्वेगा, व्यस्तसमस्तापि प्रशांतचित्ता, स्वस्था, स्थितप्रज्ञेवानन्दभरनिर्मलोज्ज्वलचरिता, स्वपतेर्व्यापारवृत्तिप्रेरणेव मूर्तिमती क्रियासिद्धिरिव कुशला गृहलक्ष्मीत्वेन तस्थौ। ये ये धान्यादयः पदार्था भिल्लादिभ्यः कर्षकेभ्यो भर्त्रा भक्तवत्सलेन क्रीतास्तान् सर्वान् दलनकण्डननिष्पेषणशूर्पसंस्कारैः परिष्कृत्य गृहाङ्गणतः समुत्थाप्य सा कुशूलासु मृद्भाण्डेषु वंशपात्रेषु लोहपित्तलताम्रभाजनेषु च सावधानं संरक्ष्य संजग्राह। इत्थं नानाविधानां धान्यादीनां क्रीतपदार्थानां सङ्ग्रहे, संरक्षणे, तदादानप्रदानयोश्च सा गतावधाना, तद्गतेन मनसा सूर्योदयात्सायङ्कालपर्यन्तं सकलं दिनं सततं महान्तं परिश्रमं चक्रे। मितभाषिणी सा लक्ष्मी स्वगृहोचितेषु तेषु तेषु कर्मसु सोत्साहं सोद्योग च प्रवर्तमाना कणशः क्षणशश्च स्वजीवनं सफलयन्ती मनसि मुमुदे। निखिलं दिनं कठोरं परिश्रमं कृत्वापि च सा साध्वी लक्ष्मीर्भर्तुर्भक्तवत्सलस्य सेवासपर्यासु, भोगोपभोगेषु, मनोविनोदानन्देषु च तत्परतया प्रीत्या च मनो दधे। तयोरित्थं भक्तवत्सललक्ष्मीदेव्योर्वणिग्दम्पत्योर्जीवनं ससुखं, सानन्दं, साह्लादं, सविनोदं सस्नेहं, सप्रणयं च सदा सर्वदा संतोषपूर्णं शांतियुक्तं सकुशलक्षेमं विकाशशीलं च जायमानमभूत्।

३

अथ तयोर्लक्ष्मीभक्तवत्सलयोर्वणिग्दम्पत्योर्गृहस्थाश्रमः स्वाभाविकेन जीवनक्रमेण विकाशमानो बभूव। विवाहसमयतो दशवर्षाभ्यन्तरे तयोर्गृहे धनधान्यादिसम्पत् प्रभूतं ववृधे। तयोर्गृहाङ्गणे गृहाभ्यन्तरे च संग्रहालयेषु यत्र तत्र सर्वत्र क्वचित् गोधूमानां, मुद्गानां, चणकानां, यवानां, तिलानां गुडस्य शालिधान्यानां तथा नानाविधानामन्येषां चान्नपानोचितानां भोग्यपदार्थानां राशय इतस्ततः प्रसृताः सन्तिष्ठन्ते स्म। गृहे च तयोरेका प्रभूतदुग्धप्रदा कामधेनुरिव सुलक्षणा सवत्सा च धेनुर्गोरसान् पुष्कलान् प्रयच्छन्ती विरजे। तयोर्गृहे दुग्धदधिघृतनवनीततक्राणां सुधाधारा अजस्रं प्रवहमाणा इवाभूवन्। तयोर्द्वयोः सद्व्यवहारात् संतुष्टाः सर्वेऽपि धान्यविक्रेतारो ग्रामीणाः कर्षका

भिल्लादयो जना भक्तवत्सले तथाश्वस्ता विश्वस्ताश्च समभूवन् यथाते तद्गृहमेवागत्य स्वकीयान् क्रेयपदार्थान् नित्यशो व्यक्रीणन् । इत्थं योग्यरीत्या वाणिज्यव्यापारचर्यामाचरतोस्तयोर्गृहे न केवलं धनधान्यानां समृद्धिरेवापि तु सुवर्ण रौप्यं मुद्रा वस्त्राण्यलङ्कारास्तथान्येऽपि चानेके भोग्यपदार्था वृद्धिं जग्मुः । दशवर्षाभ्यन्तरे व्यापारनिष्णातस्य तस्य भक्तवत्सलस्य पुरुषार्थेन, परिश्रमेण, बुद्धिमत्तया, तथा च लक्ष्म्या विवेकेन, सेवया, सङ्ग्रहपाटवेन च भक्तवत्सलो नगरे किलैकोऽद्वितीयः प्रामाणिकः सम्माननीयो महाधनः श्रेष्ठी प्रासिद्ध्यत्, तस्य सामाजिकी प्रतिष्ठा प्रतिपत्तिश्च प्रामाणिकतामासाद्य सर्वतोदिक् प्रससार ।

अथैवं गच्छति काले सुखशांतिपूर्वकं सानन्दं च सांसारिकं गार्हस्थ्यसुखमुपभुञ्जतोस्तयोर्यौवनविकाशक्रमेण साध्वी सा लक्ष्मीदेवी सर्वलक्षणसम्पन्नं नयनानन्दकरं पुत्रमेकं सुषुवे । पित्रोर्हृदयाह्लादकत्वादतिप्रियत्वाच्च तस्य जातस्य नामकरणसंस्कारावसरे चन्द्रप्रकाश इत्यभिधानं स्वमनोऽनुकूलं स्थिरीचकार भक्तवत्सलः । चन्द्रप्रकाशोऽपि स्वकीयाभिर्बाललीलाभिः पित्रोर्मनोहरन् शुक्ले पक्षे स्वकलोपचयाच्चन्द्र इव ववृधे । भक्तवत्सलस्य गृहे लौकिकभोगसुलभानि सर्वाण्यपि भौतिकानि साधनानि तथा च समस्ता भूरिभोगाश्चापि स्वाधीना आसन् । ततश्चन्द्रप्रकाशः सर्वतोऽनुकूलां परिस्थितिं, समृद्धं वातावरणं, पित्रोः परं वात्सल्यं, लालनं, पालनं, संरक्षणं च सम्प्राप्य कैशोरे वयसि वर्तमानो वाणिज्यव्यवसायसम्बन्धिनीं सर्वां समुचितां शिक्षां दीक्षां चावश्यकीं लभमानः स्वपित्रोः, कौटुम्बिकानां, सर्वसाधारणानां च मनसि महतीमाशां स्वस्योज्ज्वलभविष्यद्विषये प्रयच्छन्निवासीत् । इत्थं गार्हस्थ्ये किमपि स्पृहणीयं च सुखातिशयमनुभवन्तौ तौ वणिग्दम्पती स्वजीवनस्य परां सफलतां सम्भावयन्तौ मुमुदाते ।

अथाधुना बाल्यमतीत्य यौवने पदं निदधानश्चन्द्रप्रकाशो विवाहयोग्यं वयः प्रपेदे । ज्ञातयः, सम्बन्धिनः, सुहृदो, मित्राणि, परिचिता, हितैषिणः सर्वेऽपि च चन्द्रप्रकाशस्य विवाहकौतुमुत्साहात् सम्पादयितुं प्राणुदन् । तेनापि च वणिजा स्वपत्न्या लक्ष्मीदेव्या सह परामृश्य, सर्वेषां सम्बन्धिजनानां सहमत्या, कस्यचिन्नागरिकस्याभिजनवतः सुजातां सुशीलां गुणकर्मस्वभावैः स्वानुरूपां कन्यां वाग्दानविधिविधान-संस्कारं विधायात्मनः पुत्रवधूत्वेन स्वीकृत्य वव्रे । षण्मासाभ्यन्तरे चन्द्रप्रकाशस्य विवाहोत्सवो महता समारम्भेण भवितेति सर्वे जनास्तदुत्सवसुखानुभूतये सस्पृहाः समुत्कण्ठिताः कृतेक्षणा इवासन् । तं माङ्गलिकं महामहोत्सवं तमवसरं प्रतीक्षमाणाः सर्वे जना नानाविधाः शुभो-

दकाः सम्भावनाः शुभसङ्कल्पान्महान्ति चायोजनानि कुर्वाणा बभूवुः । भक्तवत्सलस्य गृहे प्रारप्स्यमाणस्य पुत्रविवाहमहोत्सवस्य सर्वेऽपि च सम्भारा उपकरणानि च क्रमशः शनैः शनैः संयोज्यमानान्यभूवन् ।

४

परन्तु 'को जानाति जनो जनार्दनमनोवृत्तिः कदा कीदृशी ?' नियतेर्नियमान् विधातुर्विधानरूपरेखां न हि सांसारिको जनस्तत्त्वतो ज्ञातुं प्रभवति । भाग्यविप्लवाच्चन्द्रप्रकाशोऽकस्माच्छीतलारोगेण पीडितो बभूव । रोगस्य महोग्रतया रुग्णस्य चन्द्रप्रकाशस्य महती बतावस्थाभूत् । कृतेष्वपि परः सहस्रेषु प्रयत्नेषु, संसाधितेष्वपि बहुषु चिकित्सोपचारेषु, समाराधितेष्वपि देवेषु, प्रदत्तेष्वपि च बहुषु दानादिकेषु, व्ययीकृतेष्वपि प्रचुरेषु धनसङ्ग्रहेषु चन्द्रप्रकाशो न कथमपि स्वास्थ्यं पुनरवाप । बहुकालं यावच्छय्याशरणोऽसौ दिने-दिनेऽसाध्येनानेन शीतलारोगेण परिक्षीयमाणदेहोऽन्ते चन्द्रप्रकाशः प्राणान् तत्याज ।

इत्थंभूते व्यतिकरे भक्तवत्सलस्य वणिजः सर्वापि च गार्हस्थ्यस्थितिर्विपर्यस्ता विपन्ना शोक-दुःखविकला विधिविडम्बनाक्रान्ताऽतीव करुणकरुणानन्यगतिका दयनीया च बभूव । सर्वभोगसुलभेऽपि तस्य गृहस्थाश्रमे दारुणदुःखरस्यान्धकारघटाच्छन्नं महाशोकपूर्णं वातावरणं समभूत । लक्ष्मीस्तु पुत्रमरणादतीव शोकविषाददुःखार्ता कुररीव मुहुर्मुहुः स्थूलस्थूलाश्रु सबाष्पगद्गदं विलपन्ती विसञ्ज्ञेवोद्भ्रान्तेव विक्षिप्तचित्तेवागतिकेव विक्लवेव सर्वमपि चैकपदे विस्मृत्य शोकसागरे निमज्जन्ती कैवर्तकविहीना तरणीव कामपि विडम्बनामयीं दुःस्थितिमवाप । परन्त्वत्र दैवायत्ते जीवनमरणप्रसङ्गे को नु बत किं कर्तुं प्रभवतु ? अन्ततस्तयोर्वणिग्दम्पत्योर्मनोदशा स्वजीवने नैराश्यस्य परां कोटीं पस्पर्श, वैराग्यभावश्च तयोस्तीव्रतमं निर्वेदं जगाम । स्वजीवनचर्यायां तयोरेकान्ततो निःस्पृहता प्रससार । सर्वसाधारणानां नागरिकाणां दृष्टौ तावेतौ लक्ष्मीभक्तवत्सलौ नितान्तं दुःखान्तां दयनीयतां जग्मतुः । शोकदुःखाघातनिर्दग्धहृदयौ तौ दम्पती कथमपि स्वकीयान् कृपणान् प्राणानपि रक्षितुं न ववाञ्छतुः ।

एवं हि परमशोच्यां कष्टां दशामनुभवतोस्तयोर्वर्षप्रायः समयो बत महता काठिन्येन कथमपि व्यातीयाय । तीव्रतमं शोकावेगं, नितरां निर्वेदं चापन्नो भक्तवत्सलो वणिग् जागतिकेषु व्यवहारेषु मन्दादरो भूत्वा न कथमपि स्वात्मनो वाणिज्यव्यवसायं यथापूर्वं निर्वोढुं समर्थोऽभूत । एवमचिरादेव तयोश्चिराय बद्धमूलापि गृहस्थाश्रमव्यवस्था सकला शिथिला मन्दमन्दा छिन्ना भिन्नाऽव्यवस्थिता च बभूव । पुत्रशोकार्दितस्य भक्तवत्सलस्य वणिजो मस्तिष्कं

विकृतिं जगाम। गच्छत्सु दिनेषु स विक्षिप्त इव ग्रहग्रस्त इव प्रेताविष्ट इव भक्तवत्सलोऽचिरादेव विचेतनो मूढमतिः स्वस्थतामात्मनोऽपहाय सर्वामपि च स्वकीयां पूर्वाश्रमस्थितिं सहसा व्यस्मार्षीत्। स सर्वमपि विस्मृत्य दयनीयां दशां गतवान्। असह्यात् पुत्रशोकदारुणदुःखादत्यन्तं परिपीडितो भक्तवत्सलोऽन्ते-रोगाक्रान्तो भूत्वा मरणासन्न इवासह्यां स्थितिं प्राप।

अथाधुना लक्ष्मीः पुत्रशोकदग्धहृदयापि भर्तुर्भक्तवत्सलस्य तामेतां महतीं रुग्णां परिस्थितिमवलोक्य स्वपुत्रमरणशोकं विस्मृत्य पत्युश्चिकित्सोपचारेषु तत्परिचर्यायां तत्सेवायांच तद्गतेन मनसा महतः प्रयत्नान् कर्तुमचेष्टत। अनेकैश्चिकित्सकैर्वैद्यैर्दाक्तरैश्च सा लक्ष्मीर्भक्तवत्सलस्य रोगोपशमायोपचारान् सर्वानकारयत्। सा जपदानपूर्वं पूजोपहारैर्देवताराधनान्यपि चारेभे। किं बहुना, येन हि यदुक्तं तत्सर्वं सा तन्मयतया चकार परन्तु भक्तवत्सलो वणिक्कथमपि स्वास्थ्यं नो लेभे। बहुधनमत्र कर्मणि व्ययं जगाम तथापि रोगावेगो नांशतोऽपि-शशाम। वर्षमेकं यावद्भक्तवत्सलः शय्याशरणो भूत्वान्ते पञ्चत्वं जगाम।

५

वज्रप्रहारनिष्ठुरेणात्यन्तासह्येनातिदारुणेन सद्यो जातेन वैधव्यदुःखेना-हता कोमलकान्तलतेव लक्ष्मीः शोकाग्निनापदग्धा सर्वतो भृशं दुःखिता च कारुण्योदधौ निममज्ज। भक्तवत्सलस्यौर्ध्वदैहिकीः क्रियाः सम्पाद्य सर्वेऽपिच ज्ञातिजनाः सम्बन्धिनो बन्धुबान्धवाः कौटुम्बिकाश्च जनाः स्वगृहान्प्रतिजग्मुः। शोकदग्धहृदयापि लक्ष्मीर्महता कृच्छ्रेण कथमपि वर्षमेकमनैषीत्। पुत्रो मृतः, पतिश्चस्वर्गं गतः! सर्वोऽपि वाणिज्यव्यवसायोद्योगः शैथिल्यमपजगाम! अधुना को नु खलु ग्रामाद्ग्रामान्तरं गत्वा क्रयविक्रयवस्तूनामादानप्रदानं कुर्यात्? को वा बत ग्रामीणेभ्यो दत्तं धनं पुनरानयेत्? को वा लेखनादि कर्म सम्पादयेन्नाम? इत्थमनवधानत्वात् क्रमशः सर्वोऽपि च व्यापारप्रसारो न्यरुध्यत, ये केऽपि च सज्जनाः स्वाभिभक्ता। धर्मभीरवो ग्रामवासिनो बभूवुस्ते केचन धर्मभिया व्यवहारमर्यादामनुल्लङ्घमाना यदा कदा भक्तवत्सलस्य गृहमागत्य किंचित् किञ्चित् धनं लक्ष्म्यै प्रार्पयन्। परमधिकांशतः स्वार्थान्धा लोका मृते हि भक्त-वत्सले वणिजि तत्कुटुम्बं प्रति मन्दादराः पूर्वसम्बन्धान् सर्वानुपेक्षितुमारेभिरे। केचनार्द्धं केचिदर्द्धादप्यर्द्धमन्ये चतुर्थांशं पञ्चमांशं वा देयं धनं प्रदाय स्वकीयमृण-मपाकृत्य स्वकर्त्तव्यस्येतिश्रियं मेनिरे। लक्ष्म्या मानसी दशा नो व्यवस्थितासीत्ततो भक्तवत्सलेनोपार्जितं समग्रमपि धनं क्रमशः क्षीणक्षीणं सन्निःशेषतामियाय। पूर्वोपार्जितं समस्तमपि धनवैभवं शनैः शनैरपाक्षीयत, लक्ष्म्या गृहस्थितिश्च सर्वा

विकलाऽव्यवस्थिता च बभूव । वर्षाकालीनो जलपूरप्रवाह इव भक्तवत्सलस्य वणिजःसमग्रमैश्वर्यं ननु कुतोऽप्यन्तर्दधौ ।

एवं वर्षप्रायः समयो व्यतीयाय । लक्ष्मीर्जगतोऽस्य स्वार्थान्धस्य वास्तवं स्वरूपं स्वानुभवाद् यथार्थतो बुबुधे । सारांशोऽयं यत्संसारोऽसौ प्रायेण स्वार्थायैव चेष्टते, तथापि दिवंगतस्य भक्तवत्सलस्य वणिजः सौजन्यं स्मरन्तः केचन तत्सुहृदो मित्राणि सखायश्च लक्ष्म्यै धैर्यं साहसमुत्साहमाश्वासनं च प्रयच्छन्तः समये समये तां सान्त्वयामासुः । फलतो लक्ष्मीः स्वावलम्बनाज्जीविकावृत्तिमुपार्जयितुं तत्परा बभूव। हृदन्तो वैराग्यंगतापि सा कथमपि धैर्यं धृत्वा स्वनिर्वाहाद् यावदवशिष्टमल्पाल्पं धनं संगृह्य पुनरुद्योगमालम्ब्य वाणिज्यव्यवसायकर्मणि मनो दधे । या लक्ष्मीर्भक्तवत्सलस्य वणिजो गृहलक्ष्मीर्मूर्तिमती व्यापारफलसिद्धिरिव विरेजे, सैवेदानीं कठोरं दुष्करं च प्रगाढं परिश्रमं कर्तुमारेभे । सा सदा सर्वदा प्रातः शीघ्रमेवोत्थाय, शौचस्नानादिकाः क्रिया निर्वर्त्य, भगवत्पूजनं कृत्वा, देवालयान् गत्वा देवदर्शनानि विधाय पुनर्गृहमागत्य सर्वं दिनं स्वगृहमेवाधितस्थौ। देवदर्शनार्थं गता सा स्वगृहं प्रतिनिवर्तमाना मार्गे विपणितो गार्हस्थ्योपयोगिनः क्रेयपदार्थान् स्वयमेवाक्रीणात् । गृहमागत्य भोजनादिकं परिसमाप्य ततो निखिलमपि दिनकर्मयोगे व्यापृता बभूव। तस्या दिनचर्यानुष्ठानं सदा सर्वदैकरसतैलधाराप्रवाह इवाजस्रमविच्छिन्नं प्रवहमानमासीत् । आदौ तु सा कतिचिद्दिनानि यावत् किमपि काठिन्यमसुविधां प्रातिकूल्यं चानुबभूव परन्तु गतेषु केषुचिद्दिनेषु साऽभ्यासवशात् स्वकर्तव्यकर्मसु किमप्यद्भुतं कौशलं समाससाद ।

अथ लक्ष्म्या उद्योदस्वरूपं, तत्कर्मयोगप्रणाली, तत्तपोविधिस्तस्या व्यापारकर्मपद्धतिश्चान्याहशी कापि च नवीनैव समभूत् । तथाहिकदाचित् सा तद्गृहमागतेभ्यो भिल्लादिकर्षकेभ्यो ग्रामीणेभ्यो धान्यादीन् पदार्थान् यावच्छक्यमक्रीणात्, कदाचित् ग्रामान्तरेभ्यो ये हि व्यापारिणो नगरमागच्छन् तेषां कृते भोजनं पक्त्वा तत्परिवर्ते पारिश्रमिकं जग्राह, कदाचित् प्रतिवेशिजनानां वस्त्राण्यसीव्यत् कदाचित्तूलपूलिकाः कृत्वा चर्खाचक्रेण सूत्रमकर्तयत्, कदाचित् सूत्रतन्तुभिर्यज्ञोपवीतानि समसाधयत्, कदाचित्, पलाशपल्लवैः पत्रावलीर्द्रोणांश्च विदधे, कदाचित् गोमयोपलसंञ्चयं चक्रे, कदाचित् मृत्तिकाचुल्लीर्निर्माय तद्विक्रयं चकार, यदा कदा महतां सुप्रतिष्ठितानां धनिकानां नागरिकाणां गोधूमयवचणकादीन्यन्नानि स्वगृहमानीय तद्दलनकण्डनादिकं कृत्वा तेभ्यः प्रत्यर्पयन्ती पारिश्रमिकं लेभे, कदाचिन्मरीचानामार्द्रकस्य हरिद्राया जम्बीराणां च सन्धित (आचार) संसाध्य, कदाचित् पर्पटादीन् विक्रीय च तन्मूल्यधनं प्राप । इत्थं नानाविधैर्लघूद्योगैर्यविल्लब्धधनमुपार्ज्य लक्ष्मीः कथमपि स्वात्मनो जीवनयात्रा-

पथे गतिशीलतामाससाद । अतीव सरलसरलं निर्दोषं स्वावलम्बननिर्भरं ससन्तोषं च जीवनं यापयन्ती लक्ष्मीः स्वकीयेऽस्मिन् गृहोद्योगव्यापारकर्मणि व्यापृता स्वल्पाल्पमपि धनं स्वावश्यकतापरिपूर्तये प्राप्नुवाना स्वाश्रयादेवात्मानं पुपोष । दिनचर्याङ्गभूतं देवदर्शनं विहाय न सा कस्याप्यन्यस्य गृहं जगाम । रात्रिन्दिवं सततं सा स्वोद्योग एव व्यस्तसमस्तात्मावृत्तिस्तस्थौ । विधवापि सा युवतिर्बभूव, तस्मात् खलकामुकानां दुर्भावदृष्टेरात्मसंरक्षणाय स्वशिरोमुण्डनं मासि मास्यकारयत् । न सा क्वचिद्यात्रोत्सवादिषु सामाजिकेपूत्सवेषु वृथा कालक्षेपं चक्रे प्रत्युत ग्राहकान्प्रति स्वोत्तरदायित्वापेक्षयागृहमेवाधितस्थौ । नगरे लक्ष्यास्तमिमं स्वावलम्बमुद्योगपरायणतां च वीक्ष्य सर्वसाधारणास्तस्यां विश्वस्ताः समभूवन् । भीष्मे ग्रीष्मे, वर्षन्तीषु वर्षासु, प्रचण्डे शीतकालेऽपि च यदान्ये व्यापारिणो ग्राहकान् प्रत्युपेक्षामदर्शयन् तदा लक्ष्मीः स्वगृहोद्योगे परमोद्योगपरम्परां दृढयति स्म । यत्कार्यमन्ये श्रमिका न कर्तुमुदसहन्त तल्लक्ष्मीर्लीलया निष्ठापूर्वकं प्रशांतेन मनसा समपादयत् । तस्यास्तमिममुद्योगसमारम्भमवलोक्य नगरस्यान्या अपि काश्चन विधवा निराश्रया अनाथास्तां जीविकोपार्जनोचितामुद्योगाश्रयिणीं वृत्तिं ययाचिरे । लक्ष्मीरपि पात्रत्वानुसारं ताभ्यः कार्यं पारिश्रमिकं च प्रददौ । एवं क्रमेण लक्ष्म्या गृहमेवं वाणिज्यकेन्द्रमिव स्वयंसिद्धं पवित्रं श्रमनिकेतनमिव बभौ । तस्या वाणिज्यप्रसारेण साकमेव प्रामाणिकता, प्रतिष्ठा, योग्यता, कर्मकौशलं, सच्चरित्रता, च सर्वजननेषु ख्यातिं जगाम । इत्थं व्यवसितायास्तस्या जीवनं ससुखं ससंतोषं च पञ्चपञ्चाशद्वर्षात्मकं व्यतीयाय । लक्ष्मीर्न केवलमात्मपोषणमेव चकार । पितुर्मायथाशक्ति दानधर्मादिकमपि समाचचार । तीर्थाटनयात्रामपि सा कृतव्रती । यथाग्नेस्तापात् प्रतप्तं काञ्चनं कामपि भास्वरां द्युतिं सशुद्धिं च धत्ते तथैव लक्ष्मीश्चारित्र्यशुद्धिं प्राप्य देदीप्यमाना शुशुभे ।

६

अथैकदा नगरे रात्रौ घटिताया दुर्घटनायाः समाचारः प्रातः सूर्योदयेन साकमेव सर्वतोदिक् प्रससार । तमिमं दुस्सम्वादं कर्णाकर्णि निशम्य लोका अकथयन्—'अत्र नगरवसतौ मध्यकेन्द्रचत्वरे वर्तमानायां वाप्यां निपत्य काचिन्महिलाऽऽत्मघातं कृत्वा प्राणांस्तत्याज'! प्रत्यक्षदर्शिनोऽपि केचनावोचुर्यत् सत्यासैषा घटना । तद्वापीं परितो राजकीया आरक्षिविभागस्य कर्मचारिणो वाप्यां पतितस्य कस्यचित् स्त्रीजनस्योद्धाराय चेष्टमाना वर्तन्त इति ।

यथा यथासौ दुर्घटनासम्वादो नगरे सर्वतः प्रसरति तथा तथा कौतुकप्रिया नागरिका आबालवृद्धं तत्र वापीक्षेत्रे जिज्ञासाकुलितचित्तवृत्तयो यूथशः समावायन्। काश्चन युवतयोऽपि नित्यमिव जलकलशहस्ता उदकानयनाय तत्राजग्मुः। क्षणादेव लोकसङ्घास्तत्स्थानं पर्यवारयन्। केचन रज्जुहस्ता अपरे लोहकण्टकवतीविडालीदधाना अन्ये वंशान् काष्ठवल्लीर्निःश्रेणीश्चादाय वापीप्रदेशं तं समाजग्मुः। घटिकाद्वयसमयं यावद्भूयोभूयो भूरि भूरि परिश्रमं कृत्वानेकोपायैर्नानाविधैः प्रयत्नैश्च शवमेकं समुद्धृत्य वापीतो बहिरानिन्युः। बहिर्निष्कासिते हि मृतशरीरे किलाश्चर्यकौतुकविस्फारिताक्षा दर्शकसमूहाः सकोलाहलमुच्चस्वरमघोषयन्—'अरे नन्वियं तु भक्तवत्सलस्य वाणिजो विधवा भार्या लक्ष्मीर्वत कूपे निपत्य प्राणानत्याक्षीत्!' विषयेऽस्मिन् विविधलोकानां विभिन्ना धारणा विचाराः कल्पना अनुमानानि तर्कोहापोहा जनरवाष्टीकाष्टिप्पण्यश्च नगरे यत्र तत्र सर्वत्र प्रसेरुः तथाहि—

'न ज्ञायते, किमर्थमसौ साध्वी लक्ष्मीदेवी नन्वेवं कूपे निपत्याकस्मादत्मघातं कृतवती? न तस्याः किमपि तादृशमत्याहितमस्माभिः श्रुतं दृष्टं वा येन सा जीवनान्तमेवं दयनीयं कुर्यात्!'

'सा तु स्वयमेव स्वावलम्बाद्व्यापारादिकं कृत्वात्मनो भरणपोषणयोग्यं धनमर्जयन्ती सर्वतन्त्रस्वतन्त्रं स्वजीवनचर्यामनुसरति स्म। वयं सम्यग् जानीमहे, यदास्या लक्ष्म्या गृहेऽन्नपानादीनि जीवननिर्वाहोचितानि भौतिकोपकरणानि वा नापहीयन्ते स्म। न कोऽपि च तस्या अपमानतिरस्कारो लोकापवादो वाभूद्येन सा प्रियान् प्राणानित्थमपत्यजेत्'?

'अये सा तु परमपुरुषार्थपरायणा स्वोद्योगादेव जीविकावृत्तिं वाणिज्यव्यापारकौशलेनावजयतिस्मा न सा कस्याप्याश्रयं ववाञ्छ, न च कस्यचित् पराधीनतां सेहे! बालविधवापि सा सती साध्वी पतिव्रता विषयभोगानपेक्षा दुःखदग्धहृदया तीव्रतमं वैराग्यमाश्रयन्ती तपस्विनीव संयमशीलं जीवनं नयति स्म! सैषा लक्ष्मीदेवी भगवद्भक्तिमत्युत्कटां दृढयन्ती व्रतोपवासतपश्चर्याभिः स्वचारित्र्यमतीवोज्ज्वलमभिररक्ष। समस्तमपि यौवनं सा निर्दोषं निरपवादं निष्कलङ्कं निर्विकारं चाक्षपयत्। सैषातीव सचेताः सुप्रतिष्ठिता सदा सर्वदा भद्रजनोचितां सभ्यमर्यादामनुपालयन्ती सर्वजनैः सुतरां सम्माननीयचरिताभूत्। तदा पुनः कस्माद्धेतोरियमेवमपघातं कृतवती?'

'सम्भवति, केनचिन्मानवराक्षसेनास्याः किमपि विप्रकृतं स्याद्येन तस्य नराधमस्यापचेष्टितमसहमाना जीवनान्तं कर्तुं मतिं चक्रे परं नैतदप्यस्याः पक्षेऽशतोऽपि घटते। यतः साऽजातशत्रुः सच्चरिता दयावती कोमलकरुणस्वभावा

च बभूव। श्वशुरपि तस्याश्चारित्र्ये बताक्षेपं कर्तुं नोत्सहेत। तदा कासौ विडम्बना बिभीषिका वा यद्वशमेषा सती स्वात्मानमपह्नुयात्। नात्र विषये किमपिसमाधानं भवति नः!'

'एतदपि च सम्भाव्यते, यदस्या मनसि किमप्यसह्यं मनोवाचामगोचरं किञ्चिदवितर्क्यं मर्मच्छित्कष्टं भवेदथवा कोऽपि तादृशो गुप्तरोगः स्याद्येन नितरामन्तः प्रपीड्यमानान्ते स्वात्मानमेकाकिनमसहायमनाथं निराश्रयं च भावयन्ती तामेतां दुष्परिणतिमङ्गीचक्रे।'

'नहि, नहि, अत्र केनापि महता कारणान्तरेण भाव्यम्, निगूढेन दुर्हेतुना वाऽसह्येन भवितव्यम्। नो चेन्नित्यमेव हि देवदर्शनं, व्रतोपवासाचरणं, कथावार्ताश्रवणं, भगवद्भजनकीर्तनाराधनं च समाचरन्ती, गोब्राह्मणानाथदीनहीनजनानां सेवासपर्यापरायणा, सदैव ज्ञानोपदेशचर्चासत्सङ्गं कुर्वाणा, सर्वतः शुद्ध सात्त्विकं च जीवनं स्वाश्रयादेव सपरिश्रमं पुष्णन्ती महिलाजनशिरोमणिः सैषा लक्ष्मीः किमर्थमेवं गर्हितमात्महत्यास्वरूपं महत्पापं कर्तुं व्यवस्येत्?'

'हा, हन्त! नूनं मुग्धा यूयं नवेत्थ तत्त्वतोऽधुनातनानां कलिकालजन्मनां दुष्टाशयानां कपटप्रपञ्चपटूनां वञ्चनापकौशलनिपुणानां पशुप्रायाणां नराधमानां दोषदुष्टानां कदाचारिणां दुश्चेष्टासहस्रविलसितानि। नूनं केनापि पामरेणास्याः प्रतीपमाचरितं स्यादथवा वज्रप्रहारनिष्ठुरो मनोभङ्गो विहितो भवेत् किं वा जघन्येन केनचिन्नरपशुना दुर्मुखेन वावदूकेनाक्षेपवचनं सकटाक्षमरुन्तुदं हालाहलविषमिव प्रोक्तं स्यादथवास्याः सर्वस्वमबलाया एकाकिन्या अपहृतं भवेदन्यथा को नु बतेत्थं प्रियान् प्राणान् सहसा व्यापादयेन्नाम?'

'कष्टं भोः! विचित्रोऽयं स्वार्थान्धः संसारः! ज्ञातयः कौटुम्बकाः सम्बन्धिनः प्रतिवेशिनः, सुपरिचिताः, सुहृदो, मित्राणि, सर्वसाधारणनागरिकाश्चास्या लक्ष्मीदेव्याः सद्वृत्तं सम्यक् परिचिन्वन्ति। तथापि न केनाप्यस्या गतिविधिषु, सुखदुःखेषु समवेदनया सहानुभूत्या च सहयोगित्वेनावधानंप्रादीयत। तस्मादेवैतस्याः सैषा दुष्परिणतिर्जीवनस्य निष्पन्ना! शिव! शिव!! मनुष्यतैव ननु कुतो व्यलीयत!'

'अयि बन्धवः! अलमत्र वृथानुमानपरम्पराभिः किमर्थं यूयं सर्वेऽत्र तर्ककर्कशं निदानं चिन्तयथ? सत्यं तु सहि सर्वशक्तिमान् सर्वद्रष्टा भगवानेव जानीते यथार्थतो नान्यः। किं फलं, को वालाभोऽत्र विषये फल्गूत्प्रेक्षितैः? दारुणो हि कर्मणां विपाको जगति जीवानाम्। पुण्यात्मनामपि च क्वचिद् दृश्यते शोच्या ननु परिणतिः। सम्भवति, वार्द्धक्यमालोक्यात्मनो जीवननिर्वाहेऽत्र

जगति सैषा कुलीना वधूर्वणिजो भक्तवत्सलस्याभिजनवतां महाजनानां कुलं-कन्या लक्ष्मीर्निराश्रया निः सहाया बतैकाकिनी पूर्वानुभूतानि निष्ठुराणि दारुणानि च दुःखमयानि दशान्तराणि संस्मृत्यात्मग्लानिमनन्तवेदनापूर्णामसहमानैव कदाचिदेवं स्वयमेवात्मनो जीवनान्तं कृतवतीस्यात् !'

एवंविधा लोकवार्ता लक्ष्या मृत्युविषये क्षणादेव समन्तात् प्रचेरुः। पश्यतामेव सर्वेषां तत्र वाप्याः समीपे महानेव जनसम्मर्द्दो बोभूयमानोऽभूत्। आरक्षिविभागस्य कर्मचारिभिस्तत्र द्राक्तरान् कांश्चित् प्रतिष्ठितान्नागरिक-सभ्यांश्चाकार्य लक्ष्म्या शवपरीक्षणमारब्धम्। सा वाप्या जले निमज्जनान्निर्जीवा निष्प्राणा चाभूदिति प्रथमं तथ्यं सर्वैर्निर्धारितम्। कृते हि शवस्य परीक्षणे सर्वैर्दृष्टः शरीरे कौपीनादतिरिक्त नान्यत् किमपि वस्त्रं परिधत्तमासीत्। तस्या गले तुलसीमाला, भगवतो लक्ष्मीनारायणस्यैकं लघुतमं चित्रं च दोरकैर्व्या-सज्जितमभूत्। मुखान्तश्चैका कनीयसी सुवर्णकणिका, विद्रुमकण एको, यवतिलकणाश्च धृता आसन्। भालपट्टे च तस्या गोपीचन्दनस्योर्ध्वपुण्ड्रचिह्नं चर्चितमभूत्। गले भुजयोः सन्ध्योः पाण्योश्च गङ्गा मृत्तिकया कर्बुरवर्णो लेपः कृतोऽभवत्। शरीरे यत्र तत्र भस्मोद्धूलनरेखाः सुस्पष्टं विहिता आसन्। तदेतत्सर्वं परिपश्यद्भिरारक्षिविभागीयैः कर्मचारिभिः 'लक्ष्या पूर्वं सङ्कल्प्य स्वकीयेनैव दृढनिश्चियेन योजनापूर्वकं स्वात्मघातो विहित इव प्रतिभाति।' इति निरणायि। तथापि केनचित् कर्मचारिणा 'अस्यामृतायाः शरीरं विदार्य शवपरीक्षणं क्रियतां द्राक्तरैः !' इति तद्विभागीय विधाननियमपालनं प्रस्तावितं परन्तु तत्रोपस्थितेन वरिष्ठेनाधिकारिणा 'नाहमस्याः साध्व्या लक्ष्मीदेव्याः शवविदारणं समर्थये, यतोऽहं व्यक्तिगतरूपेणेमां परिचिनोमि। तस्याश्चरितं सदाचरणं च विशुद्धं तत्त्वतो वेद्मि।' इत्युक्त्वावश्यकीं कार्यवाहिनीं कर्गल-लिखितां विधाय लक्ष्म्या मृतशरीरं भस्मसात् कर्तुं तत्र विद्यमानेभ्यो ज्ञातिसंबन्धि-जनेभ्यः समर्पितम्।

तदनु राजकीयाधिकारिणो विषयेऽस्मिन् सम्यगनुसन्धानार्थं साकं दशभिर्नागरिकैः प्रतिष्ठितैर्जनैर्लक्ष्म्या गृहं जग्मुः। तत्र गत्वातैर्निरीक्षितमुगृहद्वार-मनावृतकपाटमासीत्। प्राङ्गणे तुलसीदलवेदिकायां घृतपूर्णो दीपकः प्रज्वलन्नभूत्। गृहस्य सर्वेऽपि च प्रकोष्ठा उद्घाटितकपाटा आसन् गार्हस्थ्योप-योगिनो विविधाः पदार्था उपकरणानि च व्यवस्थितरीत्या यथास्थानं संरक्षिता-न्यभूवन्। अन्तः प्रविश्य यावत् सर्वे पश्यन्ति तावल्लक्ष्म्या गृहमन्दिरे देवालयसिंहासने घृतदीपकः प्रज्वलन्नवलोकितः। एकतोऽदर्घदग्धा धूपवर्तिका धूमधोरणीरुद्गिरन्त्योऽभूवन्। सिंहासने विराजमानानां देवमूर्तीनां विग्रहाः

सद्यः कृतेताभिषेकेन सौम्यरूपा अदृश्यन्त। तासां देवमूर्तीनां पुरतो धूपदीपपुष्प-नैवेद्यतुलसीदलादिभिरुपचारैस्तत्रत्यं वातावरणं सुगन्धितमासीत्। तद्देवमन्दिरस्याधस्तात् गोमयलिप्तायां भूमौ मनुष्यस्यैकस्य कृते शयनोचितमासनचिह्नमिव कल्पितमभूत्। तस्यां गोमयलिप्तायां भुवि यवतिलाक्षताः समन्ताद्विकीर्णा अभूवन्। एकत्र चन्दनपात्रमन्यतश्च कुङ्कुमपात्रं च न्यस्तमासीत्। पार्श्वत एवावशिष्टानां यवतिलचन्दनाक्षतानां संग्रहग्रन्थय इतस्ततः प्रसृता अभूवन्। अन्ततः पूजोपयुक्तानि सद्यो विशुद्धानि पञ्चपात्राणि पर्यस्तान्यासन्। दृष्ट्वैतत्सर्वं राजकीयैः कर्मचारिभिर्निर्णीतं यल्लक्ष्म्या बुद्धिपूर्वकं प्राङ्मनसि सङ्कल्प्य योजनां निश्चित्यासावात्मघातो विहित इति। अथ लक्ष्म्या मृतशरीरमानीय बन्धुबान्धवैर्ज्ञातिजनैश्च सर्वैः श्मशानभूमिं नीत्वाग्निसंस्कारः सविधि सम्पादितः।

इत्थं सर्वमनुसन्धाय ज्ञातव्यं विज्ञाय च परावर्तमानैः कर्मचारिभिर कस्माद्गृहाङ्गणे पतितमेकं पत्रमासादितम्। तत्र कर्गले लिखितमासीत् :—

"अहं लक्ष्मीर्भक्तवत्सलस्य वणिजो धर्मपत्नी दशवर्षेभ्यो रक्तप्रदररोगेण सततं पीड्यमानाऽभूवम्। रोगस्यास्यासाध्यतां, देहशक्तेर्महान्तं ह्रासं, परिश्रमकरणे स्वात्मनोऽक्षमत्वं, संम्बन्धिनां सामाजिकानां च मां प्रत्युपेक्षाभावं, परिचारकस्य दुर्लभत्वं च विभाव्य स्वेच्छयात्मनो जीवनलीलां जलसमाधिमास्थायोपसंहरे। नात्र मम मरणे कस्याप्यन्यस्य जनस्याणीयानपि पापदोषलवलेशः। मया यावज्जीवं दारुणान्यसह्यानि च दुःखानि सोढ्वा स्वपरिश्रमेण स्वद्योगेन स्वावलम्बनेनैव हि जीवननिर्वाहो विहितः। मज्जीवनं पुरुषार्थनिर्भरं निर्दोषं च व्यतीयायेति मे महानेव सन्तोषः। परावलम्बनं, परमुखप्रेक्षणं, पराधीनता च नांशतोऽपि मह्यं रोचते, तत एवाहं स्वेच्छया सुखेनैवैतद्भौतिकं शरीरं त्यजामि। आत्मा त्वजरोऽमर इति मे सुनिश्चितो दृढीयान् हि विश्वासः। मत्कृते मा भूत् कोऽपि दुःखदग्धः शोकाकुलो वेति मामकीनान्तिमाभ्यर्थना। मम गृहमधि वर्तमानायां दारुमञ्जूषायां स्वोद्योगे-नोपार्जितं कणशः क्षणशश्च संगृहीतं सहस्रमुद्रामितं धनमवतिष्ठते, तत् सर्वमनाथेभ्यो दीनेभ्यो विधवाभ्योऽसहायेभ्यः पात्रत्वानुरोधात् प्रदीयतामिति मे हार्दिकी खल्वाकाङ्क्षा। नमोऽस्तु सर्वेभ्यः।"

तदिदं पत्रं गृहीत्वा राजकर्मचारिणस्ततो गृहात् प्रतिनिवृत्ताः। लक्ष्मीदेव्याः सत्यनिष्ठामास्तिक्यं, श्रमशीलतां, धर्मधियं धैर्यं, स्वावलम्बनं, सहनशीलत्वं च सञ्चिन्त्य सर्वे लोकास्तस्याः सदाचारगुणान् जगुः—

"किं चित्रं यदि राजनीतिकुशलो राजा भवेद् धार्मिकः,
किं चित्रं यदि वेदशास्त्रनिपुणो विप्रो भवेत्पण्डितः।
किं चित्रं यदि रूपयौवनवती साध्वी भवेत् कामिनी,
तच्चित्रं यदि निर्धनोऽपि पुरुषः पापं न कुर्यात् क्वचित् ॥"

—:०:—

# एका वाणी सत्या

एकस्मिन् समये क्वचिद् द्वौ सुहृदौ परस्परं वार्तालापमकुरुताम् । प्रसङ्गात्तयोर्मध्ये किलैकेनोक्तम्—वृद्धानां परमज्ञानवतां विशालानुभवशालिनां पण्डितानां कथनानुसारमेतच्छ्रूयते 'यदत्र लोके मनुष्यो दिवारात्रौ च यद्यद् भाषेत तत्र प्रत्येकस्य जनस्य मुखान्निर्गतेषु वचनेष्वेकं वाक्यं सत्यं भवति । मनुष्यस्य ज्ञानं सान्तमल्पं च भवति, तस्मात् स न जानाति निश्चयाद्यत्तस्य मुखान्निर्गतासु वाणीषु कदा किं नु खलु वचनं सत्यं भवति तस्य च वचनस्य क्व नु कः प्रभावो भवतीति । परन्त्वेतावत्तु ध्रुवं सत्यं यदेकस्मात् सूर्योदयात् पुनर्द्वितीयं सूर्योदयं यावदष्टप्रहरेषु मनुष्यस्य मुखादेकं वाक्यं त्ववश्यमेव सत्यं निर्गच्छति, तस्य प्रभावः फलं चापि नूनं भवत्येव ।'

एवं स्वमित्रस्य कथनं श्रुत्वान्येन मित्रेण चिन्तितं यदस्य विषयस्य सत्यासत्यनिर्णयस्त्ववश्यमेव करणीयः । बहुविचारं कृत्वा स क्रियात्मकेन प्रयोगेण तथ्यातथ्यं परीक्षितुमेकां योजनां रचयामास । तथा हि—एकशेरभारं चतुष्कोणं ताम्रस्य धातोःपिण्डं नीत्वा स उषसि शीघ्रमेव गहनं वनं जगाम । तत्र गत्वा स एकान्ते स्थित्वा तं ताम्रपिण्डं प्रति—'सुवर्णं भव !' इति पुनः पुनरेकमेव वाक्यं वदंस्तस्थौ । स स्वमनसीत्थं विचारयामास—'यदि रात्रिन्दिवं समुच्चार्यमाणेष्वेकं वाक्यं सत्यं भवति तदासौ ताम्रपिण्डो मदीयेनैकस्यैव वाक्यस्य पुनः पुनरुच्चारणेनावश्यमेवात्र रूपान्तरितो बहुमूल्यं सुवर्णं भवेदेवेति ।'

अथ मुहुर्मुहुरेकमेव वाक्यं 'सुवर्णं भव !' इत्युच्चारयन् स दिनस्य चतुरः प्रहरान् समत्यवाहयत्, परं स ताम्रपिण्डस्तु सूर्यास्तं यावत सुवर्णत्वे न परिणतः । प्रदोषे जाते, शोभितायां रागारुणायां सन्ध्यायां, विराजिते निर्मले नभसि चन्द्रदेवे, देदीप्यमानेषु तरलतारकपुञ्जेषु, विभातायां च रजन्यां च स पुनर्धैर्यमवलम्ब्य तं ताम्रपिण्डं प्रति—'सुवर्णमयो भव !' इति साध्यवसायं भूयो भूयो वदन् तस्थौ ।

इत्थं कुर्वतस्तस्य रात्र्यास्त्रयः प्रहरा व्यतीताः परं स ताम्रपिण्डस्तु यथापूर्वं ताम्रमय एवातिष्ठत् । तं च ताम्रपिण्डं सुवर्णत्वेऽपरिवर्तितं दृष्ट्वा सः

किञ्चिदिव निराशोऽभवत् । अशान्ति, निराशां, श्रमं, खेदं चानुभवन्नपि स तं ताम्रपिण्डं प्रति—'सुवर्णत्वे परिवर्तस्व !' इत्येकमेवेदं वाक्यं वारं वारं समुच्चारणपरस्तस्थौ ।

यदा सः प्रभातां रजनीं समालोकत, पूर्वक्षितिजे ह्युषसोऽरुणं प्रकाशं चापश्यत्, पक्षिणां कलरवं च यत्र तत्राश्रृणोत्तदासौ प्रायेण पूर्णतया निराशो बभूव । यदा सः सूर्योदयस्य समयं समीपमागच्छन्तं ददर्श तदा सः स्वमनसि शेषामपि चाशाकणिकां तत्याज । रात्रौ जागरणेन खिन्नः, क्षुधातृषा क्षामः, परिश्रमेण च क्लान्तो भूत्वा सो भृशं चुक्षोभ । क्रोधस्यावेशवशात् स तं सुवर्णसिद्धेः प्रयोगमुपसंहरन्निव तत्र स्वसम्मुखं संस्थापितं तं ताम्रपिण्ड-मभिवीक्ष्य तं च सम्बोध्य प्रोच्चैरुवाच—'अरे जड ! ताम्रपिण्ड !! यदि त्वं सुवर्णरूपं न धत्से तदा रजतमयो भव !!!' इति । तस्य तद्वाक्यस्योच्चारणसम-कालमेव स ताम्रपिण्डो भास्वरस्य विशुद्धस्यातिमहार्घस्य देदीप्यमानस्य च रजतस्य रूपे क्षणादेव परिवर्तितः ।

अधुना तं ताम्रपिण्डं रजतरूपे परिणतं दृष्ट्वा स मनसीत्थं पश्चात्तापं कर्तुमारभत—

"अहो, मे धैर्यच्युतिः । अहो, मे कातरत्वम् !! अहो, ममात्मविश्वास-दौर्बल्यम् !!! हा, हन्त ! हन्त !! दुर्भाग्येन वञ्चितोऽहम् ! !! केवलमेकमेव वाक्यमवशिष्यते स्म, परं मया भाग्यहीनेन धैर्यं परित्यक्तम् ! नो चेदसौ ताम्रपिण्डः शुद्धं कलधौतकान्तं महामूल्यं सुवर्णंभविष्यन्नाम नूनम् !! धैर्या-भावे मया सिद्धोऽप्ययं प्रयोगो भ्रष्टतां नीतः । अहह !! अधुना किं करोमि ? क्व च गच्छामि ? कं पृच्छाम्यहं मन्दभाग्यः ???"

इत्येवं विधाननेकान् विलापकलापान् कुर्वाणः—'सर्वस्यापि विनाशकाल-समये ह्यर्द्धं त्यजेत्पण्डितः !' इतिवत् कथमपि स्वमनसः समाधानं कृत्वा तं सद्योजातं रजतपिण्डं नीत्वा स्वगृहं ययौ ।

वार्तयानया काश्चिद्बहुमूल्याः शिक्षा लभामहे । प्रथमा शिक्षा त्वियं यन्मनुष्यो रात्रिन्दिवं यच्च यावच्च किमपि भाषते तत्रैका वाणी सत्या भवति । द्वितीया शिक्षा सैषा यद्धि धैर्याभावे संसिद्धोऽप्यर्थो बत क्षणाद्विनश्यति । तृतीया शिक्षा सेयं यत्पुरुषः कियन्तमपि घोरं परिश्रमं पुरुषार्थं कामं करोतु परं भाग्यादधिकं किमपि नो लभते । चतुर्थी शिक्षा सैषा यद्धि मनुष्येण विचार्य वचनमुच्चार्यं, यतो न ज्ञायते कदा का वाणी शुभाऽशुभा वा स्वमुखाद्बहिर्नि-र्गच्छेत् तथा विश्वेहा अन्तरिक्षे विचरन्तः 'तथास्तु तथास्तु' इतिवदन्तस्तां वाणीं सत्यां प्रमाणयेयुरिति ।

—:०:—

# पराधीना अतिथिदेवाः !

अस्माकं भारतवर्षदेशस्य सभ्यतायां, संस्कृतौ, धर्मे चातिथेः स्थानमतीवोच्चं, सम्मानार्हं, सर्वपूज्यं च मतमार्यैः। तस्मादेव—'अतिथिदेवो भव !' 'शिवा नोऽतिथयः सन्तु !' 'सर्वं देवमयोऽतिथिः !' 'अरावप्युचितं कार्यमातिथ्यं गृहमागते !' इत्यादीनि वाक्यानि वेदस्मृतिपुराणसाहित्ये समुपलभ्यन्ते। अतिथितोषाय सर्वस्वं समर्पितवतां गृहस्थाश्रमस्थानां महापुरुषाणां केषांचन चरित्रचित्रणान्यपिच वाङ्मये दृश्यन्ते। रन्तिदेवस्य, दधीचिमहर्षेः, कर्णस्य, शिविनृपतेस्तथान्येषां चोदाहरणान्यत्र स्वमाहात्म्यात् प्रोज्ज्वलं जाग्रत्येव।

सैषातिथिपूजाद्यत्वेऽपि च न्यूनाधिकं व्यवहारक्षेत्रे परिदृश्यमाणा विद्यत एव, परमस्मिन् परिवर्तनशीले जगति महार्घतायामुज्जृम्भमाणायां लोकानां जीवसङ्घर्षे च प्रचण्डे जायमाने तामेतामतिथिपूजामिदानीं यथापूर्वं सर्वात्मना निर्वोढुं न पारयन्ति गृहस्था इत्यपि नाविदितं सुविशाले सामाजिके जीवने गृहाश्रमे च महता काठिन्येन निवसतां भारतीयानामस्माकम्। भौतिकविज्ञानोर्जस्वलेऽर्थतन्त्रजटिले, राजनीतिगतवर्गसङ्घर्षसङ्कीर्णेऽस्मिन् वर्तमाने युगे नहि सर्वदैवातिथिलाभो धर्माय, श्रेयसे, पुण्याय, प्रीतये वा पर्यवस्यते गृहधर्मिणामिति च प्रत्यक्षमेवानुभूयते प्राप्तकालमस्माभिः सर्वैः। यातायातसाधनानां सौलभ्यात् पर्यटनावश्यकतायामनिवार्यतां गतायां, कार्यकलापानां वृद्धौ जातायां, प्रयोजनानां विपुलतायां वर्धमानायां नन्वतिथयो गृहस्थैर्न तथा पूजयितुं शक्यन्ते यथारण्यकेऽतीते समये, यथा चैकतन्त्रप्रधाने साम्राज्यवादिनि वृत्तान्तभुक्ते काले समर्घे। ततो हि केचन लेखका 'महमान से भगवान् बचाए !' इत्याद्याँल्लेखान् हासपरिहासव्यङ्ग्यवक्रोक्तिभङ्ग्या विलिख्य धृष्टातिथीनामतिथिपूजासत्कारे लोकभावनाशैथिल्यं प्रातिनिध्येन प्रस्तुवन्ति।

फलतोऽद्यत्वे महता प्रयोजनेन विना केवलमानन्दाय मनोविनोदाय च पर्यटनं सज्जनानामप्यतिथीनां पराधीनताजनकं भवति। गृहस्थानां पक्षे चाधिकाधिकं प्रत्यहं किलातिथिलाभो योगक्षेमं बाधत इत्यपि च नग्नं सत्यम्! अधुना लोकजीवनं सङ्घर्षबहुलं सङ्कीर्णं च। तत्रापि प्रजानां न्यायालयेष्वभियोग-

प्रसङ्गा, राजकीयशासनकार्यालयेषु कर्मसम्बन्धाः, सभासम्मेलनानामधिवेशन-कार्यक्रमाः साहित्यसङ्गीतगोष्ठीनां समायोजनानि, भोज्यपदार्थानां क्रयविक्रय-प्रयोजनानि, विद्याध्ययनाय विश्वविद्यालयनिवासा वाणिज्यव्यापारसम्बन्धिनः कार्यकलापास्तीर्थयात्राप्रसङ्गाः, प्रकृतिदर्शनाय भ्रमणानि, प्रदर्शिन्यो, जीविका-वृत्तिहेतोर्द्रव्यार्जनकारणानीति सर्वाणीमानि प्रसभं प्रेरयन्ति जनानतिथित्वमङ्गी-कर्तुम् ।

सत्यप्येवं यदि कोऽपि चातिथिमहाशयो विषयेऽत्र संयतो न भवति चेत्ततोऽतिथित्वे चातिथेयत्वे च महद्वैरस्यमुपजायते प्राप्तकालम् । अनामन्त्रि-तमतिथित्वं यथा स्वयमतिथेः पराधीनतां, दिनचर्याभङ्गमनावश्यकं कालक्षेप-मात्मग्लानिं, सङ्कोचं च जनयति, तथैवातिथेयस्यापि मनसि चाश्रद्धां, कुत्सां, व्ययबाहुल्यमन्तःक्षोभं, शीलभङ्गं च विधत्ते । मनोभङ्गात्तदेतदतिथित्वमाति-थेयत्वं च द्वयोरपि च पक्षयोर्विडम्बनामाविष्करोति । आतिथेयस्तु सभ्यतानु-रोधात् कथमपि श्रद्धयाऽश्रद्धया वा शिष्टाचारवशो देशकालपात्रानुरूपं यथामिलितोपचारैर्येन केन वा प्रकारेणातिथिसत्कारमाचरेदेव परमित्थंभूतमा-तिथ्यं द्वयोरपि पक्षयोः स्नेहं, प्रीतिं, सौहृदं, मैत्रीं चाप्यपक्षिणुयात् । यदि च कश्चित् स्वार्थान्धः कृपणो लोभाविष्टो वा धृष्टोऽतिथिः "राजा वेश्या यमो वह्निः प्राघूर्णो बालयाचकौ । परदुःखं न जानाति चाष्टमो ग्रामकण्टकः ॥ १ ॥ इति वद्वा "स्वकार्यं साधयेद्धीमान् कार्यभ्रंशो हि मूर्खता ॥" इत्येतां नीतिमाश्रित्य प्रसभमतिथिदेवत्वेनात्रिर्भवेदकस्मात्तदा स नूनं परतन्त्रो वैरस्यमनुभवेदेव । इत्थंभूतोऽतिथिदेवो बहुद्रव्यं क्षपयित्वा, यात्राकष्टानि सोढ्वा चातिदूरात् कस्यचिद्गृहस्थस्य सुविधामसुविधां चागणयंस्तद्गृहं वाश्रमं वा संस्थां वा कार्या-लयं वा व्रजेत्, तदा तस्येदमातिथ्यग्रहणमतिकष्टसाध्यं श्रमैकलभ्यं पराधीनता-जनकं नीरसं च पर्यवस्यति विडम्बनामात्रैकफलम् ।

अतो ये देशकालविदो विचक्षणा यात्राविज्ञानं सम्यक् परिचिन्वानाः स्वतन्त्रधियो भवन्ति स्वावलम्बिनो वीरा, न ते कार्यार्थिनोऽपि कस्यचिदातिथ्य-ग्रहणाय सहसा सतृषं प्रवर्तन्ते । न चावितर्कितसंभवं यदृच्छयातिथिदेवत्वमात्मनोऽकस्मादाविष्कुर्वन्ति, न चैवंविधे पुरुषार्थे सतृष्णं सोद्योगं चोत्सहन्ते ।

विषयेऽत्र मुक्तभोगानामस्माकं स्वयमनुभूतमेकं प्रसङ्गमवलम्ब्य पाठकानां मनोविनोदायाधस्तान्निवेदयामः—

अथैकदा वयं पञ्चप्रायाः सुहृदो ग्रीष्मावकाशं सफलं कर्तुं, स्वच्छन्दं, निर्मुक्तबन्धनं च विहर्तुं, पर्यटनसुखमनुभवितुं च स्वनगराद्ग्रामान्तरं गता यत्र ज्ञातयः सम्बन्धिनः परिचिताः सुहृदश्च न्यवसन् । मध्याह्नं यावत् पञ्चक्रोशीं

यात्रां कृत्वा यदा ग्रामोपसमीपं प्राप्तास्तदा श्रमात् परिश्रान्ताः खेदखिन्नाः क्लान्ताः क्षुत्तृड्भ्यां परीताश्चभूम । कथमपि वयं ग्रामोपकण्ठं सघनाम्रकुञ्जच्छायासु वर्तमानं महान्तमेकं कूपमगच्छाम । तत्र गत्वा यावत् पाषाणपट्टिकासु विश्रमितुं न्यषीदाम तावत् काश्चन ग्रामवध्वो जलानयनार्थमाजग्मुः । अस्मान् दृष्ट्वा वस्त्राञ्चलैरवगुण्ठनक्रमेण स्वमुखान्यावृत्य लज्जावनतमुख्यस्तस्मात् कूपाज्जल-ग्रहणाय प्रावर्तन्त । स्त्रीस्वभावसुलभेन तिर्यगवलोकनेनास्मान् परिचीय तास्वेकया—'अये, मातुलोऽयं मे समायात् ! अपि त्वं कुशली मातुल ?' अन्यया—'अपि मे पितरौ भ्रातरश्च स्वस्थाः प्रसन्नाः ?' कयाचित्—'अपि दृष्टो भवद्भिर्मामकीनो देवरः स्वस्थः प्रसन्नश्च ?' कयाचन—'अपि जानीथ यूयं यन्मम पिता तत्र नगरे चिकित्सालयं गतो ह्यः शल्यचिकित्सार्थमिति ?' परया—'अपि मे भागिनेयः परीक्षां वार्षिकीमुत्तीर्णो न वेति ?' एवंविधाः कियन्तोऽपि प्रश्नाः पृष्टाः । अन्याश्च विविधान् सम्बद्धान् सम्बद्धांश्च प्रश्नान् पृच्छन्त्यः स्वकीयान् जलकलशान् कूपोदकेनापूर्य कलशांश्च तान् शिरसि निधायास्मान् सर्वान् स्वगृह एवा तिथ्याङ्गीकरणायामन्त्र्य यथायातास्तथा प्रस्थिताः । मार्गमनुलग्ना अपि तासु काश्चनापरिचितास्तरुण्यो मुहुर्मुहुरस्मान् परिवृत्य सभ्रूभङ्गैश्चपलापाङ्गैर्लोचनैरवलोकमाना लज्जमानाश्चापि निर्निमित्तं मन्दहासं कुर्वाणाः सविभ्रममस्मद्गतं किमपि मिथो भाषमाणाश्च क्षणादेवास्मद्दृष्टिपथा-दगोचरा अभूवन् । अस्माभिः परस्परं मुखान्यवलोकमानैर्मिथः प्रोक्तम्-'अये, ता इमा देव्यस्तु । गताः परं तृषाकुलैरस्माभिस्ताभ्यो जलमपि पातुं न याचितम् ! अहोमूढत्वमस्माकम् !! अस्तु तदधुनावयमत्र जलं पिवाम हस्त-पादं प्रक्षाल्य मुखमार्जनं कृत्वा च ग्रामं प्रविशाम ।' एवमुक्त्वा वयमेकैकशो जलपानाय कूपमवातराम । यावदस्मास्वेकः सुहृज्जलेन गण्डूषान् कर्तुं चेष्टते, तावद्दूरतः कस्यचिद्ग्रामीणस्य सगलास्फालं प्रोच्चैः क्रियमाणः स्वरध्वनिरश्रूयत—'अरे ! किमिति कूपजलमाविलं क्रियते ? कूपाद्बहिर्निष्क्रम्य हस्तपादं प्रक्षालयत ! मा दूषयत सर्वं कूपजलम् ! न ज्ञायते, त एते के नु बत मूढा अत्र समागता ये समग्रमपि कूपोदकं प्रदूषयन्तोऽपि नापलज्जन्ते !' श्रुत्वैतद्वयं किञ्चित् सशङ्का अभवाम । जलपानं विहाय कूपात् बहिरागत्य सर्वासु दिक्षु दृक्पातमकरवाम परं कुतो नु खल्वेषो ध्वनिरागच्छति, कश्चास्मान्निषिध्यतीति तत्त्वतो न किमपि ज्ञातुमपारयाम । तावदस्मास्वेकेन सुहृदाभिहितम्—'बन्धवः ! इदानीमत्रावस्थानं न क्षेमावहम् ! अतो व्रजाम ! ग्रामं गत्वैव हस्तपादप्रक्षालनादिकं सर्वं शान्त्या सविश्रम्भं च विधास्यामः, किमर्थं कोऽप्यस्मान्निषिध्येदकारणम् !' इत्युक्त्वा सः—

"गच्छ गौतम शीघ्रं त्वं ग्रामेषु नगरेषु च ।

आसनं भोजनं शय्यां कल्पयस्वाग्रतो हि नः ॥१॥" इति यात्रोपनिषन्मन्त्रान् ब्रुवाणो गमनायोद्यतः। सुहृद्वचनानुरोधाद्वयमपि ग्रामप्रवेशायोत्सुकास्तमनु मार्गमवालम्बामहि।

तस्मादाम्रकुञ्जान्निर्गत्य वयं ग्रामं गन्तुं सत्वरा अभूम। यावत् स्तोकं मार्गं गच्छामस्तावदेवास्माकं मार्गभ्रान्तिरजायत। वस्तुतस्तत्र ग्रामं परितः काचिन्नदी प्रावहत्। नद्यास्तटमन्वनेके मार्गा आसन्। 'कः पन्थाः समाश्रयणीयो येन ग्रामं प्रविश्य स्वज्ञातीयानां वसतिं वयं प्राप्नुयाम, मार्गविभ्रान्तिजन्योपहासश्च नो माभूदिति' विकल्पो महानस्माकं मनस्युदभूत्। को जानीते यथार्थतः पन्थानमिति वितर्कश्चाजायत।

ग्रीष्मकालीनो मध्याह्नसमयः। सूर्यश्च ललाटन्तपः प्रखरतरकिरणैरस्मानत्यन्तं परिपीडयति स्म। तदेतद्ग्रीष्मग्राष्मोत्तापकष्टमसहमानोऽस्माकमेकः सुहृदवदत्—'अये! किं न पश्यथ? स ग्रामस्तु नद्या अस्याः परे पारमवस्थितो दृश्यते। तदागच्छत, आगच्छत; मामनु समागच्छत! मात्र दिङ्मूढा इव मध्येमार्गं तिष्ठत, नोचेद् ग्रामीणा जना उपहसन्ति नः!' एवमुक्त्वा स मार्गमेकमनु प्रचलितः। वयमपि तमन्वव्रजाम। ग्रीष्मकालाद्धेतोः सैषा नदी क्वचिच्छुष्कजला क्वचिदाविलजलपूरितह्रदा, क्वचित् कर्दमपूरिता चाभूत्। यदा वयं गव्यूतिप्रायं कियन्तमध्वानमतिक्रम्य नदीमवतरामस्तावदेवैकं किलानुल्लङ्घनीयं दुर्गन्धपूरितेनाविलेन जलेन पूरितं महापङ्कावृत ह्रदमासादयाम। ह्रदतीरमाश्रितेष्वस्मासु तारभूमितो झम्पामारभ्योत्प्लुत्योत्प्लुत्य जलमध्ये निपततो नक्रांश्चावालोकामहि। तत्सर्वं विलोक्य ततोऽग्रे पन्थानमवरुद्धं दृष्ट्वा पुनर्महन्नैराश्यं गताः। यावदितस्ततो वयं सर्वतो दिक् दृष्टिं प्रसार्य पश्याम तावत्तत्र नैकमपि मानवजन्मानं जीवं वा वृक्षं वा क्षेत्रं वा क्षितिजपर्यन्तमैक्षामहि। खदिराङ्गारेभ्योऽप्यधिकं जाज्वल्यमानासु प्रखरतरं तातप्यमानासु सिकतासु चलन्तो वयं ततः प्रतिनिवर्तमानाः प्रस्वेदक्लिन्नसर्वाङ्गाः शुष्यदोष्ठतालवोऽन्यमध्वानमन्विष्यन्तोऽपि श्रमखिन्ना अपि नेदमित्थं ग्रामगामिनं पन्थानं विनिश्चेतुं प्राभवाम। इत्थं बंभ्रम्यमाणा वयं क्वचिदनाकृष्टानि क्षेत्राणि, क्वचित्कर्दमाक्तानि स्थलानि, क्वचित् कण्ठदघ्नजलान् पल्वलप्रायान् पङ्काप्लुतान् ह्रदानासाद्यासाद्य पुनः पुनः प्रतिनिवृत्तमाणाः श्रान्ताः क्लान्ताइचेखिद्यमानाश्चाभूम। परं ग्रामगामिनं यथार्थं पन्थानमासादयितुं कथमपि नैव प्राभवाम। ततोऽस्मास्वेकोऽब्रवीत्—'अये! दृश्यताम्!! दृश्यताम्!!! तत्रैको गोपालको बहून् पशूंश्चारयन् विद्यते। तं गत्वा मार्गं पृच्छाम।' अस्माभिः सर्वैः 'तथा क्रियताम्!' इति तत्प्रस्तावोऽनुमोदितः। ततो वयं दूरतस्तं गोपालकं

पशुयूथं चानुसन्दधाना गतिशीला अभवाम। तावदेवैऽस्मत्सहयात्री—'हा, हन्त! हतोऽस्मि!! मम वामचरणेऽयं दुष्टः खर्जूरीकण्टको बतोपानहं विभेद्य मामतक्षत्!!!' इत्युच्चैः समाक्रोशन् भूमावुपविष्टः। तद्दृष्ट्वा वयं सर्वे तत्पादलग्नं कण्टकमुत्पाटयितुमयतामहि। महद्भिः क्लेशैरनेकैः प्रयत्नैश्च कथमपि तं कण्टकं निस्सार्य गोपालकस्य दिशि गन्तुं प्रवृत्ताः। कियन्तमप्यध्वानमतिलङ्घ्य यावद्गोपालान्तिकं प्राप्तुं चेष्टामहे तावत् स सर्वं पशुयूथं नीत्वा पर्वतस्यैकस्या अधीतिकाया अपरपार्श्वे निलीनोऽस्माकं दृष्टिपथादन्तर्दधे भूयोऽपि नैराश्यं गता वयम्—'हा, हन्त! दुर्दैवम्!!' इति स्वदुर्भाग्यमाक्रोशन्तः किंकर्तव्यविमूढा दिङ्मूढाश्चाभवाम। अस्मास्वेकः सम्मुखे वर्तमानं तं पर्वतमारुह्य प्रोच्चैः स्वरं—'अयि, भोः! गोपालक!! बन्धो!!! विरम, सखे क्षणम्! इहागच्छ! शृणुष्व मनाग् वचोऽस्माकम्!' इति भूयो भूयश्चक्रोश। अथ तेन गोपालकेन दूरत एवाभ्यधीयत—'अरे, यूयं ननु क्व नु कुत्र कुतो वागन्तुं वाञ्छथ?' इति। ततो ग्रामस्यास्मद्गन्तव्यस्य नामोच्चारे कृते सति स पुनरब्रूत—'नायं पन्थास्तस्य ग्रामस्य यं भवन्तो गन्तुमभिलषन्ति। सवै एष मार्गस्तु निर्मानुषमरण्यं गच्छति। एतच्च ग्रामान्तरं वर्तते। त इमे पशवोऽहं चान्यग्रामनिवासिनः। अतो युष्माभिर्यथायातं तथा पुनः पश्चाद्गन्तव्यम्। कमप्यन्यं जनं पृच्छत स्वमार्गम्। नाहमिदानीं भवद्भ्यो मार्गप्रदर्शनाय सावकाशोऽस्मि।' इत्युक्त्वा स तु स्वामीष्टमध्वानमनुलग्नः। पुनर्नैराश्यान्धगर्ते पतिता वयं ततः प्रतिनिवर्त्य परावर्तितुमारभामहि। चलतामस्माकं मध्ये कश्चिदब्रूत—'बन्धवः! तमेवाम्रकुञ्जाधः स्थितं कूपं वयं भूयोऽपि प्राप्नुयाम। एतन्निशम्य वयं महत्कष्टमनुभवन्तोऽपितत्कूपाश्रयासादनेऽचेष्टामहि। अधुना मध्याह्नकालीनो भुवनभास्करो भगवान् प्रखरतरकिरणजालैर्भृशं तातप्यमानोऽभूत्। कियन्तं मार्गं गत्वाऽतिदूरे वर्तमानं तदाम्रकुञ्जमपश्याम तदेव लक्ष्यीकृत्य तत्र गमनायात्वरामहि। अथ श्रान्ताः क्लान्ता अन्तःक्षुब्धा विक्लवाश्च वयं महता काठिन्येन तावन्तं मार्गमतिक्रम्य पुनराम्रवाटिकानिकुञ्जे स्थितं पूर्वपरिचितं तं कूपमगच्छाम। यथा यथा वयं कूपाभ्यर्णमायातास्तथा तथास्माकं मनसि कोऽप्यपूर्वो ह्याशासञ्चारो जायमानोऽभूत्। कुञ्जद्वारमासाद्य यावत्तत्र प्रवेष्टुं प्रयतामहे तावदेको महाकायो भयङ्कराकारो भुजङ्गमोऽवालोकि सर्वैरस्माभिः। तं साक्षान्महाकालकल्पं फणामण्डलं कृत्वा स्थितवन्तं महासर्पं दृष्ट्वा नान्तः प्रवेशाय साहसमस्माकमंशतोऽप्यवशिष्टम्। पुनरपि वयं भयग्रस्तास्त्रस्ताश्चिन्तातुराश्चाभवाम। 'अधुना किं कर्तव्यम्? इति चिन्तमानानामस्माकं नेत्रयोर्निबिडान्धकारघटाटोपो व्याततान। स भुजंगमस्तु तरुकुञ्जाधः प्रच्छायशीतले स्थले स्वकीयं भीमाकारं चकासच्चिक्कणं च भौतिकं महाविग्रहं प्रसार्य विराजमानो

बभूव । तं करालकालमिवातिभयङ्करं भीषणाकृतिं भुजङ्गमालोकमानाना-मस्माकं वाक्शक्तिरपि कुण्ठितेवासीत् । भयाद्रोमोद्गमः प्रकम्पश्चास्माकं सर्वाङ्गे समभूत् । लोहकीलैः कीलितेवास्माकं जिह्वा नैकमपि शब्दमुच्चारयितुं सशक्ता बभूव । केवलं परस्परं मुखान्यवलोकमानाः स्तब्धा जडा विक्षिप्ता इव भयाक्रान्ता आस्महि । अस्मास्वेकेनाभ्यधायि—'पाषाणप्रहारं कृत्वा तमेतमुरगं 'स्थानादस्मादपसारयाम !' मया सङ्केतेन निषिद्धस्तत्पुरुषार्थोद्योगो यस्यायमासीदभिप्रायः—मैवं क्रियताम् ! नो चेदयं दुर्धर्षो भीमभुजङ्गमो न जाने कामपरां विडम्बनामयीं दुःस्थितिं विरचयेदधुना ! श्रीमतां हस्ते लगुडो यष्टिका वापि तु नास्ते? कथमयं महाविषो भुजगो विप्रकर्तव्यः ? "अहिं नृपं च शार्दूलं चिटीं च बालकं तथा । परश्वानं च मूर्खं च सप्त सुप्तान्न बोधयेत् ॥१॥" इति महामन्त्रो मे मनसि तदानीं प्रास्फुरत् किन्तु वचस्तु नैव मे मुखात्कथमपि निर्जगाम । स खलु पाषाणोत्क्षेप्ता महावीरो भाग्याद्विरेमे व्यापारात्तस्मात् । परं 'किं क्रियतामिदानीम् ?' इति प्रश्नस्तु मनो व्यथयन्नेवासीत् । एवं व्यवसिताना-मस्माकं तदानीं कीदृश्यभून्मनोदशा तत्तु कोऽपि भुक्ताभोगोऽन्तःक्लिष्ट एव हि जनो जानीयाद्यथार्थतो नान्यस्तज्ज्ञातुं समर्थः ।

अत्रान्तरे यदृच्छया कश्चिदेकोऽश्वारूढो राजपुरुषस्तदेव स्थानमकस्मा-दाययौ । अस्मान् वीक्ष्य तेनास्माकं प्रवृत्तिं चिकीर्षितं च पृष्ट्वा कथितम्—'मामनु-सरत सभ्याः ! अहं हि युष्मभ्यं मार्गनिदर्शनं करोमि !' एवं कथयन्नेव सोऽ-श्वस्य वल्गामाकृष्य मार्गमन्वचलत् । वयमपि तमगत्यानुयातुं प्रवृत्ताः । क्व नु खलु तुरङ्गमस्य सवेगा गतिः क्व चाध्वक्लान्ता वयं सुकुमारा नागरिकाः, परं परिस्थितेर्गाम्भीर्यं यथार्थतः सम्यक् परिचिन्वाना वयं तमश्वमनुद्रुततरं गतिक्रममासादयितुं प्रवृत्ताः । कञ्चन मार्गमतीत्य सोऽस्मभ्यमग्रेगामिनं ग्रामस्य पन्थानमादिश्य यथेच्छं जगाम । वयं तु तन्निर्दिष्टमेव मार्गं 'नान्यः पन्था विद्यतेऽयनाय' इति लङ्घमाना ग्रामोपकण्ठं प्राप्ताः । तत्रापि वृक्षच्छायामधः क्रीडाकूर्दनानि कुर्वन्तः खेलन्तश्च केचन ग्राम्यबालका अवर्तन्त । ते सर्वेऽस्मान् दृष्ट्वाऽकारणमेव स्वीयस्वभावानुसारमस्मदुपहासमकुर्वन् । निर्दोषो बालस्वभावसुलभोऽपि च तेषामसावुपहासोऽस्मन्मनसि शल्यतुल्यमतुदत् । अन्तः-क्रुद्धा अपि वयं स्थितिवशगाः परमां तितिक्षामभिनाटयन्तः कथमपि ग्रामं प्रविश्य चत्वरं प्राप्नुवाम ।

अथ वयं तत्र चत्वरे गत्वा यावत् पश्यामस्तावत्तत्र निम्बवृक्षाणामध-श्छायायां मृत्कुट्टिमेषूपविष्टान् कांश्चन ब्राह्मणान् स्वजातीयानपश्याम । ते च सर्वेऽ

स्मान् दृष्ट्वा परिचीय च सहसोत्थाय—'अहो ! अपूर्वा अतिथयः सम्प्राप्ताः ! नमस्काराः ! नमस्काराः !! नमस्काराः !!! अभिनन्दनानि ! स्वागतम् ! स्वागतम् !! श्रीमद्भिरतिथिदेवैर्वयमत्राद्यातीवानुगृहीताः स्मः पुण्यदर्शनैः !!!' इत्याद्याः स्वागतोक्तीः समुदिगरन्तस्तेऽस्मान् सर्वतः परिवार्य साञ्जलिबन्धं सप्रणामं भुजबन्धनैर्वन्दनैश्चाभिनन्दन्तो मिलनोपचारान् समाचेरुः। वयं च मार्गक्लेशैः परिश्रान्ता विश्राममपेक्षमाणास्तत्रैव तैः साकमुपविष्टाः। निषण्णेष्वस्मासु सर्वेषु च तेषां मध्यात् कश्चन वृद्धो वार्तालापोपक्रमं कुर्वाणोऽब्रवीत्—'श्रीमन्तो नागरिकाः सज्जनाः क्व नु खल्वत्र ग्रामीणाञ्जनाननुगृहीतुमेतावत्कष्टं बहुपरिश्रमं चाङ्गीकृतवन्तः ?' अथान्यो बभाषे—'श्रीमन्तोऽत्रागमने सुदीर्घमध्वानं चलन्तोऽतीव कष्टमनुभूतवन्तः स्युः। नात्रास्माकं ग्राम्यप्रदेशे मृत्तरयानानि, शकटानि, वाश्वयानानि च सुलभानि। तद्भवन्तो ह्युद्यानवृक्षा इव सुकुमारा भिल्लप्रायेऽस्मिन् पार्वत्यप्रदेशे समागमनस्य श्रमं स्वीकृतवन्त इत्यहोऽस्माकं भाग्यसम्पत् !' अथान्यः कश्चित् प्रोवाच—'आम्, जाने, श्रीमतां पितामहाः श्री....शर्माणोऽत्रैकदा निखिलज्ञातिसम्मेलनावसरे समाजग्मुः। तैरत्र स्थितम्, तत्र भुक्तम्, अत्र स्नातम्, तत्र सन्ध्योपासनं विहितम्, तत्रेत्थं चेष्टितम्, एवं च तैर्भाषणप्रवचनादिकं कृतम्। ते चातीव सज्जना विद्वांसो बहुश्रुताः सदाचारा उदारचरिताश्चासन्। तेऽस्माकं खल्वभिन्नहृदयाः सुहृदो बभूवुः। तस्माद्भवन्तोऽपि तेषां पौत्रत्वेनास्माकं परमस्नेहभाजः पूज्याः सम्मान्याश्च सन्ति !' इति।

एवं सर्वेषामेवास्माकं परिचयसूत्राण्यनुसन्दधाना वार्तालापेषु व्यस्तास्तेऽर्धप्रहरप्रायं समयमक्षपयन्। पर्यन्ते तेष्वेकोऽस्मान् सर्वान् साग्रहं स्वगृहमनैषीत्। तस्य गृहे विवाहोत्सवो जायमानोऽभूत्। तत्रान्येऽपि च बहवोऽस्माकं सजातीया नानाग्रामेभ्यः समायाता आसन्। 'अद्य रात्रौ ज्ञातीनां समष्टिगतं सहभोजनं भावीति कृत्वा ते सर्वेऽपराह्णसमयेऽपि प्रातराशं कुर्वाणा अविद्यन्त। वयं तद्दृष्ट्वा चकितचकिता अभूम। अस्मास्वेकोऽवदत्—'अपराह्णकाले यदिमे प्रातराशं भुञ्जन्ति तदा सायन्तनं भोजनं किं करिष्यन्ति ? अति विचित्रमेतत् !' मया सङ्केतेन तं निवार्याभ्यधीयत—'सखे ! नात्र किमपि वक्तव्यम् ! 'यादशास्तादृशेषु' इति नीतिमेवालम्ब्य स्थीयताम् ! अत्रत्यं सामाजिकं वर्तनमन्यादृशम्। तत्त्वं न जानीषे। यथा सर्वे व्यवहरन्ति तथैवास्माभिरप्यत्राचरणीयम्। न कापि विचिकित्सा, वैमत्यं वालोचना वा विधेया !' इत्येवं वदतामस्माकं तद्गृहपतिः प्रोवाचास्मान्—'मान्याः ! प्रातराशं कर्तुं स्नानमाचरन्तु भवन्तः। सायं ज्ञातिभोजनं सम्पत्स्यते। तदिह शीघ्रमेव

प्रातराशो निर्वर्त्यताम् !' वयमन्तःक्लिष्टा अपि परिश्रान्ताः क्लान्ताश्चापि वासांस्युत्तार्य स्नानार्थं गृहस्थस्य तस्य गृहस्य पश्चिमद्वारं प्रविश्य प्राङ्गणं प्राविशाम ।

अथ पश्चिमाशामवलम्बमानो ग्रीष्मकालीनो दिनपतिः प्रखरं तातप्यमानोऽभूत् । तत्र प्राङ्गणे छायाया नाममात्रमपि नासीत् । अस्मत्पादास्तु पूर्वतः एवाध्वकण्टकैः क्षत-विक्षता आसंस्तो नग्नचरणानामस्माकं सर्वतः परितप्ताया भुवः स्पर्शाद्या व्यथा तुदति स्म सा वर्णनातीतासीत् । मयोक्तम्—'सखायः ! द्रुततरं स्नायताम् । सिद्धं भोजनं च मोपेक्ष्यताम् ।' तावदेकेन सुहृदाभाणि—'कुतो नु खल्वत्रस्नानार्थं जलम् ?' तावदेव गृहपतिरेकं जलकलशमानीय तत्र प्राङ्गणैककोणे संस्थापिते स्नातावशिष्टजले ह्येकस्मिल्लोहकटाहे तत् कलशजलं निक्षिप्य तेनैवास्मान् स्नातुमादिदेश ! कटाहे क्षिप्तं तत्कलजलं नितान्तमलिनं महदाविलं चाभूत् । तत्र जले पुनस्तृणस्तम्बाः पाषाणकणिका मृत्क्लेदः कर्दमश्च सम्पृक्तोऽभूत् । तज्जलं कज्जलमिश्रितमिवालोक्यास्माकं सिस्नासा क्षुत्तृषं च सर्वं दूरं पलायाञ्चक्रे । सत्यप्येवमन्ततः क्षुत्क्षामकण्ठा वयं स्वपाका भूदेवास्तेनैव जलेन स्नातुं विवशाः कथमपि स्नानाय बद्धपरिकराः स्नानमारभेमहि । जलस्य तस्य न्यूनतमां मात्रां वीक्ष्यास्मास्वेको झटिति पानपात्रं गृहीत्वा तेन कटाहस्थेन जलेनापूर्य साडम्बरमुन्मुक्तकण्ठं च प्रोच्चैः स्वरं—"गंगे च यमुने चैव गोदावरि सरस्वति ! नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु ।। १ ।।" इति श्लोकमुच्चारयन् यावत्तत्पात्रस्थं जलं धारावद्धं शिरसि पातयति तावदेवोच्चैराक्रोशितुमारेभे—'अरे ! जलं त्वेतदतीवोष्णं तरलाग्निकल्पं दहतीव मेऽङ्गानि, तत्कथमहमनेन स्नायाम् ?' वास्तवीं स्थितिं जानानोऽपि च गृहपतिः पुनरप्येकं जलकलशमानीय तत्र कटाहे प्रक्षिप्योवाच—'स्यात् कदाचिज्जलमेतत् सूर्यतापेनोष्णतां गतम् ! तदधुना शीघ्रतरं स्नान्तु भवन्तो नो चेद्भूयोऽपि चाधिकमुष्णतामीयात् ।' कथमपि तेन विदाहिना जलेनैव वयं स्नाताः । स्नात्वाङ्गानि परिमृज्य च यावद्वयं गृहान्तः प्रविष्टास्तावन्महानसादित्थं ध्वनिमायान्तमश्रृणवाम—'तदधुना कियन्तोऽवशिष्यन्ते भोक्तारः ? नव्यं भोजनं परिपच्यमानमास्ते । क्षणं प्रतीक्ष्यताम् । इदानीमेव क्षणात् सर्वं सिद्ध्यति ।' अथ यावद्वयं किमपि स्वकर्तव्यं निश्चेतुं सक्षमाः स्याम, तावदेवास्मत्पूर्वभोक्तारोऽतिथयो भोजनं परिसमाप्य पंक्तिभ्यो व्युदतिष्ठन्त । उत्थितेषु तेषु मक्षिकाणां समूहास्ताभ्यो ह्युच्छिष्टपत्रावलिभ्य उत्प्लुत्यास्मच्छरीरेषूपविष्टाः । तत्रापि च च पुनः कालक्षपणोचितं न किमपि स्थानमासादितमस्माभिः । 'यावद्भूशुद्धिगोमयलेपं क्व नु खल्वास्थाय प्रतीक्षितव्यम् ?' इति

निर्गन्तुमपारयन्तो वयमगत्या तत्प्राङ्गणमेव पुनरप्यागतवन्तः। बहिर्निःसृत्यायातेष्वस्मास्वस्पृश्ययोगिषु काश्चन महिलाः सर्वास्ताः किलोच्छिष्टपत्रावलीवंशस्थालीष्वेकीकृत्य तत्रैव प्राङ्गणस्यैककोणे निचिक्षिपुर्यत्र वयमतिथयो भूदेवाः कृतस्नानाः स्थिता आस्म। ताश्च सर्वा देव्योऽस्मदपेक्षया त्वरमाणा गोमयमृण्मिश्रेण लेपेन भूतले लेपं कर्तुं व्यवसिताः। यावत्ता भूलेपमकुर्वन्, तावद्वयं मक्षिकायूथैः परिपीड्यमाना, घर्मेण च दन्दह्यमानदेहा यां हि बत कष्टां दशामन्वभवाम सा वर्णनातीतानुभवैकसंवेद्या बभूव। अथ च यावत् सद्यः कृतो भूलेपो न शुष्यति, तावत्तत्र स्थातुं गन्तुं द्वयमपि च दुःशकमासीत्। किं वान्यदकरिष्याम? घण्टाप्रायं समयं यावद्यथा तथा तत्प्रतीक्षामकरवाम। सा च प्राङ्गणभूमिः सर्वतो घर्मतप्ता। प्रलयाग्निप्रचण्डतापान्निरयनिवासादपि वातिरिच्यते स्म। व्यतीतेषु केषुचित् क्षणेष्वेव 'अन्तः प्रविश्यताम्। प्रातराशभोजनं संसिद्धं विद्यते। काष्ठपट्टिकासनानि च प्रसारितानि वर्तन्ते। आगम्यताम् सुखेन स्थीयताम्! प्रातराशश्चोपभुज्यताम्!' एतन्निशम्य वयं द्वारं प्रविश्यान्तः प्राविशाम। यावद्वयं सर्वे काष्ठासनान्युपविशामस्तावदस्मास्वेकः सखा जलार्द्रे मृद्गोमयक्लिन्ने पङ्किले च भूलेपे सुतरां चिक्कणे पदमादधानः स स्खलितः सन् 'धडामधच' इति शब्देन साकमेवाङ्मुखं भूमौ निपपात। तस्य तत्रापस्खलनादपघातातिरिक्तं तस्य सर्वोऽपि च देहो भूलेपद्रवेणाक्तो बभूव। तस्य तां दुःस्थितिमवालोक्य तत्र स्थिताः सर्वा अपि महिलाः बालका बालिका युवानो वृद्धाश्च साट्टहासं गगनभेदि जहसुः। वयमपि चात्मनो हासपरिहासविनोदवृत्तिभावं निरोद्धुं नाशक्नुवाम। स खलु भुवमालिङ्गन्नपि चास्मत्सुहृत् स्वयमात्मनस्तां संस्खलनविडम्बनामुपहासास्पदां परिस्थितिं चानुभवन् जहास। स खलु तत्कालमेवोत्थाय स्नातधौतेन वस्त्राञ्चलेन कर्दमक्लेदाङ्कचित्रितं स्वशरीरं प्रोञ्छनपरः शीघ्रमेवोत्तस्थे गृहपतिस्तं व्यतिकरं ज्ञात्वा तत्रागत्य तमित्थं पप्रच्छ-अये! कोऽप्यपघातस्तु नो जातोऽस्ति भगवन्? नो चेद्ग्रामवैद्यमाहूय सद्यश्चिकित्सां कारयाम! कुतोऽत्रास्माकं ग्रामीणानां वसतौ श्रीमतां नागरिकाणामिव भव्यानि भवनानि सुविशालानि विस्तृतानि च प्राङ्गणानि? महत्कष्टमनुभूतमस्माकं पूज्यैर्वतातिथिभिः। स किलाहतोऽप्यस्मत्सुहृत् 'न कापि तादृशी क्षतिरपघातो वाजायत। केवलं मम जानुनि किञ्चिदपक्षतमिवाभाति। न कोऽपि चिन्ताविषयः! न किमप्यत्याहितम्।' इति ब्रुवाणो मन्दं मन्दं हसन्नस्माकं मुखानि साभिप्रायं परिपश्यन् स्वासने न्यषीदत्।

अथ भोजनसामग्रीषु (केवलं शाल्योदनम् सूपं चेति द्वयमेवाभूत्) परिवेशितासु पत्रावल्यां वयं सतृष्णं भोक्तुं व्यवसिताः। प्रथमग्रास एव मुखान्तर्गतेऽ

स्माकं रसनेन्द्रियचेतनातीवोष्णतमेन भोजनेनाग्निस्पर्शसाक्षात्कारमिवान्वभूत्। अपरग्रासास्वादनाय सर्वथा तन्निषेधमिव कर्तुं जिह्वास्माकं सत्याग्रहायोद्यता बभूव। वस्तुतस्तत्सूपं तावज्ज्वलदङ्गारकल्पमोदनश्च बाष्पधोरणीधूमाकुलोऽतीवोष्णश्चासीत्। तत्रापि च सूपे मरीचानां महती मात्रा तथा प्रभूतावर्तत यथास्वादितमात्र एव तद्ग्रासे रसनाग्रतो नाभिदेशपर्यन्तकण्ठहृदयं च विदारयन्ती जाज्वल्यमानाग्निरेखेवास्मदन्तःशरीरे सन्धुक्षमाणासीत्। कराङ्गुलयश्च तद्भोजनोदनं सूपं च स्प्रष्टुं स्वकीयमसामर्थ्यमघोषयन्। पुनस्तत्र भूयो भूयः समागत्य महिलाः 'गृह्यताम्! गृह्यताम्!! किञ्चित्त्ववश्यमेव गृह्यताम्!!! यथारुचि भुज्यताम्! सुदूरमायाताः स्थ यूयमतिथयोऽत्र बुभुक्षिताः स्थेति च ब्रुवाणा महताग्रहेणोष्णोष्णं प्रखराङ्गारवतीषु चुल्लीषु जाज्वल्यमानं 'अलम्! अलम्!!' इत्यस्माकं वदतामपि वचः, सङ्कोचं लज्जाभावं च मन्वानास्तद्भोजनपदार्थं मुहुर्मुहुः पर्यवेशयन्। फलतोऽस्माकं पत्रावल्यां परिवेशितं भोजनं चिरादपि शीतलतां न ययौ, न च वयं सुखेनातृप्ति भोक्तुमपारयाम। तथापि मित्रेभ्यः सङ्केतभङ्ग्योक्तम् "मात्रास्पर्शास्तु कौन्तेय! शीतोष्णसुखदुःखदाः। आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत! ।।१।।" इत्थं कथमपि पञ्चप्रायेषु कवलेषु काठिन्याद् गलाधःकृतेषु तृषातुरानस्मान्महती पिपासातितीव्रतममबाधत। जलमपिबाम। पुनः पुनः पानीयं पेपीयमानानामस्माकं सा पिपासाधिकाधिकं वृद्धिं गच्छन्ती महर्षिमगस्त्यमपि चातिशेते स्म। सजातीयानां समशीलत्वात्कथमप्यल्पाल्पं यावच्छक्यमभुञ्जाम। अत्यम्बुपानाद्वयं भोजनान्नितरामपरज्यमाना हस्तप्रक्षालनं कृत्वोदतिष्ठामहि। तावदेकया कयाचिद् वृद्धयाऽभिहितम्—'इमे तावन्नागरिकाः सन्त्यतिथयः। सुतरां सुकुमारास्त एतेऽस्माकं ग्रामीणानां भोजनं कथमातृप्ति भुञ्जीरन्। यदि चैतैरधुना प्रातराशसमये सौकुमार्यात् पर्याप्तं न भुक्तं स्यात्तदा पुनर्मध्यरात्रान्तरं भोजनं लप्स्यते। किमेते नागरिका जना वायुभक्षणेनैव जीवन्ति?:सर्वमपि च परिवेशितं भोजनं तैरेतैरुच्छिष्टतां नीतम्! बाला ह्रीमेऽत्रत्यं व्यवहारवर्तनं कथं जानीयुः? मन्मनसि करुणाभ्युदेत्येतेषां कृते! नैते तत्त्वतो जानन्ति यदत्र ग्रामेषु मध्यरात्रादनन्तरमेव ज्ञातयो भुञ्जत इति। वराका बुभुक्षापीडिता निखिलामपि रात्रिं कथङ्कारं नेष्यन्तीति महान् प्रसङ्गोऽयं विषमो ह्युपस्थितो बालानाम्!'

इत्थं भोजनाभिनयं परिसमाप्य वयं गृहपतेर्भवनस्यान्तःप्रकोष्ठमागत्य तत्र स्थापितासु खट्वासु प्रसुप्ताः। मार्गक्लेशखिन्नाः परिश्रान्ता अन्तःक्लिष्टाश्च वयं सद्यो निद्रादेव्याः क्रोडेऽशयामहि।

अथ निशीथे कश्चित् सज्जनोऽस्मान् खट्वाशरणान् हस्तयोर्द्वयोर्गृहीत्वा

समग्रं नो दहमाधुन्वान उवाच—'अयि, भोः । पूज्याः !! अतिथिमहाभागाः !!' ज्ञातिभोजनं संसिद्धमवतिष्ठते ! सर्वेऽपि च सजातीयाः समाजग्मुर्ग्रामान्तरेभ्यः ! त्वर्यताम् ! त्वर्यताम् !! भोजनवेला समजायत ! अलं विलम्बितेन ! शीघ्रमागम्यताम् !! स्नायताम् !!! स्नायताम् !!!' स खल्वेवमस्मान् भोजनायामन्त्र्य यथायातस्तथा गतः । वयं च भूयोऽपि निद्राङ्कमारूढाः । ततो व्यतीते घण्टापरिमिते समये कश्चिदन्यो जनः समागत्यास्मान् प्रबोधयन्नुवाच—'अयि, महाशयाः ! किमर्थमतिविलम्बन्तेऽत्रभवन्तो भवन्तोऽतिथिमहाभागाः ! सर्वेऽपि च ज्ञातिजना भवतः प्रतीक्षमाणा विद्यन्ते । कृपया भोजनार्थं झटिति स्नानमाचरन्तु महोदयाः ! यावद्भवन्तोऽतिथयो भोजनपंक्तिषु कृतस्नाना नोपविशन्ति तावन्नैकोऽपि गृहस्थो भोजनायोपतिष्ठते । स एषोऽस्माकमत्रत्यः शिष्टाचारो रूढीं गतः । त्वरन्ताम् ! त्वरन्ताम् !! महिला बालकाश्च सर्वे बुभुक्षाकुलिता आक्रोशन्ति ! कृपया शीघ्रमागम्यताम् ? त्वर्यतां भोः !'

एवमेकमनु द्वितीयस्तृतीयश्चतुर्थश्चेति बहवो जना अस्मानाकारयितुं तत्र समाजग्मुः । क्रमशः सर्वोऽपि समाजस्तत्रागच्छद्यत्र वयमास्म । तेषु कश्चन तन्द्रिलानामस्माकं मुखेषु जलबिन्दून्निक्षिप्य संसज्ञान् कर्तुं प्रायतत । विवशा वयं नेत्रयोर्जलबिन्दुनिपातेन प्रबुद्धाः । तदानीमस्माकं देहावयवाः श्रमक्लेशाद् विशीर्यमाणा इवासन् । निद्रास्मान् बाधते स्म, कोलाहलो जायते स्म, सर्वेऽप्यस्मानेवाक्रोशन्ति स्मेत्यपरा महती कष्टपरम्परा सम्मुखीनासीत् । तथापि सर्वानेव सामाजिकान् युगपत्तत्रागतानवलोक्य वयं खट्वास्त्यक्त्वा कौशेयवस्त्राणि, पानयात्राणि च गृहीत्वा तैः सर्वैः सार्द्धं विवाहोत्सवकर्त्तुर्गृहस्थस्य गृहागङ्णं प्राप्य पुनः स्नानार्थं प्रवृत्ताः । पूर्ववर्णितेनैव कटाहजलेन स्नात्वा तद्गृहप्राङ्गणे भोजनाय प्रतीक्षमाणा न्यषीदाम अस्मत्स्नानानन्तरं घण्टाद्वयप्राये समये व्यतीते सर्वेऽपि सामाजिकाः स्नात्वा पत्रावलीषु पंक्तिबद्धमुपविष्टाः । परिवेशितायां भोजनसामग्र्यां सर्वे ते ज्ञातिजनाः 'नमः पार्वतीपतये हराय ! इति सोद्घोषमुक्त्वा भोक्तुमारेभिरे ।

एकतस्तु स्वास्थ्यमननुकूलमन्यतश्चानवसरं कालातिक्रमं भोजनं, ततश्च शरीरं सर्वसन्धिषु श्रमात्पीडयमानमभूत् । कथमपि शिष्टाचारानुरोधाज्ज्ञातिकृतादपवादभयाद्वयं भोजनाय बलाद्रुचिमाकृष्य सेच्छमनिच्छं वा किञ्चिद्भोक्तुं प्रावर्तामहि तावदेवाकस्मात् सजातीया विहगाः कणचयमिव भोजनं परिसमाप्योदतिष्ठन्त । तावन्तं व्यतिकरं, शीघ्रतायाः पराकाष्ठां च विलोक्य वयं परस्परं मुखान्यवलोकमाना अर्द्धभुक्त एव भोजने पत्रावलिं परित्यज्योत्थिताः । हस्तप्रक्षालनं कृत्वा भूयोऽपि च ताः पूर्वकल्पिताः खट्वाः समासाद्य शयनमकरवाम । तदानीं रात्रिः प्रभातकल्पैवासीत् ।

अथ द्वितीयेऽह्नि सूर्योदयानन्तरं वयं लोकानां कोलाहलं श्रुत्वाऽबुध्याम। जलं पीत्वा शौचस्नानादिकाः क्रिया निर्वर्तयितुं सर्वे नदीं प्रति गन्तुं स्वनिवासस्थलात् प्रस्थिताः। यावद्वयं स्वावासात् किञ्चिदग्रे गत्वा बहिर्व्रजामस्तावदेवास्माकं पूर्वपरिचितः सुहृन्मध्येमार्गं सम्मुखीभूय प्रोक्तवान्नः— 'अये, श्रीमन्तो मान्या अतिथयः! आगम्यताम्! आगम्यताम्! अस्मिन् मम निवासोटजे स्वपदार्पणेन पुनन्तु महाभागाः!' एवमुक्त्वा प्रीत्यास्मान् हस्तेनाकृष्य समीप एव वर्तमानं स्वगृहमनैषीत्। तत्रोपविष्टेस्वस्मासु चायचषकपानस्योपक्रमं कर्त्तुं व्यवसितः। यावत्तस्य गृहिणी देवी चायं पचति तावदस्मत्परिचितः सुहृज्ज्ञातिसमाजसम्बन्धिनीः परस्परं वैरविरोधकलहकथा उपन्यासक्रमेणाख्यातुं प्रावर्तत तेन पूर्वपुरुषानारभ्य वर्तमानसमयपर्यन्तं ज्ञातिसम्बन्धिन्यो नानावार्ताः सटीकं सटिप्पणं चोपवर्णिताः। तत्कथाश्रवणेऽन्यमनस्का अपि वयं सर्वं तदुक्तं सांगोपाङ्गं श्रोतुं विवशा बाध्या इवाभूम। व्यतीतेऽपि च प्रभूते समये यदा चायदर्शनं नाभूत्तदा वयं—'भगवन्! पुनः सत्यवकाशे भवद्वार्तालापश्रवणसुखमनुभविष्यामोऽधुना तु नदीं गन्तुमस्मानाज्ञापयतु!' इति प्रोक्तवन्तः। निशम्यैतद्वचनं स ज्ञातिगतान् कलहप्रसङ्गान्निन्दावादांश्च स्थगयित्वा—'अये. गौरि! आनीयतां चायम्। विलम्बन्तेऽतिथयः।' इत्युक्तवान्। इत्युक्तवति तस्मिन् तत्पुत्री गौरी—'तात! सिद्धप्रायं चायम्! अधुनैवानीयते! क्षणं प्रतीक्ष्यताम्! केवलं चाये दुग्धमिश्रणमेवावशिष्यते!' इत्युदतरत्। अथ पुनस्तत्र वातावरणे स्तब्धता प्रससार सर्वतः। भूयोऽप्यतीते कियति समये चायकपान् स्थाल्यां निधाय सा गौरी (वस्तुतः कृष्णा कज्जलवर्णा) अस्मत्पुरतो निदधे। चायस्य तस्य स्वरूपं दृष्ट्वा पूर्वदिनेऽस्माभिर्व्यंवहृतं तत्कटाहजलं कर्दमाविलं बलादस्मत्स्मृतिपथमायात्। केवलमात्मनो मुक्तय एव कथमपि मनः समाधाय तच्चायमौषधमिव क्वाथकल्पमपिवाम। ततः पूगीफलं तमाखुपत्रचूर्णं च चर्वयन्तो वयं ततश्चलिताः।

अथ तद्गृहान्निःसृत्य वयं यावत् किञ्चिद्दूरं व्रजामस्तावदेवैकोऽन्यो महाशयो भस्मदिग्धकलेवरो धृतोर्ध्वपुण्ड्रो रुद्राक्षमालां पञ्चकेशीं च दधानो मध्येमार्गमागत्यास्मानूचे—'मान्या अतिथयः! श्रीमतश्चायपानायामन्त्रयितुमेवाहमागच्छामि। कृपयागम्यताम्! शुभागमनेनास्मत्कुटीं पुनन्तु महोदयाः!' इत्यस्माभिस्तस्य सम्भ्रान्तस्य प्रौढवयस्कस्य तपोनिधेर्वचः प्रत्याख्यातुं न पारितम्। तेनापि तत्रास्मान् स्वगृहं नेतुं बह्वनुरोधो व्यधायि। अन्ततः सभ्यतानुरोधात्तद्गृहमगच्छाम। स खलु तत्रास्मान् स्वगृहं नीत्वासनानि प्रदाय त एव ज्ञातिपञ्चप्रपञ्चसम्बन्धिनः प्रसङ्गान् वक्तुमारभत। तद्वचनभङ्गीभिरस्माभि-

रालक्षितं यत्—अयं महाशयो भिन्नं पक्षमाश्रयन् पूर्वपक्षस्थान्निन्दतीति । परं मर्यादामनुरुन्धाना: स्वयमेवात्मनश्चेष्टितै: पराधीनतां याता वयमतिथिदेवा: श्रवणतितिक्षां विहाय किमन्यत् कर्तुं प्राभविष्याम ? अगत्या तत्रापि च बहुकालं क्षपयित्वा तथाविधमेव चायपानं कृत्वा कथमपि तत्क्लेशान्निवृत्ता: ।

एवं क्रमेण पञ्चदशजनानां गृहेषु प्रात:कालीनं चायपानं वयमकरवाम, मिथ:कलहायमानानां तेषां निन्दावादांश्चाशृणुवाम । यदा च षोडशोजनोऽप्यस्माँश्चायपानायाकारयत्तदात्मनोऽसामर्थ्यं निवेद्य नदीं गन्तुं प्रचलितास्तदा तेनोक्तम्-'अयि सज्जना: ! यदि श्रीमद्भ्यश्चायपानं न रोचते तदा भंगारस: पीयताम् यावदिच्छं परं मम गृहागमनेनोपकुर्वन्तु मामवश्यम् ! मरीचिमिश्रेण भङ्गारसपानेन श्रीमतां मलत्यागे महत् सौकर्यं स्यात्, मन: प्रसन्नता तु नूनं भवेदेव ।' स्वमोक्षस्यान्यत् किमप्युपायान्तरमपश्यन्तो वयं तद्गृहमप्यव्रजाम । स खलु स्वयमेव गृहपति: शिलायां भंगापत्रचूर्णमतिप्राचीनं जीर्णं शीर्णं धूलिमिश्रितं प्रक्षिप्य शिलापुत्रेण (लोढ़ी) निष्पेषयन् तथैवात्मन: श्लाघां परेषां निन्दावादांश्चाश्रावयत् । महता काठिन्येन ततो निर्मुक्ता वयम् ।

यावत् स्तोकमध्वानं व्रजामस्तावदन्येऽपि च ज्ञातिजनास्तद्ग्रामवासिनोऽस्मांश्चायपानायामन्त्रयन् परमस्माभिरसामर्थ्यमरुचिं शौचस्नानक्रियाणामनिवार्यावश्यकतां व्याजशतानि चोद्भाव्य तत: परं कस्यापि गृहगमनं स्थगितम् । कथमपि चात्मन: पिण्डं मोचयित्वा वयं नदीं प्राप्ता: ।

अधुना मध्याह्नप्राय: समयोऽवर्तत । नदीतीरे बहवो ज्ञातिजना ग्रामेभ्य: समायाता अतिथयश्च तीरे स्नानसन्ध्यादिकं कृत्वा हस्तयोर्धौतवस्त्राणि गृहीत्वागच्छन्तो दृष्टा: । ते सर्वेऽस्मान् दृष्ट्वा साकूतं मन्दहासं कुर्वाणा नमस्कारवन्दनच्छलादपकौशलेन चास्माकं मुखाकृती: परिपश्यन्तो मार्गमनुलग्ना ग्रामं प्रतिगन्तुं प्रावर्तन्त । यावद्वयं नदीतटमासाद्य वस्त्राण्यवतार्य पाषाणेषु यत्र तत्र निधाय जलपात्राणि नीत्वा शौचार्थं गन्तुं व्यवसितास्तावन्मध्याह्न: समजनि । दृष्टिं प्रसार्यावलोकितं तदा तत्र न क्वापि दूरं यावदेकान्तस्थानं, न वृक्षो, न छायास्माभिरवालोकि । वृषभराशि स्थितोऽर्क: खमध्यात् प्रखरतरं किरणजालं विकिरन्नभूत् । अस्माकं मलोत्सर्गेच्छा गर्दभशिरस: शृङ्गद्वयमिव पलायाञ्चक्रे । येन केन प्रकारेण शौचविधेर्नाट्यं कृत्वा वयं परावृत्ता: । मलशुद्धिस्त्वस्माकमौषधिशरणा बभूव । यथा तथा नद्यां स्नानं कृत्वा वस्त्राणि च प्रक्षाल्य पुनर्ग्राममगच्छाम ।

ग्रामं प्रविश्य यावद्वयं चत्वरमायातास्तावत् तत्र पञ्चपरमेश्वराणां, वार्ताविनोदाय समवेतानां कोलाहलोऽश्रावि । ते सर्वे मिथो राक्षसप्रायं प्राण-

न्तिकं च द्रुह्यन्तो मुखाद् गालीवर्षाः कुर्वन्तो दुर्वाससमपि स्वक्रोधकलुषाभिश्चेष्टाभिरतिशयाना वाग्युद्धं समाचरन्तः कलहायमाना अभूवन्। तेषां रौद्रभीषणं बीभत्सं करालरूपं वीक्ष्य चकितचकिताश्चित्रलिखिता इवातिष्ठाम। ततः केनचिदाहूयमानानस्मान् निम्बवृक्षाधो मृत्कुट्टिमेषूपवेशिताः। तत्र तेषां प्रपञ्चमञ्चतां पञ्चप्रभूणां दुर्वादान्निशम्यास्माकं नागरी बुद्धिस्तदानीं क्व नु कुतो वान्तर्दध इति तत्त्वतो वेत्तुं न प्राभवाम। थुत्कारपूर्वकं सनासाक्षिभ्रूभङ्गं साक्षेपमुरोविदारं घृण्यं जुगुप्सापूर्णं सव्यङ्ग्यं च विवदमानानां तेषां सापक्लेशदारुणं सोद्घोषं वाग्युद्धं शृण्वतामस्माकं शिरो वेदनाविक्लवमजायत। कश्चित्तत्र हस्ताभ्यां सभूम्यास्फोटं, कश्चन सोरस्ताडं, परो महदाग्रहोद्घोषं तथा चेष्टते स्म, मन्ये मात्स्यन्यायं चरितार्थयतां यादवानां स्वकुलविध्वंसयुद्धमिव साक्षाद् बभूव। तदानीं तेषां 'कलौ ब्राह्मणराक्षसाः' इत्युक्तिमिमां सार्थकां कुर्वत् 'अहो रूपमहो-ध्वनिः' प्रत्यक्षं बभूवास्माकम्।

तत्सर्वं वाक्प्रपञ्चकुशलानां ग्रामीणपञ्चायतनभैरवाणामकाण्डताण्डवमवलोक्य वयं ततो निर्गत्य स्वकीयमावासस्थलमगच्छाम। यावद्वयं धौतवस्त्राणि यत्र तत्र प्रसारयामस्तावदेको वृद्धोऽस्मानाहूय स्वगृहं नेतुमाययौ। तस्याग्रहाद्विनयान्मर्यादाभङ्गभयाच्च तदामन्त्रणं निषेद्धुमशक्नुवाना वयं तद्गृहं गताः। सोऽप्यस्मांश्चायपानाय विवशानकार्षीत्। ततोऽन्यस्ततोऽपरस्ततो द्वितीयस्तृतीयश्चेति भूयोभूयः सायं यावच्चत्वारिंशद्वारं चायपानमकरवाम। रात्रौ पुनर्ज्ञातिभोजनं प्रागिव निशीथे कृत्वा पुनरशेमहि। एवं तत्र स्थिताः कथमपि रात्रिं व्यतीत्योषसि शय्यास्त्यक्त्वोत्थाय कमपि किमप्यब्रुवाणाः शेषायामेव रात्रौ स्वगृहं गन्तुं तूष्णीं प्रस्थिताः।

अतोऽद्यत्वेऽतिथित्वेन कस्यापि गृहगमनं विशेषतो विवाहादिमहामहोत्सवेषु जनसम्मर्देषु सम्मिलनमतिथीनां क्लेशाय दोषाय पारवश्यायैव भवतीति तथ्यं सत्यं च। सर्वतोऽधिकं पराधीनो भवत्यतिथिरिति निष्कर्षः।

—०—

# पूर्वाग्रहः

राधारमणो नाम द्विजवरः कश्चिद्बभूव। स खलु परम्परया प्राप्ते राजाश्रये स्वजीवनं परिपालयन्नासीत्। तदानीं देशेऽत्र शिक्षाविकाशस्तथोन्नति-क्रमस्तादृगुत्कर्षश्रियं प्रोच्चैः स्तरं च न पस्पर्श यथाद्यत्वे। राधारमणो वर्णाश्रमसनातनधर्मानुयायी ब्राह्मणोचितेषु कर्तव्यकर्मसु सोद्यमः सन्ध्या-पूजारुद्राभिषेकचण्डीपाठग्रहजपशांतिप्रभृतिषु तदुपयुक्तेषु चान्येष्वपि पौरोहित्यकर्मकाण्डक्रियाकलापेषु च सुतरां प्रवीणोऽभूत्। स हि विद्यां यावदपेक्षितामधीतुं नापारयत्तथापि राजसेवया, शीलसंतोषवृत्त्या, सदाचार-चारित्र्येण, स्वभावमाधुर्येण, व्यवहारकौशलेन तथान्यैश्च तैस्तैः सभ्योचितैर्गुणै स्तत्कालीनस्य शासकस्य क्षात्रनृपतेः प्रीतिपात्रमासीत्। भूदेवत्वाद् राज्ञः कृपापात्रत्वाच्च नागरिकाः सर्वेऽपि चास्मै राधारमणाय कामपि सम्भावनामादर-पूर्णामकार्षुः। तत्कालीनः शासकः प्राप्तकालं तं कुलीनमास्तिकं चरित्रसदाचारवन्तं राधारमणपण्डितं योग्येषु कार्येषु नियुयुजे, सोऽपि च शासकानुग्रहापेक्षया, स्वपूर्वजानां यशःप्रतिष्ठापेक्षया, लोकसङ्ग्रहाभिलाषेण च राज्ञा निर्दिष्टानि सर्वाणि कार्यानुष्ठानानि योग्यरीत्या सम्पादयन्नासीत्। कदा-चित् कथावाचनैः, कदाचित् रुद्राभिषेकचण्डीपाठग्रहजपादिकार्यैः कदाचित् होमयज्ञमार्जनतर्पणानुष्ठानैः, कदाचित् शतचण्डी-सहस्रचण्डीविष्णुयागादिभिश्च स्वशास्तुर्नरेशस्य सर्वाणि धर्मकर्माणि सम्पादयन् सनातनवर्णाश्रमधर्मे परां प्रीतिमास्थां निष्ठां श्रद्धां भक्तिमास्तिक्यं च दृढयामास। राजापि च तं ब्राह्मणं कुलीनं शीलवन्तं सत्पात्रं च मत्वा तस्मै दानधनादिकमन्नवस्त्रादिकं च दत्त्वा समतोषयत्। तं च राजा स्वराजसभायाः सदस्येषु पण्डितेष्वेकमन्यतमं चकल्पे। तत्र राज्ञः पण्डितसभायामन्येऽपि चानेके विद्वांसो राजाश्रिता बभूवुः। तेषु केचन परम्पराप्राप्ताः स्थानीयाः केचन बहिस्तः समानीय नियुक्ता नवशिक्षिता ब्राह्मणा वैयाकरणा न्यायाचार्याः साहित्यशास्त्रिणो वेदान्तिनः कवयो धर्मशास्त्रिणो मान्त्रिकास्तान्त्रिका ज्योति-र्विदश्च बभूवुः परं शीलसंतोषतपश्चर्यासदाचरादिगुणै राधारमण एव नरेशस्य सुतरां प्रीतिपात्रं बभूव।

अथ राधारमणो नरेशस्य बालसखः समवयस्कश्चासीत्। राधारमणस्य

सौभाग्यात् तस्याश्रयभूतस्य राज्ञो राज्यसिंहासनेऽभिषेकानन्तरं तत्कुलवृद्धिक्रमः पुष्पपल्लवफलसम्पत्सनाथो महावृक्ष इव सर्वतो विस्तारमाससाद। राज्ञो बन्धुबान्धवाः पुत्रकलत्रादयो भ्रातृभगिन्यो जामातरः सर्वेऽपि च कौटुम्बिकाः सदस्याः सदा सर्वदा स्वस्थाः प्रसन्नाः शिक्षिता दीक्षिता सदाचारा यशस्विनो महोच्चैः पदान्यधितिष्ठन्तः सकुशलाः सानन्दाः सुखिनश्चासन्। तेषां सर्वेषामेव राजकुटुम्बसदस्यानां राधारमणे विप्रवरे श्रद्धाभक्तिभावः, स्नेहसौजन्यं, सम्मानभावना चातिशयेनासन्। राजकुले ब्राह्मणस्यास्य राधारमणपण्डितस्य तथाविधां प्रतिष्ठां प्रतिपत्तिं च दृष्ट्वा जातिस्वभावात् केचनान्ये पण्डितास्तस्मा अद्रुह्यन्, यदा कदा प्राप्तावसरं तमल्पशिक्षितं राज्ञः समक्षमेवाक्षिपन्, तस्याल्पज्ञतामयोग्यतां चाख्यापयन् परन्तु स्वयं राज्ञो मते 'राधामणोऽसौ ब्राह्मणोऽस्मदाश्रितो भाग्यशाली सुलक्षणः शुभोदर्कश्च वर्तते, तस्य चात्र राजप्रासादे वसतिः सहवासो यातायातं चास्माकं सर्वेषां हिताय मङ्गलायाभ्युदयाय च पर्यवस्यन्ति, तस्मादसौ कदापि चायं विप्रवरो न कथमप्यवमन्तव्योऽनादरणीयो विमनायितव्यः प्रत्युत यथासाध्यमाराध्यः पूजनीयश्चेति' धारणाबालवृद्धं सर्वेषां राजपरिवारस्य सदस्यानां बद्धमूला बभूव। तेन हि विद्यमानेष्वपि बहुषु समर्थेषु विशेषज्ञेषु विद्वत्तल्लजेषु राजपण्डितेषु राधारमणस्य स्थानं नृपकुले पूज्यं, सुप्रतिष्ठितं, निर्बाधं, सुरक्षितं चासीत्। इत्थं राजकुलं सेवमाने राधारमणपण्डिते, नृपभवने कदाचित् यज्ञोपवीतसंस्काराः, कदाचिद्वाग्दानविवाहमहोत्सवाः, कदाचित् पुत्रजन्ममनोरथाः, कदाचिद्यज्ञानुष्ठानमङ्गलानि, कदाचित् देवमूर्तिप्रतिष्ठाप्रसङ्गाः, कदाचित् नवनिर्मितानां भव्यभवनानां वास्तुप्रकरणानि, कदाचित् जलाशयविद्यालयानामुद्घाटनसमारम्भाश्च प्रावर्तन्त। राजा चासौ यं कमपि शुभारम्भं स्वमनसि सङ्कल्पते तत्रादौ राधारमणेन साकं सम्मन्त्र्य तत्सहमतिं प्राप्य तदनु शुभारम्भेषु प्रवृत्तिं करोति। इत्थं वर्तमानयोस्तयोर्ब्राह्मणनृपयोर्महान् समयो व्यतीयाय।

अथैवं गच्छति काले तद्राजाश्रिताः पण्डितसभायाः सर्वेऽपि च ब्राह्मणा राधारमणाय प्रच्छन्नं द्रुह्यन्तः क्रुध्यन्त ईर्ष्यन्तोऽभ्यसूयन्तोऽपि च न किमपि तस्याहितं कर्त्तुमपारयन्। यद्यपि ते सर्वे प्रायस्तस्य हितं बाधितुं सदैवाचिन्तयन् परन्तु न मनागपि किमप्यनिष्टं कर्तुं तद्योगक्षेमं वा निरोद्धुं शेकुः प्रत्युत यथा यथा समयोऽतिक्रामति तथा तथा तस्योत्कर्षः श्रीः समृद्धिः सम्मानः प्रतिष्ठा च वृद्धिं गच्छन्ती समभूत्।

यदा ते सर्वेऽपि राजपरिषदो द्रोहिणः सदस्या ब्राह्मणपण्डिता राधारमणं बहुशो निन्दन्तोऽपि, तस्मै भृशं कुप्यन्तोऽपि, तस्मा अतितरां द्रुह्यन्तोऽपि, तद्विप्रियमनिष्टं वापमानं कर्त्तुं न शेकुः परं च राधारमणे राज्ञोऽधिकाधिकं

कृपाभावं विश्वासं घनिष्ठतामात्मीयतां च जायमानां ददृशुस्तदा तद्विषयेऽन्तर्मनस्येवं चिन्तयितुमारेभिरे:—

"न ज्ञायते यदस्मिन् राधारमणब्राह्मणे किमर्थमेतावान् राज्ञो भक्तिभावो विजृम्भते ? किमर्थं चास्मिन् सर्वेषां राजपरिवारसदस्यानां बतान्धश्रद्धा ? किमर्थं चास्मिन् नृपतेः सुतरां विश्वासः ? किमर्थं चाबालवृद्धं सर्वे राजकुटुम्बिनो जना निरतिशयमस्मै स्निह्यन्ति ? किमर्थं च सर्वे तेन सहात्मीयतामेतावतीं द्रढयन्ति ? किमर्थं चामुमेव सर्वेष्वपि राजकीयेषु धर्मकृत्येष्वभ्यन्तरीकुर्वते ??? को नु बतास्मिन् तादृशो गुणातिरेकोऽस्ति यद्वशं गतो राजा, राजमाता, राजरमण्यो, राजकुमारा, राजकुमार्यो, नृपतेर्बन्धुबान्धवाः, सामन्तादयोऽधिकारिणश्च सर्वे तं बहुविश्वासपात्रञ्च सम्मानार्हञ्च श्रद्धेयञ्च पूज्यञ्च प्रतिष्ठायोग्यञ्च मन्यन्ते??? का वा बत सिद्धिवस्तदधीना यदसौ तया राज्ञो हृदयं जिगाय ? को वाथवा मन्त्रस्तस्य फलितो येन सः साम्राज्यश्रियां सर्वानपि च राजसिकान् भूरिभोगान् विनायासं भुङ्क्ते ? किं च तद्गुप्तं रहस्यं षड्यन्त्रं वा सोऽरचयत् येन नित्यमेव महत्सम्मानसुखं समश्नुते ? किं कृत्वा च सः प्राप्तकालं महान्तं द्रव्यसङ्घातं पुरस्कारसमुदायं च लभते ? हा, हन्त ! हताः स्मः ! परिमुषिताः स्म भोः !! तदत्रास्मिन्नराधमे राधारमणे बद्धमूले तिष्ठति सति नास्मासु कस्यचिदन्यस्य विद्वद्धुरीणस्यापि चोत्कर्षसाधनं सम्भवति !!! कथं नाम स एष कण्टकः समूलमुत्पाटयितुं शक्येत ? अहो ! अनेन ब्राह्मणापसदेनात्र वयं सर्वेऽपि राज्याश्रिताः कृतविद्याः शास्त्रिण आचार्या वाक्पतिकल्पाश्चापि राज्ञः कृपातः परिवञ्चिताः ! किमतः परमनिष्टं स्यादस्माकं सर्वेषां विदुषां ब्राह्मणसभ्यानाम् !! आश्चर्यं त्विदं यदयं शासकस्तमिमं नराधमं राधारमणं विहाय नान्यान् विदुषो बहु मन्यते !!! प्रत्यक्षतोऽस्मान् सर्वान् समुपलालयन्नपि स एष नरेशः परोक्षे तमेवहि श्लाघते, तद्गुणानेव गायति, तमेव बहु सम्भाषते, तमेव विमर्शावसरेषु भूयो भूयो नीतिनिर्धारणं पृच्छति, तस्मिन्नेव महत्कार्याणां कार्यभारमुत्तरदायित्वं चारोपयति, तमेव हि सर्वत्राद्रियते भृशम्, तस्यैव पूजां, तस्यैव सम्मानं, तस्यैव सत्कारं, तस्यैव सम्भावनां, तस्यैव सक्षमतां, सम्माननां, योग्यतां च समर्थयते ! तदत्रास्मिन्नधमे दास्याःपुत्रे राधारमणपण्डिते विद्यमाने सति नास्माकं शास्त्रविदां सुशिक्षितानाम् दीक्षितानां विचक्षणमतीनां कवीनां कलाकाराणामपि राज्ञो हृदये स्थानं भवितुमर्हति । नृपस्य प्रामाण्यात् गतानुगतिकाः सुप्रतिष्ठिता धनिनो नागरिकाश्चापि तमिमं राधारमणमेव हि सर्वकार्येषु पुरस्कुर्वन्ति । हा हन्त ! इत्थंविधायां दुःस्थितौ विद्यमानायां कथं स्याद्बतायास्माकं निर्वाहः ? कथञ्चास्माकं योगक्षेमं निर्बाधं भवेत् ? तदधुना

विषयेऽत्र किं कर्तव्यम्? कथं चासौ दुरात्मा राधारमणः समूलमुत्पाटितो भवेत्? किं कृत्वासौ ब्राह्मणाधमो राधारमणो राज्ञः प्राङ्गणादपगच्छेत्, तद्धृदयतश्चायं दूरीक्रियेत? एवं ते सर्वेऽपि च राधारमणस्याहितं चिन्तयन्तस्तस्थुः।

अथैवं गच्छति कालेऽत्र भारतवर्षदेशे महात्मनो गान्धेर्नेतृत्वे गौराङ्गशासनात् स्वराष्ट्रोद्धारहेतोः स्वतन्त्रतान्दोलनं प्रारेभे। ततोऽसौ दूरदर्शी नरेशो 'राज्यानां विलयो नूनं भावीति' तत्त्वतो हि परिणामं विज्ञातवान्। जाते खलु राज्यविप्लवे राधारमणसदृशानां राज्ञोऽन्तरङ्गसेवकानां स्थितिर्नात्र शोभनां संरक्षणव्यवस्थां लप्स्यत इति सञ्चिन्त्य नरेशेण स्वकीये शिक्षाविभागे कस्यांचित् पाठशालायां राधारमणस्य परिवर्तनं विधायाध्यापकत्वेऽसौ नियुक्तः। एकादा राधारमणमेकान्ते समाहूय तेन भूपतिना प्रोक्तम्—'द्विजवर्य! तव राजसेवया, राजभक्त्या, सदाचारेण, विद्यया, व्यवहारेण, वर्तनेन, योग्यतयाहमतीव संतुष्टः प्रसन्नश्चास्मि। यावन्ममेदं राज्यमविकलं तिष्ठति तावद्भवतोऽत्र राज्ये या जीविकावृत्तिरधुना वर्तमानास्ते सा यथापूर्वमनुपहता स्थास्यति, तव राज्याङ्गे सेवासम्पादनकार्यं च प्रागिव निर्बाधं प्रचलिष्यति, परन्तु प्रवर्तमानमेतत् स्वराज्यान्दोलनं कदाचित् राज्ञामधिकारानपबाधेत, राज्यानां विलयोऽपि ननु भवेदिति सम्भाव्यते। ततो मया भवतो वृत्तिसंरक्षणार्थमेवास्माकं राज्यस्य शिक्षाविभागे स्थानान्तरं क्रियते। भवांस्तत्राध्यापकत्वेन सेवाकार्यं विधत्तां, राज्याङ्गकार्याण्यपि च यथापूर्वं सम्पादयतु। अहं शिक्षाविभागाधिकारिणः समाज्ञापयिष्यामि यत्ते भवन्तं राजसेवाकर्मस्वत्र प्रासादे समागमनार्थमनुमन्येरन्निति।'

श्रुत्वैतद्राधारमणः पूर्वं तु किञ्चिदिव राज्ञोऽकृपामिव मेने, तथान्तर्मनसि कमलाकान्तादिभिर्विरोधिभिः कृतं किमपि षड्यन्त्रजातमपकौशलं कपटजालमिवामन्यत, परन्त्वन्ते निर्दोषहृदयत्वाच्छीलसौजन्यत्वाद् राजभक्तेरुत्कटकृतज्ञताभावात्तथा भर्तृपिण्डस्यानृण्यहेतोः कुलीनत्वाच्च तामिमां राज्ञ आज्ञां शिरसि धृत्वा राजप्रासादे पाठशालायां चोभयत्रापि सेवासमर्पणमात्मनो हृदयस्य विशुद्धभावेनारेभे। परञ्च तद्गतं तमिमं परिवर्तनजन्यं व्यतिकरं तद्विरोधिनः प्रतिपक्षावलम्बिनः पण्डिता द्वेषवशात् स्वानुकूलमिव मत्वान्तर्गूढं मुमुदिरे। ते च सर्वे राधारमणस्य तदिदं स्थानान्तरं राज्ञः कोपोद्भवमिव मत्वा केचन स्वनियुक्तिं तस्य पदे सम्भावयन्तो बहुप्रसीदन्तोऽथ स्वकीयामग्रे भाविनीमभ्युन्नतिं समुत्प्रेक्षमाणास्तत्कृते सस्पृहाश्च बभूवुः।

अधुना देशेऽस्मिन् भारतवर्षे गान्धेर्महात्मनो नेतृत्वे क्रियमाणं स्वराज्यान्दोलनं सर्वतोदिक् प्रचचार। तस्यैतस्यान्दोलनस्यामोघा क्रान्तिकारिण्यः प्रवृत्तयश्च काम्यभूतपूर्वां दुर्भेद्यां गतिशीलतां प्रभाववत्तां तीव्रतां चासादयन्। न केवलं गौराङ्गशासनान्तर्भुक्तेष्वेवापि तु क्षात्राधिकृतेषु स्वदेशीयेषु प्रान्तेष्वपि प्रजामण्डलादिभिः सङ्घटनैः प्रस्तुतान्यान्दोलनान्यपि प्रचण्डजवात् प्रचेलुः। क्षात्राणां स्वसत्ताधिकृतेषु राज्येष्वपि चान्दोलनसम्भवाः सङ्घर्षा व्यातेनुः। तादृशीः सर्वाः परिस्थितीर्दृष्ट्वा राज्ञा राज्याङ्गेषु यत्र तत्र भृत्यानां राजसेवकानां न्यूनीकरणमङ्गीकृतम्। यथा यथा राष्ट्रियमान्दोलनमिदमुद्रेकमाससाद तथा तथात्र स्वदेशीयाः क्षात्रा नरेशाः स्वकीयानां माण्डलिकराज्यानां विलयमवश्यभाविनं सम्भावयन्तोऽस्वस्थचित्ता विभ्रान्ता भयभीताश्चकिताश्चाभूवन्। अस्मिन् हि व्यतिकरे नरेशस्य पण्डितपरिषदो भङ्गो बभूव। प्रान्तान्तरेभ्यस्तदाश्रयमागताः सर्वेऽपि च ब्राह्मणपण्डिता नृपस्य सकाशात् विश्रामवृत्तिं गृहीत्वा यथेच्छं स्वगृहान् प्रति जग्मुः। केचिदथ स्थानान्तराणि कारयित्वा स्वोपयुक्तान् विभागानन्यान् राजकीयान् समाश्रयन्। अधुना राजप्रासादे राधारमणस्यापि न तादृशी कापि तात्त्विकी किलावश्यकतावाशिष्यत। शनैः शनैः राजसेवासम्पादनस्यावश्यकता शिथिलतामवाप, परन्तु राधारमणस्य पाठशालायामध्यापकत्वं क्रमेण स्थिरतामापद्यमानमासीत्। पर्यन्ते चतुष्पञ्चवर्षानन्तरं राष्ट्रेऽत्र स्वराज्यस्थापना बभूव। साम्राज्यवादिनो गौराङ्गाः शासका भारतादस्मात् समुद्रस्य परे पारं पलायन्त। कांग्रेसीयं नवशासनमत्र देशे प्रजातन्त्रात्मकं समभूत्। इत्थं राधारमणशर्मणो नृपतेराश्रयः सेवासम्बन्धश्च मूलतो विच्छेदं भेजे। इदानीं तस्य जीविकावृत्तिसाधनमेकमात्रमध्यापकत्वमेवावशिष्टमभूत्।

अस्ति कस्यचिन्नगरस्य धर्मशाला। तत्रैकस्मिन् कक्षे कश्चिद् ब्राह्मणो बहिस्तः सद्यः समागतः स्वकीयान् सम्भारान् संस्थाप्योपविष्टोऽस्ति। तत्पुरतोऽन्ये केचन नागरिकाः सज्जनाश्च निषण्णा वर्तन्ते। स एष वर्षर्तुः। आषाढमासस्य सायन्तनः समयः। दिने मेघा धाराप्रवाहमवर्षन्, ततः सूर्यास्तमनात्पूर्वमेव हि निबिडतमो घनान्धकारो व्याप्नुवानो बभूव। नवागतोऽसौ ब्राह्मणो यात्री तत्र धर्मशालायाः कक्षे स्थितैरन्यैर्यात्रिभिः सह स्वपरिचयं संस्थापयन् वार्तालापान् कुर्वाणोऽभूत्। सर्वे 'कुतः श्रीमद्भिरागम्यते? का हि ननु भवतां जन्मभूः? कस्मिन् कुले लब्धजन्मा भवान्? जीविकावृत्तिश्च का? नन्वत्रागमने भवतां हेतुः कः, किं वा प्रयोजनम्?' इत्याद्यान् प्रश्नान् पृच्छन्तो जनास्तं ब्राह्मणमालपन्। सोऽपि नवागतो द्विजवरः क्षुत्क्षामकण्ठो यात्राक्लेशैर्नितरां क्लिष्टोऽत्यन्तं परिश्रान्तो जागरणखिन्नोऽतिदीनदीनो विवर्णो मार्गजनितश्रमवशात्पीड्य-

मानसर्वाङ्गोऽपि च कथमपि शिष्टाचारानुरोधात्तैः सज्जनैः कृतानां प्रश्नानामुत्तरप्रदाने सयत्नो धैर्येण शान्त्या च तान् प्रति शनैर्भाषमाणो बभूव ।

अत्रान्तरे किञ्चिदिव स्तिमिते हि वर्षाप्रवाहवेगे, रजनीमुखे प्रज्वलितेषु दीपेषु, रात्रौ प्रवर्तमानायां कश्चित् पण्डितोऽन्यो धर्मशालायाः प्रवेशद्वारमतिलङ्घ्य तमेव कक्षं प्रविवेश यत्र राधारमणोऽन्ये च सभ्या नागरिका मिथो भाषमाणा आसन् । तं कक्षं प्रविष्टमात्र एव स स्फुरिताधरोष्ठः किमपि विवक्षुरिव क्रोधाध्मातो विस्फारितातात्रनेत्रो रोषाग्निना जाज्वल्यमानसर्वाङ्गो घूर्णितमस्तिष्को विभ्रान्ताशेषमनोवृत्तिरिवादृश्यत तत्रोपविष्टैः सर्वैः । यावत्ते सर्वे तस्मै सद्यः समागताय कमपि नमस्काराभिवन्दनादिकं शिष्टाचारं कर्तुं व्यवस्यन्ति तावदेव स मेघगम्भीरया गिरा क्रोधकषायितया च तत्र पूर्वतो वर्तमानं राधारमणपण्डितं प्रतीत्थमूचे—'हा, हन्त ! राधारमण ! त्वमत्रापि मामुत्पीडयितुमागतः ? किमर्थं त्वमेवमद्यापि विनाशाय मम चेष्टसे ? निखिलमपि जीवनं यावत्त्वं कस्माद्धेतोर्मम वृत्त्युपरोधं कुर्वाणः किमर्थं वृथा मां वल्गसि ? तत्र राज्याश्रये वर्तमानोऽपि त्वं मां स्वदुष्कृत्यैर्बाध्यमानोऽभूः पुनरिदानीमत्रागतमपि मां पीडयन्न मे पिण्डं मुञ्चसि ! त्वया पापेनाहं भूयो भूयोऽपकृतो, मुहुरत्रागतस्यापि मेऽपकाराय किमर्थं त्वं मामन्वागच्छः ? मया ते किमनिष्टं विहितं येन त्वं प्रेत इव मामिहाप्यपबाधितुं सन्नद्धोऽसि ? यत्र यत्राहं त्वया पीडितो दूरमपव्रजामि तत्र तत्रैव त्वं मामनुसरन् स्वापकौशलान्मम हितमुच्छेत्तुं प्रयतसे ! राज्ञा बह्वादृतस्त्वं स्वपक्षबलान्मम किं किं नापकृतवानसि ? राज्याश्रये स्थितवता त्वया मम किं किं नापकृतम् ? न जाने त्वया को नु बत भैरवो वैतालः कर्णपिशाचो वा साधितो येन शास्त्रकृताभ्यासं, सदाचारिणं विद्वांसमपि द्विजं मां ते राजा त्वदपेक्षया बहु मेने ? अरे दुष्ट ! त्वमित्थं चेष्टमानः किमिति नो लज्जसे ? दाम्भिक ! प्रचण्डदुर्जनापसद ! असाध्यपाप !! इतस्त्वं झटिति पलायस्व यावन्मम क्रोधाग्नौ शलभ इव भस्मसान्न भवसि । न शृणोसि किं मूर्ख ! जड !! बधिर !!! अपचेतन !!! शीघ्रं पलायस्व स्थानादस्मान्नो चेन्प्राणान्तमपहन्तव्योऽसि मया दुर्बुद्धे !!!

नवागतस्यापरिचितस्य तस्यैवंविधान् विषवदसह्यान् दुरुद्गारान् श्रावं श्रावं तत्र धर्मशालायाः कक्षे स्थिताः सर्वेऽपि सज्जनास्तस्य तदिदमकाण्डताण्डवमवलोकमानाः सहसा महान्तं विस्मयमापेदिरे । उद्भ्रान्तचित्ता विक्लवा इव ते साश्चर्यं समर्षं च परस्परं मुखानि पश्यन्तो यावद् वास्तवीं स्थितिं, तात्त्विकं पूर्वापरसम्बन्धं वा परिचिन्वन्ति, तावदेव राधारमणो गौरवमात्मनो रक्षन् धैर्येणैवमभाषत—'अये कमलाकान्त ! त्वं किं [illegible]मेवं ब्रवीषि ? अहं

तु त्वां मम सहधर्माणं सजातीयं बन्धुं सुहृदं सखायं च मन्ये ! त्वं पुनरत्र माम रुन्तुदैर्वाग्बाणैरपतक्षसि । मया ते किं नु बतापकृतं, विप्रियं वा चरितं येन त्वमत्रागतोऽपरिचिते देशे काले समाजे विषमायां च परिस्थितौ निरर्थकं कलहकाण्डं कुर्वाणो वृथाक्षिपसि माम् ? अहं त्वद्यैवात्र समागतोऽस्मि, धर्मशालायामेवास्यां प्रकल्पितनिवासो विहाय कक्षमिमं नेतः क्वाप्यन्यत्र गतो न च ममात्र केनापि साकं परिचयलवलेशोऽपि वर्तते, न चाहमत्रत्यां स्थानीयां स्थितिं मनागपि तत्त्वतो वेद्मि । सद्योऽत्र समागताय मह्यमतिथये त्वमित्थमकारणं कृतभ्रूभङ्गं कुप्यसि, तन्नावयोर्द्वयोरपि क्षेमावहमनुरूपं च । प्रियमित्र ! न त्वयैवं मय्यनागसि निर्दोषे ब्राह्मणे कुपितव्यं निरर्थकम् । निखिलेऽप्यस्मिन्नगरे त्वमेवैकोऽसि बन्धुः पूर्वपरिचितः, पुनस्त्वमेवेदानीं मह्यं निर्दयं कुप्यसि, तदिदं न ते पाण्डित्यप्रतिभानुरूपम् । मया तु गृहात्प्रस्थानोद्य तेन मनस्येवं चिन्तितमासीद्य-त्वय्यत्र पूर्वतो वर्तमाने ममासनभोजनशय्यानिवासादेः सुविधा भविष्यति त्वामासाद्य चाहं प्रवासेऽप्यत्र न कामपि दुःस्थितिमवाप्स्यामि । ततो विपरीतं त्वं तु स्वकीयं रौद्रभीषणं रूपमाविरकरोः । भ्रातः ! मा त्वं ममात्रागमनं त्वदहिताय सम्भावय । प्रशमं नयस्व त्वमिममात्मीयं क्षोभम् । सचेता भव । देशकालौ विचारय । मैवमात्मनो दौर्बल्यादात्मानं मामिमानपरिचितांश्च सर्वान् सज्जनान् विक्षोभय । यदि मया जानताऽजानता वा किमप्यपराद्धं विप्रियमनिष्टं वा कृतं भवेत्तदा तदपीदानीं त्वया परिस्थितेरनुरोधात् क्षन्तव्यमेवोचितम् । विशेषतोऽत्रापरिचिते नगरे मयि प्रवासमाश्रिते ब्राह्मणजने तव कोपकलहः सर्वथानुचितः । त्वं तु कृतसर्वशास्त्राभ्यासो दार्शनिकोऽसि महापण्डितस्तत्त्वयीत्थं बालिशत्व नोपपद्यते । सखे ! शांतिं लभस्व । किमर्थं मां दुर्वचनैरपभाषसे ? भ्रातः, स्वस्थो भव, मैवमकाण्डताण्डवं कृत्वा विमनायस्व । सर्वेषामपि प्राणिनां हितं परमेश्वरो रक्षति, न कोऽपि कस्यापि हितमहितं वा कर्तुं समर्थः । स्वभाग्यवशादेव हि जगति जीवाः सुखदुःखयोः स्थित्यन्तराणि प्राप्नुवन्ति । तत्र को नु बत कस्याप्यनुकूलं प्रतीपं वाचरितुं सक्षमः ? ततो विहायानुदारां कृपणां चित्तवृत्तिं कथमपि दुर्विनीतं मनः समाधाय शान्तिं लभस्व ।’

**कमलाकान्तः**—‘अरे ! जानेऽहं ते शाठ्यम् ! यावदहं तव जन्मभूमौ राजपरिषदि सदस्यत्वेनास्थां तावत् त्वया मम हितं सदा सर्वदापबाधितं, पुनरधुना त्वमत्रापि ममाहितं कर्तुमागच्छः । धिक् त्वां मूर्खं शठं दाम्भिकम् ! इदानीं त्वं कृतकसौजन्यस्य पाखण्डवादानाश्रयसे ! पूर्णतस्त्वं धूर्ताचार्योऽसि-दिगम्बरः । नाहं त्वयाधुनापकौशलशतैरपि प्रतारणार्हो न च पाखण्डवचनैः

कथमपि वञ्चनीयोऽस्मि ! अहं सम्यगिदमित्थं जानामि यत्तव 'मधु तिष्ठति जिह्वाग्रे हृदये तु हलाहलम् !' यदि चैवं न स्यात्तदा ब्रूहि किमर्थमत्रागतोऽसि भोः ! दुर्जनापसद !! धूर्तशिरोमणे ! ब्रूहि, ब्रूहि शीघ्रं, किमर्थं मामनुलग्नोऽत्रागतोऽसि त्वम् ?'

राधारमण:—'ममेत्थं प्रतिभाति यद्भवान् विद्वानपि व्यवहारज्ञानं सर्वसामान्यमपि न वेत्ति, देशकालस्थितिमपि नांशतश्च जानीते । स्वराज्यात् पूर्वतनीं स्थितिमेवानुचिन्तयन् भवान् तामेवात्मनो मानसीं दुर्धारणां द्रढयसि, परंतु न जानाति भवान् यत्ततोऽधुनावधि कियन्ति परिवर्तनानि, दशान्तराणि स्थित्यन्तराणि च जातानि । भूदेव ! किं नावगच्छति भवान् यदधुना तन्माण्डलिकानां राज्ञां सामन्तवादि प्राचीनं जीर्णं शीर्णं च शासनं पूर्णतो विलयं जगाम । तत्स्थाने नव्यं प्रजातन्त्रात्मकं शासनं देशेऽत्र सर्वत्र प्रवर्तितं भारतवर्षे । क्षणं विचार्यताम्, विचार्यताम् बन्धो ! 'गतास्ते दिवसा हि नः !' प्राक्तनो राजाश्रयोऽपि नामशेषतां जगाम ! पूर्ववर्तिभिर्नरेशैर्ब्राह्मणपण्डितानां पारस्परिका वाञ्छनीयाः सम्बन्धा मूलतो हि विच्छिन्नाः । राजानोऽधुना भ्रष्टराज्याधिकाराः समर्पितसर्वस्वाः पराभवमपमानं चानुभवन्तो गर्हितं कदर्थितं दयनीयं च जीवनं महता कष्टेन स्थितिपालनपरवशं जीवन्ति तदाश्रयवर्तिनो जना मादृशा भवादृशाश्चापि चेदानीं वृत्तिच्छेदादात्मनः कुटुम्बपरिवाराणामुदरदरीपूरणाय यत्र तत्रेतस्ततो बम्भ्रम्यमाणाः स्थानात्स्थानान्तरमाहिण्ड्यमानाः परिभ्रमन्ति । अहमपि चात्र परिवर्तनवात्याचक्रे निपातितः परम्पराप्राप्ताद्राज्याश्रयादपवञ्चितः सर्वानपि प्राक्तनान् सम्बन्धान् त्यक्त्वा नवीनैः शासनाधिकारिभिः स्वजन्मभूमेः स्थानान्तरितोऽत्र 'नौकरी'—प्रसङ्गेनायातोऽस्मि । ममात्र राजकीये विद्यालये संस्कृताध्यापकपदे परिवर्तनमकारि नव्यशासकैस्तत एव हि जीविकावृत्तिमपेक्षमाणः शासनतन्त्रस्याज्ञानुरोधं परिपालयन्नहमपि सर्वसाधारण इवागच्छम् । किमहमन्यत् कर्तुं समर्थः ? मया नौकरी' तु तावत्कर्तव्यैव जीविकाहेतोः ! तद्भगवन् ! परिस्थितेर्वातावरणस्य, देशकालयोश्च यथार्थतां परिपश्यन् न त्वं मयि कोपकटाक्षबाणान् प्रहर्तुमर्हसि । सखे ! मान्यथा मद्वचो गृह्यताम् !'

कमलाकान्तः—'हूं, असत्यमेतत् सर्वं तेऽपभाषितम् ! किं वृथालपसि ? किं मुधात्मनो व्यर्थं सौजन्यवाग्जालं वितनोषि ? यावत्त्वमहं च तव शास्तुः शासने तत्परिषदि राजपण्डितत्वेन स्थितौ, तावत् त्वया सततं ममोन्नतिमार्गोऽवरुद्धो हितं च मे सदापबाधितम् । अधुना पुनस्त्वमत्रागत्य मम सर्वनाशाय

चेष्टमानोऽसि । दुष्टमते ! पश्येदमादेशपत्रम् ! पश्याज्ञापत्रं शिक्षाविभागाध्यक्षस्य, यस्मिन् स्थानादस्मादन्यत्र मम परिवर्तनस्य, मम स्थाने तव नियुक्तेश्चादेशः सुस्पष्टमुल्लिखितोऽस्ति । एतत् सर्वं तवैव षड्यन्त्रविलसितम् । कष्टं भोः !! त्वमिदं सर्वं जानन्नप्यनभिज्ञमिवात्मानं घोषयसि । स्वाकारं प्रच्छाद्य शृगाल इव भीरुस्त्वमत्र बहिस्तः सौजन्यमपनाटयन्न लज्जसे ? त्वमधमाधमः ! दुष्ट, विरमास्माद्दुर्व्यापारात् ! नो चेत्त्वामिहैव गलहस्तयित्वा पादप्रहारैर्हन्तास्मि । स्त्रीजनसामान्यं कैतवमाश्रयन्नपि न कथं लज्जसे ? निर्घृण ! नीचापसद !! हा, हन्त !!! ज्वलतीव क्रोधानलज्वालाभिर्मम हृदयम् !!!'

राधारमणः—'अये, कमलाकान्त ! किमर्थंनिराधारं वृथा मयि दोषान् आशङ्कसे ? नाहमत्रांशतोऽपि दोषभाक् ! यदि च मया त्वत्पक्षे किमप्यपराद्धं भवेत्तदा नाहं तादृशो नीचो जघन्याचारः पामरो वास्मि यदात्मनो दुस्खलनं पापाचारमपराधं वा त्वत्पुरतो न स्वीकुर्यां, क्षमां च त्वां न याचेय, प्रायश्चित्तं पश्चात्तापं वा न कुर्यामन्तर्दग्धः । वस्तुतोऽहमत्र स्थानान्तरप्रकरणे सर्वथा निर्दोषोऽस्मि । तथापि यदि त्वं मामात्मनो हितघातकमेव मन्यसे, तदा सर्वान्तर्यामी सर्वगुहाशयो भगवान् समदर्शी जानीते वास्तवं रहस्यं, षड्यंत्रं वा यद्वा तद्वा तात्त्विकं भूतार्थं मम कूटनीतिविजृम्भितं वा यत्किमपि स्यात् । प्राप्तेऽपि च शिक्षा विभागाध्यक्षस्यादेशे लिखितरूपे कथमहं तत्परिपालनाय तत्परो न भवेयं, विशेषतोऽस्मिन् समये, यदाहं सर्वसाधनविरहितो दीनदीनो वृत्तिविहीनश्चास्मि ।'

कमलाकान्तः—'एतत् सर्वं तु तवात्मकृतानामपराधानामेव दुष्फलं त्वयावश्यमेव हि भोक्तव्यम् ! त्वया किल राज्ञः प्रियेण तत्कृपाबलाभिमानेन मदोन्मदेनास्मत्सदृशानामनेकेषां पण्डितानामाशाभङ्गो मनोरथविघातश्च व्यधायि, बहूनां मानभङ्गेनापि च त्वया दुष्टेनापचेष्टितमनेकशः ! संख्यावतां सज्जनानां विदुषां त्वं वृत्तिच्छेदमकरोः ! राज्ञः शासने त्वयोच्चपदस्थेन ब्राह्मण-पण्डितानां शापाः स्वयमात्मनि धृताः । तत्प्रभावादेवेदानीं त्वं क्लिश्यमानोऽसि ! तदधुना किमर्थमेवं साक्रोशमाक्रन्दसि? भुङ्क्ष्व तावत् स्वकृतापकर्मणां फलमिहैव । अधुनापि च त्वं दुष्कर्मपापाचरणेभ्यो न विरमसे मूढ ! पाखण्डिनां शिरोमणे !! किमर्थमेवं कुर्वाणोऽपि च नापलाज्जसे ? अत्रागतोऽपि त्वं ममापकाराय परिकरं बद्ध्वा सन्नद्धोऽसि । तवागमनसमकालमेवाहं सार्वकारीयसेवातः पृथक्कृतोऽस्मि ! आः, पाप ! दुरात्मन् !! मन्दमते !!! ब्राह्मणाधम !!!'

राधारमणः—'भगवन् ! कमलाकान्त !! साधो !!! मा त्वं मामन्यथा

सम्भावय। न मया जातुचित् कस्याप्यहितमनिष्टं वा मनसा, वाचा, कर्मणा चाचरितम्। परम्परागतसम्बन्धाद्राज्याश्रयस्तु मया पूर्वजानामुत्तराधिकारे लब्धोऽभूत्। यदि च राजा मह्यं समधिकं कृपाभावं धत्तेस्म, दानमानादिकं च मे प्रीत्यार्पयति स्म, तदा तत्र को मे दोषः? स च यदिमां मध्येसभं प्रीत्या समभाषत तदपि कथमहं रोद्धुमशक्ष्यम्? परमेश्वरो वेत्ति सर्वं तत्त्वतस्तथापि यदि त्वं मामेव तवापकर्षे हेतुभूतं मन्यमानः पशुप्रायं कुध्यसि तत्तवैवात्मनो मनोमालिन्यमिति वक्तुमुचितं स्यात्। अधुना त्वमत्र वर्तमानानाममीषां सर्वेषां सज्जनानां साक्षित्वे मां विडम्बयसि तत्तवात्मनो हृदयमलिनताया एव दोषः। अहं भगवत्याः सरस्वत्याः, स्वेष्टदेवस्य स्वगुरोश्च शपथं कृत्वा ब्रवीमि यदयं मयि तवाभियोगो नांशतोऽपि घटते। नाहं ते कोपभाजनमात्मानं समर्थये। अतः परं त्वं यथेच्छं बोद्धुं स्वतन्त्रोऽसि। त्वं तु सर्वजनसमक्षं प्रत्यक्षमेव मामाक्षिपन्न विरमसे। सत्यप्येवं मम मनसि त्वत्कृते नास्त्येव कोऽपि दुर्भावो बद्धमूलः। मानुचिन्तय व्यतीतं सर्वं, मात्र त्वमात्मानं मां चेमान् सर्वान् सभ्यान्नागरिकान् भद्रजनांश्च दुर्वचनैः पीडय। क्षमस्व मां साधो! कमलाकान्त! भगवन्, क्षमस्व!'

कमलाकान्तः—'अरे! जानेऽहं तवापकौशलम्। त्वं प्रच्छन्नदुष्टोऽपि प्रत्यक्षतः साधुतां प्रकटयसि। परमेतत् सुनिश्चितं विद्धि यदितोऽधुना गच्छामि परं प्राप्तकालमहं ते वैरशोधनं त्ववश्यं करिष्य इति प्रतिजाने।'

एवं विधान् दुर्वादान् जल्पन् कमलाकान्तो बहिर्निर्जगाम। तत्रोपस्थिताः सभ्यास्तमिमं सर्वं सम्वादं निशम्य चकितचकिता उद्विग्ना उद्भ्रान्ता इव जोषं तस्थुः।

अथ धर्मशालाया बहिर्निष्क्रान्ते कमलाकान्ते तत्र विद्यमानेषु नागरिकसज्जनेष्वेको राधारमणं पप्रच्छ--- 'श्रीमन्! कोऽसौ कमलाकान्तो यो हि भवन्तमेवं दुर्वादैराक्षिपन् मुहुर्गालीप्रायाणि दुर्वचनानि चाब्रवीत्। भवन्तश्च नूनमतीव तितिक्षावन्तः परमक्षमाशीला यदेवं क्रुध्यन्तमपि तं परमधैर्यमाश्रित्याक्षमन्त। श्रीमतां सहनशक्ति प्रशान्तचेतस्त्वं तस्य च दुर्भाषणं कटाक्षाक्षेपांश्च श्रावं श्रावं वयमतीवाश्चर्यमन्वभवाम। सत्यमेव भवन्तो महाकुलसम्भूताः शालीनाः कृतविद्या महात्मानो यदेवंविधस्यासाध्यदुर्जनस्य कटुवादिनो मर्मच्छिदो दुर्वादान् सर्वजनसमक्षं व्याहृतान् श्रुत्वापि न मनागपि कुपिताः प्रत्युत परां तितिक्षामाश्रित्य स्थितप्रज्ञतां शान्तिं सौमनस्यं चाश्रिताः। अस्माभिस्तु मनस्येवं चिन्तितमभूद्यदधुनात्र

मुष्टामुष्टि दण्डादण्डि द्वन्द्वकलहो महान् भवितेति । परं भवन्तो नूनं महात्मानोऽविचलाः सर्वंसहा यैस्तस्यापभाषमाणस्य दुर्जनस्य कोपाविष्टस्य नृपशोः सर्वमपि दुश्चेष्टाविलसितं सेहिरे । तद् यदि नास्ति कष्टकरं, तदा वयं तद्गतं सर्ववृत्तं तच्चरिताचारं च भवन्मुखाच्छ्रोतुमिच्छामः । कृपया कथयन्तु नः । यतो महत्कुतूहलमाश्चर्यं चास्माकमन्तर्मनसि जायमानमास्ते ।'

राधारमणोऽब्रूत—'सम्मान्या महानुभावाः ! नास्त्येवात्र विषये किमपि विस्तरेण वर्णनयोग्यं तथापि यदि कुतूहलं तदा श्रूयताम्—स एष कमलाकान्तपण्डितो देशान्तरादागत्यास्माकं शासकनरेशस्याश्रये निवसन्नवर्तत मज्जन्मभूमौ । सोऽयमतीवोत्कृष्टप्रतिभावान् सर्वशास्त्रपारङ्गतो विद्वान् वर्तते । तद्वै दुष्यस्य परिचयमाप्य राज्ञास्माकं स्वकीयपण्डितपरिषदि सदस्यत्वेन नियुक्तः । तत्राप्यसौ प्रायेण क्रोधाविष्टो भूत्वा सर्वैरपि चान्यैः परिषत्सदस्यैर्नित्यमेव कलहायमानोऽभूत् । विदुषोऽपि शास्त्रज्ञस्यापि तस्य स्वभावोऽतीव क्रोधनो वर्तते तथापि विद्यानुरागिणास्मच्छासकेन तद्गुणोत्कर्षानुरोधात् कथमप्याराज्यविलयं दुःस्वभावस्याप्यस्य जीविकावृत्तिरौदार्येण परिपालिता । जाते हि देशेऽत्र स्वराज्ये, राज्यानां विलयप्रसङ्गे च सम्प्राप्ते स एष राज्ञा ससम्मानं विश्रामवृत्तिं प्रकल्प्य राज्याश्रयान्निर्मुक्तः । ततोऽसौ नवीनेऽस्मिन् प्रजातन्त्रात्मके शासनेऽत्र स्थानीये विद्यालयेऽध्यापकपदे नियुक्तिमाससाद । परन्तु स्वभावादतीव क्रोधनत्वाद्दुःशीलत्वात्कटुभाषणत्वादहम्मन्यत्वाच्चासौ वरिष्ठाधिकारिणो महोच्चैः पदाधिष्ठितः सम्मानार्हानपि च तृणाय मन्यमानः सदा सर्वदा तैः साकं दुर्वादकलुषितान् कलहानकरोत् । तेन तस्य दुर्व्यवहारेण कुपितैर्दुःखितैश्चाधिकारिभिः शिक्षाविभागाध्यक्षप्रमुखैस्तत्स्थानपरिवर्तनं वा स्थानादस्मात् पृथक्करणं वा समर्थितम् । संयोगस्यायं प्रसङ्गो यद्धि शिक्षाविभागाध्यक्षैरस्मात्त्यागपत्रसमर्पणमाकाङ्क्षितम् । प्रकृत्या द्रोहपरवशत्वादसौ दुर्वादैर्वरिष्ठाधिकारिणोऽपि च भूयो भूयो निनिन्द, तदादेशमपि च नैव पालयामास । तस्मात्तेऽमुं नौकरीतः पृथगकुर्वन् । किमधिकं वच्मि महानुभावाः । भवितव्यता हि बलीयसी ! तैश्च शिक्षाधिकारिभिस्तं पृथक् कृत्वा तत्स्थानेऽहं नियुक्तः । स तु सप्ताहात् पूर्वमेव पृथक्कृतोऽधुना स्वदगृहान् प्रति जिगमिषुर्वर्तते । अहं च तत्स्थानेऽध्यापनकार्यं चिकीर्षुरद्यैवात्र समायातोऽस्मि । अग्रे यत्किमपि बभूव तत्सर्वं भवतां समक्षमेवेदानीं समभूत् ।'

कश्चिदन्यो जनः प्राह—'आश्चर्यं त्वेतत् यत् सः स्वात्मनो वृत्त्युपरोधे भवन्तमेव हेतुभूतं मन्वानो दुर्वचोभिराचिक्षेप ! तद्भवतस्तस्य च मिथः किं नु

वत मनोमालिन्यकारणम् ? यदि कष्टकरं न भवेत्तदात्र विषये मुहुः समधिकं किमपि ज्ञातुं समुत्कण्ठते मनो नः। कृपयोच्यताम् !'

राधारमणः—'श्रीमन् ! कोलाभोऽत्र पिष्टपेषणवच्छ्रुतेनाश्रुतेन वा ? तथापि भवतां जिज्ञासावृत्तितृप्तये यथार्थस्थितिबोधाय च निवेदयामि किंचित्। श्रूयताम्—अस्मद्राज्ञः पण्डितपरिषदि बहवो हि ब्राह्मणपण्डिताः सदस्यत्वेन नियुक्ता आसन्। अहं च कमलाकान्तश्च तत्रान्यतमौ सदस्यावभूव। अस्मत्पूर्वपुरुषाणां राज्ञश्च परस्परं परम्परागतसम्बन्धात्, मम पूर्वजानां राजसेवासम्पादनापेक्षया, स्वयं मम च राजभक्तेर्हेतोर्नरेशो मां बहुना स्नेहसद्भावेनोपलालयन्नासीत्। परन्तु कमलाकान्तोऽसौ पण्डितो द्रोहपरवशः स्वभावदोषान्मयि भूपतेः कृपाप्रवणतां न सेहे। तेनैव तत्र निवसन् समया साकं विरोधं कुर्वाणोऽभूत् परं नरेशोऽन्तर्मनसि सर्वं याथातथ्येन जानानो न मनागपि तद्वचसि प्रतीतिं चक्रे। तत्र तस्य द्रोहिणो नैकमपि षड्यन्त्रं मम किमप्यपकर्तुं सफलतामवाप। तस्मादेवात्रागतं मां प्रति दुरुक्तानि वदन् समाचिक्षेप। द्रोहभावात् क्रोधनत्वादीर्ष्यावशाच्च कमलाकान्तो मयीत्थं विप्रियं प्रतीपं चाचरति। अत्र नास्त्येव किमप्यन्यत् कारणान्तरमन्ततः। सत्यं ब्रवीमि, सज्जनाः! भवद्भिरधुनात्र सर्वं तद्व्यवहारजातं स्वयमेव हि सुस्पष्टमवालोकि। अतः परमत्र भवन्तः सज्जना एव निष्पक्षं निर्णेतुं प्रमाणम्। स एष तस्य स्वभावदोषो दुराग्रहःपूर्वाग्रहो वा ! किमन्यत् ?'

सर्वे तेऽब्रुवन्—'भगवन् ! अवाद्यास्माभिः क्रोधशान्त्योरेकत्र दर्शनं युगपदकारि। भवतो विशालहृदयत्वं प्रशान्तचेतस्त्वं क्षमाभावं न्यायबुद्धिं शीलसंतोषादिकं च विलोक्य वयं भवति महान्तं श्रद्धाभावमास्थां निष्ठां च दध्महे। भवतां क्षमाशीलत्वादेवाधुना शान्तिर्विराजते ! नो चेदत्राद्याधुनैव युवयोर्द्वयोर्ब्राह्मणयोर्मिथो महान् भयङ्करोऽतिरौद्रो भीषणः प्राणान्तिककलहोऽभविष्यन्नाम नूनम् ! स्थाने खलु भवतो ब्राह्मणस्य सैषा शीलवृत्तिः ! साधु, भगवन् साधु !! अक्रोधनस्य द्रोहिणः पण्डितस्य स्थाने श्रीमतामत्र नियुक्तिरस्माकं सर्वेषामत्रत्यानां नागरिकाणां कुशलाय क्षेमाय श्रेयसे च। तदत्र भवन्तोऽत्र नगरस्य विद्यालयेऽध्यापकत्वेन सदा सर्वदा सुखं चिरं तिष्ठन्तु बालांश्चास्माकं पाठयन्तो मोमुद्यन्ताम् !'

एवं वदन्तस्ते सर्वे नागरिका राधारमणस्य गुणानाशंसन्तो भूयो भूयः कमलाकान्तस्य पिशुनत्वं च निन्दन्तो धर्मशालायास्तस्याः कक्षतो निर्गत्य स्वगृहान् प्रति जग्मुः। स एष कमलाकान्तस्य पूर्वाग्रहो नूनं पूर्वाग्रहोऽवश्यं पूर्वाग्रह एवेति भावो वातावरणे सर्वतः प्रससार।

—:o:—

# स्पर्द्धा

## १

ग्रीष्मकालीनोऽतिभीषणो हि मध्याह्नसमयः। मध्याकाशे प्रखरतरैः किरणजालैस्तातप्यमानो भगवान् भुवनभास्करः खदिराङ्गारभीष्मानिवोष्मतेजः प्रकरान् विकिरन् धरायामातपचयान् प्रसारयति। प्रचण्डातपोऽतीवासह्यो जायमानो सर्वतः प्राणिसङ्घानाम्। चण्डांशोः किरणैः परितप्ता धरणी समन्तादुष्णोच्छ्वासान् विमुञ्चन्ती लोहकारस्य भस्त्रेवेतस्ततो रजस्तोमान् समुद्गिरति। सर्वेऽपि च मानवा गृहकोणकन्दरेषु भूगर्भान्तर्गृहेषु निलीनाश्छायाबहुलमनातपं शीतलतमं स्थलमध्युषिता भूयोभूयः शीतलजलचषकान् पेपीयमाना व्यजनानिलैः स्वशरीरोत्थान् प्रस्वेदकणान् दूरमपसारयन्तः कथमपि तमिममतिदुस्सहं मध्याह्नसमयमतिवाहयन्तो दरीदृश्यन्ते। भीषणस्य ग्रीमस्योत्तापतेजःप्रभावाद् भूमिं सर्वतो नितान्तनिबिडा निःस्तब्धता नीरवता च प्रससार। नगरे मार्गरथ्यासु यदा कदा क्वचित् क्वचित् विरलविरलमेव यातायातं जायमानमवलोक्यते। महता प्रयोजनेन विना न कुतोऽपि कोऽपि च कुशलाभिलाषी बहिः संचारस्य साहसं करोति स्म। नीडान्तर्गर्भेषु निलीनाः प्रच्छन्नाः पक्षिसमूहाश्चञ्चूचेष्टामपि कर्तुं न प्रभवन्ति स्म। पिपासाकुलिताः कपोतचटकादयः प्राणिनः शुष्कोष्ठबालुजिह्वा जलान्वेषणाय यदि कुलायेभ्यो बहिर्निर्गमनाय दुस्साहसं धृष्टतां वा कुर्वते, तदा ते तत्कालमेव भास्वद्भास्करस्य प्रखरतमैः किरणैर्दग्धशरीरा लूतानिलाग्निज्वालामालाघातैः प्रतिहताः कृपणान् प्राणान् परित्यज्यावाङ्मुखा मांसपिण्डा इव भूमौ निपतन्ति स्म। पर्वताः सर्वेऽग्निस्नाता इव कर्बुरकाया जडतामापन्ना निष्पन्दमतिष्ठन्। नगरोपकण्ठं गोचरभूमौ तृणचरणं परित्यज्य पशुसमूहाः शाद्वलेषु यत्र तत्र सघनच्छायं वृक्षकुञ्जमाश्रित्यार्धनिद्रिता इव निमीलितलोचना यूथशो रोमन्थनं कुर्वाणा जडप्राया इवालोक्यन्त सर्वंसहाः कठोरक्लिष्टदेहाः सर्वर्तुषु प्रकृतिक्रोडे क्रीडन्तः कृषाणाः श्रमजीविनो ग्रामीणा जना अपि तमिमं ग्रीष्मकालीनमतिप्रचण्डभीषणं मध्याह्नमसह्यं मन्वानाः कंचित् कालमतिवाहयितुं स्वकीयक्षेत्रोपसीम्नि क्वचिद्वृक्षच्छायामाश्रित्यालस्योपहता जृम्भमाणा निश्चेष्टा निर्जीवा इव तस्थुः। नगरवसतौ

देवालयानां, मठमन्दिराणां, महाधनानां वणिजां सुविशालभवनानां चावासस्थलेषु, चत्वरेषु, रथ्यासु च यत्र यत्र निदाघोष्मणो दुर्विषह्याद्दाहादात्मनः प्राणान् रिरक्षवोऽनेके पान्था भिक्षुकादयोजना मध्याह्नवेलातिक्रमणं प्रतीक्षमाणाः सर्वाञ्जागतिकान् व्यवहारान् महत्प्रयोजनीयान् कार्यकलापांश्चागत्या स्थगयित्वा स्थितिपालनपरवशा मध्याह्नकालं क्षपयितुं यत्र तत्र निरुद्धा आसन् । इदानीं प्रकृतिर्विकरालरूपा कालीवातिभीषणरमणीया तदिदं नीरवं निष्पन्दं स्तब्धं जडं मूकं चेष्टाशून्यमिव पार्थिवं जगत् दन्दह्यमाना प्रलयाग्निविस्फुलिङ्गानिव विकिरन्ती बभूव ।

अथैवंविधे महति भीषणे मध्याह्नसमयेऽपि जीवजगतो वैचित्र्यं ननु नैव सर्वात्मना क्रियाशून्यमभूत् । नगरोपसीम्नि, पूर्वस्यां दिशि सरोवरः कश्चिद् व्यराजत । तस्य च सरोवरस्य पश्चिमे तट कोणेऽवर्ततैकः शिवालयः । तत्र शिवालये नाथसम्प्रदायानुयायिनां साधूनां स्थितया सर्वसाधारणैर्नागिरिकैर्मठ इत्यपि चोपनाम व्यवाह्रियत । तत्र मठे द्वादशज्योतिर्लिङ्गविग्रहस्य भगवतः पाषाणमूर्तिः शम्भोः सुविशाला व्यराजत पूर्वाभिमुखम् । मठस्यास्य दक्षिणोत्तरभागयोर्नानादेवीदेवानामुपमन्दिराणि रुचिराणि कल्पितान्यभूवन् । मठस्य पश्चिमे भागे संन्यासिनां साधूनामतिथीनां च निवासायोटजप्रायाः पञ्चश आश्रमाः परिकल्पिता अभूवन् । ते चाश्रमा मृदिष्टिकाभित्तिभिर्गोमयलिप्ताभिः परिवृता आसन् । तत्रैकतो धर्मशालान्यतो गोशाला चासीत् । मध्येमठं सुविशालमतिविस्तृतं प्राङ्गणमपि चाभूत् । मठ एष वृक्षपादपसहितो वातायनगवाक्षयुतो मृद्भित्तिपरिलिप्तसर्वाङ्गस्तृणपर्णकाष्ठवलीभिराच्छादितो निराडम्बरोऽपि च सुतरां सात्त्विकरूपो बभूव । मठस्य सम्मुख महान् सरोवरः पश्चाच्च दशवंशपरिमाणमधो विशाला सुविस्तृता च भूः क्षितिजपर्यन्तं सघनवनराजिभिः परिवृतातितरां प्रसन्ना स्निग्धा शीतला नयनमनोऽभिरामा च कामप्यनिर्वचनीयां शोभां तनोति स्म । मठस्यैतस्य पश्चिमपादमूले सरोवरस्य परीवाहजलाभिषिञ्चितायां भूमावेकं रमणीयमुद्यानमपि च शुशुभे ।

एवं स्थितस्य तस्य मठस्य प्रधानदेवालयस्य षोडशस्तम्भनिर्मिते कलामण्डपे कश्चित् प्रौढवयस्को देदीप्यमानमुखमण्डलो, दीर्घारक्तलोचनो, धवलश्मश्रुकूर्चे दधानो, जटाजूटमण्डितशिरस्कः, काषायाम्बरे परिदधानो, रुद्राक्षमालाकलितकण्ठो, हस्तयोर्द्वयोः प्रकोष्ठयोः पञ्चपञ्चरुद्राक्षवलयधरः, कर्णयोश्च रुद्राक्षसुवर्णमणिकुण्डले दधानो, भस्मत्रिपुण्ड्रलाञ्छितभालपट्टो महात्मा परम्परया राजपूज्यः पूर्वगुरूणामुत्तराधिकारान् भुञ्जानो, महातान्त्रिकाचार्याणां सर्वानपिच दिव्यचमत्कारानलौकिकीः सिद्धीश्च सर्वाः

स्वात्मनि सम्भावयन् काष्ठफलकनिर्मितेऽष्टपादे महति विशाले मञ्चे व्याघ्रचर्मासने साटोपं विराजमानो विद्यते । मञ्चं परितो भूम्यामधस्तात् मृत्तिकाकुट्टिमेषु दर्भासनोपविष्टा मोहान्तस्य तस्य केचनान्तरङ्गभक्ता गुरोर्गुरुपदस्य चानन्तं महिमानमुन्मुक्तकण्ठमुपवर्णयन्तो विद्यमाना वर्तन्ते । भक्तेष्वेषु कश्चन सुवर्णकारोऽन्यो दारुकोऽपरो लोहकारः परो भिल्लोऽन्यः शिल्पी तक्षणकारोऽन्यः शौण्डकीत्येवंविधा जना विद्यन्ते । मञ्चस्यापरस्मिन् पार्श्वकोणे साग्निकं धूमाकुलमग्निकुण्डमास्ते । एकत्र जलकलशोऽन्यत्रान्यान्यानि पात्राणि सुनिहितानि सन्ति । तस्याग्निकुण्डस्य मेखलासु यत्र तत्र धूम्रपानोपयुक्तानि मृक्छङ्कुप्रभृतीनि नानाविधान्युपकरणानि सन्तिष्ठन्ते । ते च सर्वेऽपि भक्तास्तस्य गुरोरभिमुखं निषण्णास्तन्महिमानं तत्तेजस्वितां तत्कृतांश्चमत्कारान् योगसिद्धीश्च व्यावर्णयन्तो भूयो भूयो वाङ्मयोपचारैस्तं प्रसादयन्तो विविधभावभङ्गीभिर्नानाविधमुखमुद्राभिश्चेष्टाभिश्चानन्दपरम्परा अभिनाटयन्तस्तच्चित्तास्तद्गतप्राणास्तमेव गुरुं परमात्मत्वेनाराधयन्त आसन् । मठस्य पार्श्ववर्तिनि प्राङ्गणैकभागे वृक्षच्छायायामेका प्रौढवयस्का महिलान्नादीन् पदार्थान् दलनकण्डनैः परिष्कुर्वाणा, तुषादीन् निस्सारान् सर्वान् शूर्पेण शोधयन्ती, गोवत्सेभ्यो जलतृणादीन्यर्पयन्ती, गोशालाप्रकोष्ठान् सर्वतः सम्मार्जन्या सम्मार्जयन्ती, मठभूमिमेवासंलग्ना समभूत् । तस्याः समीपेऽष्टवर्षदेशीय एको बालकुमारश्च पत्रपुष्पतृणादिभिः क्रीडन्नासीत् ।

अथास्य मठाधिपस्य तस्य गुरोः शिष्यजनेष्वेकः कश्चिदग्निकुण्डस्य मेखलासु स्वपाणी संस्थाप्य, सन्तुलितदेहयष्टिः स्वकीयमूर्ध्वाङ्गमवनमय्य, भस्मनि प्रकीर्णान् कांश्चिदग्निस्फुलिङ्गान् संगृह्य संगृह्य तान् सर्वान् कणशः किलैकीकृत्य गोमयोपलचूर्णं शुष्कतृणपर्णकाष्ठादीन्धनं प्रक्षिप्य स्वास्यपवनेन वारं वारं फूत्कृत्य फूत्कृत्याग्निमुखमुद्दीपयितुं चेष्टते । अन्यत्रैको भक्तो जलपात्रात् मुहुर्मुहुः सलिलबिन्दून् क्रमशोऽभिषिञ्चन् स्वकरतलाभ्यां किमपि वस्तु दृढं निष्पीड्याविलस्य जलस्य बिन्दून् क्रमशो भूमौ निपातयन्नास्ते । अपरतश्चैकोऽन्यो ननु प्रौढवया धृतोष्णीषशिरा धूम्रपानायोपगिनीं मृण्मयीं शङ्कुनलिकां स्वच्छां शुद्धां च सम्पाद्य, तस्याः कटिविवरे चणकाकारामेकां गुटिकां प्रक्षिप्य, सग्रीवाभङ्गमितस्ततो निरीक्षमाणोऽवदत्—

—"अये ! त्वं किमर्थमिति विलम्बसे ! त्वरस्व, त्वरस्व ! आनय तावद्धौतशुद्धं सुपरिष्कृतं 'त्वरितानन्दम्' !!! नन्वियं धूम्रपाननलिकाधुना हसन्ती वाञ्छयति गुरुचरणानां सेवासपर्यां विधातुम् !!!

श्रुत्वैतद्वचनं हेमचन्द्रः सुवर्णकारः सनासाक्षिभ्रूसङ्कोचमाक्षिपन्निव किञ्चित्तिर्यगवलोक्यावदीत्—

"अरे ! त्वं तु व्यर्थमेवाकुलो भवसि ! न जानीषे किं यदयं त्वरितानन्दो ( गांजा ) दिव्यं संजीवनं रसायनमपि सत् यदि चाशुद्धमधौतं सम्यगपरिष्कृतं च संसेव्यतेऽर्द्धशुद्धं वा निपीयते तदा विषमिव व्याधिजनकं विपरिणमतीति।"

ततस्तयोर्द्वयोरपि विवदमानयोर्वचांस्याक्षिप्य दामोदरो नाम दारुकोऽवदत्—

"मा व्यर्थमाक्षिप, यदि त्वमिह मत्तो द्राक्तरं किञ्चिदिहागतोऽसि गुरुचरणसेवायाम् ! मयापि त्वनेकशो धूम्रपानार्पणैस्त्वरितानन्दमिश्रितैर्गुरुदेवाः सन्तर्पिताः। त्वं पुनः किमर्थं वृथा विकत्थसे, चातुर्यं च मुधात्मन आविष्करोषि, वल्गसि च व्यर्थमेवास्माभिः सर्वैः साकम् ?

इत्थं विवदमानयोस्तयोर्दीनानन्दो लोहकारः समागत्य गुरुं च तं महाधीशं शिरसा प्रणम्यासनमेकमुपनिश्य स्वोष्णीषवस्त्राञ्चलात् पुटिकामेकां कर्गलावरणां निस्सार्य तस्मै मोहान्ताय गुरवे सादरं समर्पयामास। तां च पुटिकां स्वहस्ताभ्यामपावृत्य मोहान्तः किमप्यन्तर्विहस्यावोचत्—

"अयि वत्साः ! इमं भक्तेनानेन श्रद्धया समर्पितमपरमपि च त्वरितानन्दं संशोध्य परिष्कृत्य च पूर्वतनेन साकं व्यामिश्रयत। अनेन तावद्धूम्रपानाय साधीयसी मात्रा सम्पत्स्यते । दिवसेष्वेषु त्वरितानन्दोऽपि कलिहतकस्य प्रभावान्निर्विषो भुजङ्गम इव निर्मदतां गतः ! नायं यथापूर्वमाघूर्णयति शिरो, न च मे तथा मूर्च्छयति मस्तिष्कम् ! सत्यं वदामि वत्साः नहीदानीन्तनेन धूम्रपानेनानेन यादवभीष्टं तृप्तिर्भवति। अतोऽद्यास्य मात्रा द्विगुणीक्रियताम् !! प्रोक्तं च शास्त्रकारैराचार्यैः, "अधिकस्याधिकं फलम् !" त्वर्यताम् ! मा भूद्युष्माकं गुरोर्भजनसमाधिभङ्गः !! त्वर्यताम् !!!

ततस्तैस्तत्रोपस्थितैर्भक्तैर्गुरोर्वचनगौरवात् सपदि धौतशुद्धं सुपरिष्कृतं त्वरितानन्दं तमाखुपत्रचूर्णेन साकं शंकुनलिकायामापूर्य प्रखरतरं प्रज्वलन्तमङ्गारकमेकं निर्धूमं नलिकामुखे संस्थाप्य जलक्लिन्नेन वस्त्राञ्चलेन शङ्कोः कटिदेशं सर्वतः समावृत्य तस्मै मोहान्ताय गुरवे सादरं सविनयं सशिष्टाचारं 'प्रसादीक्रियातम्, भगवन् !' इति समर्प्य तन्मुखावलोकनपरास्तस्थुः।

अथैवंविधे देशेकाले पात्रे परिस्थितिजन्ये च वातावरणे त्वरितानन्दं पेपीयमानानां तेषां सर्वेषां गुरुशिष्याणां कुतोऽप्यकस्मात्तत्प्रदेशस्य शासकस्तमिमं मठाभ्याशमभ्याजगाम स च तत्रागत्य ज्योतिर्लिङ्गस्य भगवतो देवाधिदेवस्य शम्भोर्दर्शनादिकं विधाय, देवालयस्य तस्य प्रदक्षिणां कुर्वाणो यावन्मठस्य पश्चात् व्रजति तावत्तत्रोपविष्टां प्रौढां महिलामेकां, तत्समीप एव क्रीडन्तं किशोरं च वीक्ष्य स शासकः किमपि पृष्टवान् । ततो मोहान्तस्य प्रकोष्ठं प्राविशत् । प्रकोष्ठान्तः प्रविष्ठे च राजनि सर्वे ते गुरुभक्ता राजगौरवं परिपालयन्तः ससम्भ्रममुत्थाय तं नृपतिं प्रणम्य कक्षस्य तस्य पार्श्वयोद्वयोः पंक्तिबद्धमतिष्ठन् । मोहान्तस्तु गुरुपदगौरवाडम्बरमात्मनो विभावयन् तत्रैव मञ्चासनमासीनस्तस्थौ । यावत् स राजा तं प्रति प्रणामदिकं शिष्टाचार-माचरति, कुशलक्षेमादिकं च पृच्छन्ति तावत्तेष्वेकेन भक्तजनेनैकां वेत्ररज्जुवलितां काष्ठासन्दीमानीय मञ्चस्यैकपार्श्वे समस्थाप्यत । प्रणामानन्तरं शुभाशीर्वचां-स्युच्चारयन् मोहान्तो राजानमब्रूत,—राजन् ! आगम्यताम् !! स्वागतं ते !!! इदमिह वेत्रासनमास्यताम् !!! चिराद् दृष्टोऽसि भूपते !!! अपि राज्यस्यान्तर्बहिः कुशलं क्षेममनामयं च सर्वेषां प्रजाजनानाम् ? कथमद्य तेऽकस्मादत्रागमनम-भून्मध्याह्नवेलायाम् ?? उच्यतामागमनस्य प्रयोजनं ते । कमर्थं वयं ते करवाम ???"

एवमुक्तवति तस्मिन् मोहान्ते स राजा यावत् किमति वक्तुमुपक्रमते, तावदेव सहसा प्रचण्डो झंझावातस्तीव्रवेगं वोढुमारेभे । कुण्डाग्निसमुत्थिता-भिर्धूमघोरणीभिस्तस्य राज्ञो नेत्रे नितरामापूरिते । मठकक्षान्तर्वर्तिनी सर्वापि भूमिर्भस्मकणैर्विकीर्णा, सर्वतो हीतस्ततो मलिना, धूलिधूसरिता कर्बुरवर्णतां जगाम । अग्नेर्विस्फुलिङ्गा अपि यत तत्रोत्पत्य व्यकिरन् । उद्घाटितद्वारदेशाद-परकक्षान्तरादुत्कृष्टस्य मैरेयस्यातितीव्रतमो दुर्गन्धो यत्र तत्र सर्वत्र प्रससार । तस्य प्रकोष्ठस्य मुख्यप्रवेशद्वारात् वायुवेगोद्धतानि शुष्कपत्राणि तृणानि काष्ठादीनि चान्तः प्रविश्य रजस्तोमरूपाणि सर्वतो निपेतुः । तत्र वेत्रासन-मुपनिषण्णो नृपतिर्यावत् सर्वां तात्कालिकीं परिस्थितिं बोद्धुं प्रयतते, तावदेव केचिद्रजः कणास्तन्नेत्रयो र्निपत्य तमतितरामुद्विग्नतां निन्युः । सोऽन्तर्व्यथाविक्लवोऽपि च भूपतिः स्ववस्त्राञ्चलेनाक्षिणी परिमृज्य कथमप्यात्मनो वास्तविकं भावावेगमन्तर्गूढं निगूहमानो गुरोः शिष्टाचारपरवशो बलान्मौनावलम्बनं कृत्वा कांश्चित् क्षणान् स्थितिमासनमङ्गीकृत्य तस्थौ ।

अथ किञ्चिदिव स्तिमिते प्रभञ्जनवेगे पार्श्ववर्तिनोऽपरकक्षात् सा प्रौढा महिला जलपात्रमेकं दधाना, तेन बालकेन चानुगम्यमाना तत्रोपस्थाय जलं, भगवत्प्रसादं च राज्ञे सादरमुपजहार। मोहान्तो राजानमवदत्—'भगवत्प्रसादं गृहाण, जलं च पीयताम्! बाधते हि भीषणो ग्रीष्मोष्मा! शुष्यन्तीवाङ्गानि!! यदि रोचते श्रीमते तदेतज्जलमतिशीतलं स्वच्छं शुद्धं च किञ्चित् पातुमर्हसि!!!'

राजा भगवत्प्रसादस्य काश्चित्कणिका गृहीत्वोवाच—'न मेऽधुना पिपासा वर्तते। देवदर्शनार्थमागमनेत मयेदानीमेव हि देवालयान्तरे निपीतं जलम्। नाहमधुना जलं पातुं कामये। अधुना त्वहं गन्तुमाकाङ्क्षे! आज्ञापय मां गुरो! वन्दे त्वाम्!!' इत्युक्त्वैव स नृपतिस्ततः समुत्थायासनात् प्रकोष्ठात्तस्मान्निर्गत्य यथायातं तथा निर्जगाम।

राजप्रासादं प्राप्य राज्ञा प्रधानामात्यमाहूयाज्ञापितम्—'मन्त्रिवर! योऽसौ नाथसम्प्रदायस्य मठाधीशो मोहान्तः सरोवरोपकूलं वर्तमाने ज्योतिर्लिङ्गस्य भगवतो देवालये निवसन् वर्तते, स खल्वद्यैव मम राज्यसीमातो बहिष्कृत्य निर्वास्यताम्! सैषा तत्कालं परिपालनोचिता राजाज्ञा!! नात्र विषये कोऽपि किमपि मामनुरोद्धुं प्रार्थनां वा निवेदनमनुनयं विनयं च कर्तुमर्हति! स्वयं भवानपि मां मन्त्रिवृद्धोऽत्र न किमपि प्रत्याख्यातुमर्हति। नाहं मम राज्ये मद्यपान् मादकद्रव्यसेविनो दुराचारान् स्वेच्छाचारान् व्यभिचारिणो व्यसनग्रस्तानेवंविधान् मोहान्तापसदान् पाखण्डानाडम्बरैकशरणान् गुरुत्वेनाभिनन्दितुमुत्सहे! केचन मे शुभेच्छवो लोका बहुवारं मामस्य मोहान्ताधमस्य विषये निन्दावादानवोचुः परमद्य तु मया तद्दुराचारलीला स्वयमेव हि साक्षादवालोकि। द्रुततरं मम देशतो बहिष्क्रियतां पामरोऽसौ दुरात्मा जघन्यः। एवंविधैः कदाचारपरायणैरधर्मैर्विडम्ब्यते सनातनो वर्णाश्रमधर्मः। नेत्थंविधैः शठाचार्यैर्मठाधीशैर्दाम्भिकैर्मम किमपि प्रयोजनम्। यावज्झटिति दुरात्मासौ मम दृष्टिपथादपसरेत्तथा तूर्णं विधीयताम्! परिपाल्यतामेषा राजाज्ञा!! त्वर्यताम्!!!'

मन्त्री:—'यथाज्ञापयसि देवः। इदानीमेव देवादेशोऽयममोघः क्रियते। 'सकृज्जल्पन्ति राजानः!' इति तत्त्वतो जानीतेऽसौ सेवकः। परमत्र साञ्जलिबन्धं क्षमायाचनपूर्वकं किमपि स्तष्टीकर्तुमिच्छति मामकीनं मनः। नाहं तेजोमयस्य देवस्य पुरतो धृष्टतामाचरितुं दुस्साहसं कुर्वे! तद्यदि स्वामी मे प्रश्नच्छेदवसरं तदा किमप्यावश्यकं पृष्ट्वा देवादेशं परिपालयामि। तथाहि—

स हि खलु मठाधीशो मोहान्तोऽशीतिवर्षदेशीयो जराजीर्णदेहो मृत्युं प्रतीक्षमाणो वर्तते। दुर्ध्यंसनार्दितोऽप्ययं यदि देशादस्मान्निर्वास्येत तदापमानव्याघातहतो नूनं मध्येमार्गं क्वचित् पशुप्रायं मरिष्यति। मठस्य चास्य सर्वा व्यवस्था छिन्नभिन्ना भवेन्नाम नूनम्। यदि स देवस्य कोपभाजनं दण्डच एव, ततो निर्दयं कठोरं दण्डं प्राप्नोतु परं तन्मठाश्रितानामन्येषां जीवानां तस्मिन्निर्वासिते का वा दयनीया दशा स्यात्? प्रसीदतु महाराजः! न्यायैकनिष्ठः करुणार्द्रं हृदयः श्रीमन्! तथाविधः कोऽप्यन्यो दण्डो निर्णीयतां येन व्यवहारदृष्टया माभूत् कोऽपि दोषातिशयो व्यवस्थाविच्छेदो लोकापवादश्चेति मे विनम्रं हि निवेदनम्। अतोऽग्रे देवादेशः प्रमाणम्!'

इत्युक्तवति वृद्धे महामन्त्रिणि राजा क्षणमेकं किञ्चदन्तर्गूढं विचिन्त्याह—"मन्त्रिवर्य! कथमपि क्रियताम् नीतिजुष्टं किमप्युपायान्तरं देवालयस्य प्रबन्धादिविषये यथा रोचेत भवते, परमहमस्य दुराचारस्य मोहान्ताधमस्य दुर्मुखावलोकनं न सहे, न सहे, नैव सहे! हुँ, गम्यतामितस्त्वरितमेव, विधीयतां प्रबन्धादिकं, परमयं दुरात्मावश्यं निर्वासनमर्हति। नाहमत्र विषये भवन्मुखादन्यत् किमप्यतोऽग्रे श्रोतुमिच्छामि। मठाश्रयिणामन्येषां प्राणिनां कृते या कापि च व्यवस्था क्रियताम्, परमयं मोहान्तापसदो मा भून्मे दृग्गोचरः। गच्छतु भवानविलम्बं परिपाल्यतां ममादेशः!'

अथासौ मन्त्रिवृद्धः—'यथाज्ञापयति देवः!' इति वदन् बहिर्निर्गतः। स्वमन्त्रालयं गत्वा तत्कालमेव राजाज्ञामिमां लिखितरूपां स्वहस्ताक्षरराजमुद्राङ्कितां प्रासारयत्:—

"स वै खल्वेषो मठाधीशो मोहान्तो राजाज्ञया विज्ञाप्यते यद्धि सोऽद्यैव सूर्यास्तसमयात् पूर्वमेव हि मठस्य देवालयं परित्यज्य निर्गच्छतु। यत्र कुत्रापि ग्रामान्तरं गत्वाज्ञातवासमाचरतु जातुचिच्च राज्ञो दृग्गोचरो भवतु। मठे वसन्ती महिलात्रैव मठे निवसतु। सा मठस्य सर्वां व्यवस्थां सावधानमक्षुण्णां यथापूर्वं परिरक्षतु। तत्रत्यान् गोवत्सादीन् परिपालयतु, सदाचारेण स्वचारित्र्यमभिरक्षन्ती शङ्करस्य भगवतः सेवासपर्यादिकं चरतु। अस्या अष्टवर्षीयो बालको राज्यप्रदत्तेन छात्रवृत्तिधनेनोज्जयिनीं, वाराणसीं, वटोदरनगरं वा गत्वाध्ययनं करोतु शिक्षां च लभताम्। सम्बन्धिता देवस्थानविभागाधिरिणोऽप्येतत्सर्वं सम्पाद्य राजादेशं सम्यक् परिपाल्य मे प्रतिवेदयन्त्विति।"

अथायं रात्र्याः प्रथमप्रहरस्य समयः। राजप्रासादस्य पृष्ठतो वर्तमाने, उद्यानाभिमुखं संस्थिते महत्येकस्मिन् सुविशाले हर्म्याङ्गणे राजा, राजमाता, राजमहिषी, राजकुमाराः कुमार्यो बन्धुबान्धवाः परिचारिकादयः सर्वे सायन्तनं महान्तमुत्सवानन्दसुखमनुभूयात्यन्तमाह्लादं गताः सुखमुपविष्टा मिथो विनोद-वार्तालापं कुर्वाणा हासपरिहाससंकथाभिर्मोमुद्यमाना विराजन्ते।

राजाप्रहृष्टमनाः कुलवृद्धां जननीं प्रसादयन् सादरं ब्रूते —

"अयि, स्नेहशीले ! पूज्ये !! जननि !!! एतत्तु तवाशिषां पुण्यः प्रभावो यदस्माकमिहं राजकुलं सदा सर्वदा दिव्यान् भोगान् स्वर्गीयं सुखं चोपभुञ्जानं स्वकीये सांसारिके जीवने गतिशीलं प्रगतिशीलं सत् स्वगुणानुरूपं मोदमानमास्ते ! मातः ! स एष ते शुभाशिषां परिणामस्तव तपसां शुभोदर्कं सत्फलं यद्वयं सर्वे ते कौटुम्बिकाः सुखिनः समृद्धाः सर्वानन्दसम्पन्नाः सर्वतः सक्षमाश्चाकण्टकं राज्यं कुर्वाणा विजयामहे !'

राजमाता—'वत्स ! एष ते पूर्वजानां दयादाक्षिण्यशौर्यवीर्यसम्पन्नानां तपसां प्रभावो येनैषाचञ्चलापि च राजलक्ष्मीः सततमुपास्ते नः सर्वान् ! सुप्रतिष्ठितस्यास्य ते वंशस्य सतीशिरोमणीनामसूर्यम्पश्यानां क्षात्ररमणीनाम-ग्निस्नानैः, शूरवीराणां महाक्षत्राणां पराक्रमैस्तेषां तपस्त्यागमाहात्म्यैर्वीरकुमा-राणां महाचरितैः, प्रजानां सदाचरणश्रद्धाविश्वासादिगुणैरस्माकं सर्वेऽपि मनोरथाः सफलाः सन्ति। चिरं जीवत यूयं सर्वे वत्साः। पालयत यूयं सर्वे धर्मेण स्वप्रजाः ! चिरायोपभुज्यन्तां त इमे पुण्योपचयप्राप्ता दिव्या भोगाः ! मन्ये, अधुना सर्वेऽपि मम मनोरथाः परिपूर्णाः, सिद्धानि मे सर्वाणि समीहितानि, परिपूर्णतां गता मम सर्वे शुभाभिलाषाः !'

राजा—'अम्ब ! आज्ञापय मामधुना कं ते मनोरथं करवाणि ?'

राजमाता—'वत्स ! हस्तगता इव मे सर्वाः सिद्धयः। न मे किमपि सुखमपहीयते। यदि च मे स्वास्थ्यं सक्षमं भवेत्तदाहं पुनरप्येकवारं देवतीर्थयात्रां कर्तुमुत्सहे। सति सम्भवे, त्वं तादृशं कमपि प्रबन्धं कृत्वा मां तीर्थाटनाय प्रहिणुहि येन ममायमन्तिमोऽभिलाषः सकलः स्यात्। नान्यत् किमपि कामयेऽहम् !'

राजा—'मातः ! अवश्यमाराध्यन्तां तीर्थदेवाः। पुण्याश्रमाश्चावलोक्य-न्ताम्। तीर्थाटनात् पुण्यलाभादतिरिक्तं स्वास्थ्यलाभोऽपि सम्भाव्यते।

तद्यथेच्छं तीर्थाटनं विदधातु जननी ! अहं भवत्याः पूज्यायास्तीर्थयात्रायाः सर्वं प्रबन्धं, शोभनां व्यवस्थां च करिष्ये । मात्र विषयेऽल्पीयसीमपि चिन्तां करोतु भवती कुलाम्बा नः । अत्र विषये श्वो वा परश्वो वा पूज्यां मातरं त्वां पुनर्निवेदयिष्यामि ।'

राजमाता—'नात्र कापि चिन्ता मम मनसि जायते । भवत्सु मातृभक्तेषु सर्वसमर्थेषु वीरेषु पुत्रेषु विद्यमानेषु का नु बत मे चिन्ता स्यात् ? अन्यत् सर्वं तु व्यवस्थादिकं कर्तुं त्वं प्रभुः । त्वत्कृते प्रबन्धे नांशतोऽपि किमप्यपहीयेतेति सप्रश्रयं विश्वसिमि, परमद्यत्वे कलिहतकस्य दुष्प्रभावात्तीर्थेषु तीर्थपण्डितानां, भिक्षुकाणां, याचकानां, तथाविधानामन्येषां चाकिञ्चनानामपराधवृत्तीनां जनानां समूहो यात्रिणस्तथा पीडयति येन श्रद्धावतामास्तिकानामपि चेतो यदा कदा कुण्ठां गच्छति । याचकानां सम्मर्द्दो महान् भवति तेन देवदर्शनं दुष्कर मिव जायते यात्रिणां, विशेषतो वृद्धानां बालानामबलाजनानां मादृशाम् । तीर्थस्थलं गत्वापि मनोभङ्गो भवति तदा पुण्ये कर्मण्यपि च श्रद्धावतापक्षीयते । एवं सति वार्द्धक्यमुपगताया मे कथं योगक्षेमस्य निर्वाहः स्यात्, कश्च मम तत्र सहायः को वा विश्वसनीय आत्मीयो वा भवेत् ? भवन्तः सर्वे मम प्रियाः पुत्रका गार्हस्त्यधर्मे व्यापृता राज्यकार्येषु चातितारां व्यस्ताः कियन्तं कालं मया सह तीर्थाटने सहयात्रित्वेन स्थातुं पारयेयुरिति नाहं जाने । अस्तु, वत्स ! त्वं तथाविधं प्रबन्धं शोभनां च व्यवस्थां विदध्या येनाहं केनचिदनुभववता, सुपरिचितेन, सदाचारवतात्मीयेन, विश्वासयोग्येन च विदुषा निर्देशकेन सहायभूतेन जनेन तीर्थाटनं कर्तुं प्रभवेयम् ।'

राजा—'तथा करिष्ये मातः ! येन मम जनन्याः पूज्यायास्ते यात्राभिलाषो निर्विघ्नं सम्पत्स्यते । मा चिन्ताकुला भवतु भवती । केनचिन्महामण्डलेश्वरेण पत्रव्यवहारं विधाय पुनर्निवेदयिष्यामि विषयेऽत्र भवत्यै !'

इत्थं वार्तालापान् विधाय सर्वे ते राजपरिवारसदस्याः समितिमिमां परिसमाप्य स्व-स्वनिवासस्थानानि जग्मुः ।

४

सैषा वाराणसी । गंगायास्तटे रमणीयः कस्यचित् महामण्डलेश्वरस्य पुण्याश्रमः । तत्रानेके शिष्यनिवहाः संन्यासिनो ब्रह्मचारिणो निवसन्ति । केचनात्र किशोरा वयस्काः प्रौढाश्च मण्डलेश्वरस्य शिष्यप्रशिष्या आश्रमनिवाससुखमनुभवन्तो मोदन्ते । तत्रैकोयुवा परिब्राट् त्रिंशद्वर्षवया आश्रमस्य सर्वा

व्यवस्थां सम्पादयति। स खल्ववकाशसमये तत्र वसतः सर्वानपि विद्यार्थिनोऽध्यापयति। स किल युवा परिव्राट् तत्रत्यैः सर्वैर्जनैरखिलभारतीयसंन्यासिसङ्घस्य प्रधानमन्त्रीति प्रसिद्धया समधिकं परिचितः। विज्ञानचैतन्य इति तस्य गुरुदीक्षाप्रदत्तमभिदानम्। असौ विज्ञानचैतन्यो युवा संन्यासी न केवलं वाराणस्यामेवापि तु समस्तेऽपि भारतीयसंन्यासिसमाजे स्ववैदुष्येण, चारित्र्य-महिम्ना, महामण्डलेश्वरस्य प्रधानशिष्यत्वेन, संन्यासिसङ्घस्य मुख्यमन्त्रित्वेन च यत्र तत्र सर्वत्र सुगृहीतनामधेयः सुतरां विख्यातोऽस्ति। स्थानमाहात्म्येन, कार्यगौरवाच्चायं विज्ञानचैतन्यो महतीं सामाजिकीं सुप्रतिष्ठां, कीर्तिं, यशः, ख्यातिश्चोपभुञ्जानोऽपि च नितरां विरक्तो निष्कामकर्मयोगं समभ्यस्यन् दैवीं सम्पदमात्मनि दधानो योगिजनोचितां दिनचर्यामनुसरति। स सदा सर्वदा ब्राह्मे मुहूर्ते समुत्थाय गंगातीरे शौचस्नानादिकाः क्रिया निर्वर्त्योषसि सन्ध्यामुपास्य, वेदवेदांगव्याकरणन्यायादीनि दर्शनशास्त्राण्यधीतुं नगररथ्यासु निवसतां तत्तच्छास्त्रविशेषज्ञानां महापण्डितानां गृहान् गत्वा शास्त्रविद्याध्ययनाय महान्तं पुरुषार्थं सपरिश्रमं करोति। ततः परावृत्यमहामण्डलेश्वरस्य स्वगुरोः सेवासपर्यासम्पादने स्वात्मानं नियुंक्ते। मध्याह्ने चाश्रमव्यवस्थादिकं करोति। अपराह्णोत्तरं सः संन्यासिसङ्घस्य कार्यालयसम्बन्धीनि कार्याणि सम्पादयति। सायं पुनर्मण्डलेश्वरस्य गुरोः सेवायामुपतिष्टते विज्ञानचैतन्यः। यदा कदा महामण्डलेश्वरेण गुरुणा साकं सभासमाजपरिषदामधिवेशनानि चापि व्रजति, तत्र च भाषणलेखनकार्याण्यपि कुरुते। महामण्डलेश्वरस्य परमं विश्वासपात्रं, मन्त्री, सखा, शिष्यः, कोशाध्यक्षः सर्वमपि स एवासीद् विज्ञानचैतन्यः।

अथैकदा सायं सुखोपविष्टो मण्डलेश्वरो विज्ञानचैतन्यमाह—'वत्स ! विज्ञानचैतन्य !! पश्यैतत् पत्रम्। एकस्य मम परिचितस्य नरेशस्य वृद्धा राजमाता तीर्थयात्रां कर्तुमिच्छति। तस्याः पुत्रो नरेशो मामेकं विश्वासार्हं सदाचारिणं विद्वांसं शिष्यं निर्देशकत्वेन तस्य जनन्या सार्धं तीर्थाटनेषु सहाय-कत्वेन याचते। तदहं त्वामेवात्र कर्मणि नियोक्तुं कामये। अतस्त्वं श्वः प्रातरेव प्रयागं गत्वा कार्यमेतत् सम्पादय। नान्यस्मिञ्जने तादृशो मे विश्वासो यमत्रोत्तरदायित्वपूर्णे कर्मणि नियोज्य निश्चिन्तः स्यामिति त्वयैवैतत्सर्वं कर्तव्यम्। अपि त्वमिदं करिष्यसे ?'

विज्ञानचैतन्यः—'गुरो ! भगवन् !! सर्वात्मनाहं श्रीमच्चरणाधीनः। गुरोराज्ञया प्रसन्नेन मनसा सर्वं सम्पादयिष्यामि। निश्चिन्ता भवन्तु गुरुचरणा विषयेऽत्र। श्वोभूतेऽहं प्रयागं गमिष्यामि।'

मण्डलेश्वरः—'वत्स ! पश्य त्वम् । अवधेहि मम वचनम् ! इदानीं लोकेऽस्मिन्—विशेषतोऽस्माकमत्र देशे भारते—श्रद्धावन्तो नैष्ठिकाः सनातन-वर्णाश्रमधर्मानुयामिनो जना एव विरलविरलाः केचिदेव दृश्यन्ते। तत्रापि वर्णाश्रमानुसारि जीवनं हि केषांचिदेव विलोक्यते। ये केऽपि च विरलेष्वपि विरला विद्यन्ते किलास्तिका देवब्राह्मणातीर्थादिषु श्रद्धाविश्वासभक्तिभाजस्तेऽहि च तीर्थपण्डितानां, वञ्चकानां, धूर्तानां, प्रच्छन्नलुण्टाकानां दुराचारैः प्रतारणैश्छलनाभिरपवञ्चिता दिने दिने नास्तिकत्वमङ्गीकुर्वाणा वर्तन्ते । विज्ञानार्थशास्त्रराजनीतितन्त्राणामद्यत्वे यो हि प्रबलतमः प्रभावो विकाशनाम्ना कान्तिरूपो विजृम्भते,· शिक्षाव्यपदेशाद्यो हि भौतिकोन्नतिप्रधानो भोगवादोऽनुदिनं प्रवर्तमानोऽस्ति तेन हि सर्वमपि धार्मिकं जगद्विपरिवर्तितम् । तीर्थेयु या लोभोपहृतचेतसां ब्राह्मणानां भिक्षुकाणामन्येषां च तथाविधानां दुष्प्रवृत्तयो दुराचारा जायमानाः सन्ति तैः सज्जना आस्तिका अपि लोका धर्मं शङ्कन्ते तृणाय मन्यन्ते प्राचीनं सर्वं तीर्थाटनादिकं कर्मकाण्डम् । 'कुहुकचकितो लोकः सत्येऽप्यपायमपेक्षते !' अत एव ह्यीदानीं दम्भाचार्याणां दुश्चरित्रैः संन्यासि-समाजस्तिरस्क्रियते, पण्डितवर्गो देवयात्राप्रसङ्गोऽपि च सर्वसाधारणैरपमन्यते, निराद्रियते च । अतो वत्स ? त्वया प्रयागं गत्वा तथा प्रबन्धादिकं सम्पाद्यं येन सा राजमाता सानन्दं सकुशलं च तीर्थयात्रासुखमनुभूय प्रसीदेत् । अस्माभिरत्र स्वसमाजस्य प्रतिष्ठायेक्षया धर्मापेक्षया च तथा विधेयं येन प्रजानां मनोभावा-देव तीर्थब्राह्मणेषु मा कालुष्यं स्पृशेयुः । गच्छ त्वं वत्स प्रातरेव प्रयागम् । साधय तदेतन्मे प्रियं कार्यम् । वयं संन्यासिनो निःस्पृहा अपि सर्वसमर्थाः । 'कौपीनवन्तः खलु भाग्यवन्तः !' नास्माकं धनवैभवादिकं च किमप्यपहीयते । परमेश्वरस्य कृपयाद्यत्वे वयं लक्षाधिकानामपि धनविभूतीनां प्रभवः । तस्मात्त्वं दशपञ्चसहस्ररूप्यकाणि त्वया सह नयस्व ! सत्यावश्यके त्वमुन्मुक्तहस्तं धनव्ययं कृत्वापि साधुसमाजस्य प्रतिष्ठानारूपं सर्वं कुर्याः । अपि त्वमेतत् सर्वं मदुक्तं परमार्थतो वेत्सि, वत्स ? बुध्यसि च किमर्थमहमेतत् सर्वं भूयो भूयस्त्वामकथयमिति ??"

विज्ञानचैतन्यः—"आम्, भगवन् ! गुरो !! जानेऽहं श्रीमच्चरणानां हृदयगतं सर्वं तत्त्वतो वेद्मि च देशकालपरिस्थितिम् । तद्यथाज्ञापयन्ति ममाचार्यचरणास्तथैवाचरिष्यामि । "

मण्डलेश्वरः—"ननु त्वं त्वया सह मामकीनं तन्मृत्तरयानं चापि नयस्व युद्धि नयपालनरेशेण मे गतवर्षे समर्पितम् । यद्यपि तद्यानं महार्घमस्तित्तसु-

वर्णपण्डितमतीव दुर्लभं वस्तु तथापि प्रसङ्गेऽस्मिन् तस्योपयोगः स्थाने खलु ! तत्र गत्वापि च यदि त्वं किमपि साहाय्यं मत्तोऽपेक्षेथास्तदा त्वरितं मां सूचय । अहं सर्वमत्र स्थितोऽपि प्रहास्यामि । मम जीवने लक्षशः कोटिशश्च धनवन्तो राजानः शासकाश्च मत्सम्पर्कमागताः परमतः पूर्वं न कदापि तथा चिन्ताकुलोऽहमभूवं यथाधुना भवामि । परिवर्तितेऽस्मिन् समये वर्णाश्रमसनातनधर्मस्य, साधूनां, ब्राह्मणानां, समाजस्य कृत एव मे स एष प्रयत्नस्तदेतन्मम ममत्वम् । तस्मात्त्वां प्रति मयैतत् सर्वं समुपदिष्टम् । तद्गच्छ त्वं मे प्रियवत्स ! साधय तावन्मनोयोगेन कार्यमेतत्सर्वम् । शुभास्ते सन्तु पन्थानः !"

५

प्रयागस्य बाष्पशकटीविश्रामस्थलम् । रेलगन्त्र्या आगमनं प्रतीक्षमाणा अनेके मनुष्यास्तत्र कालं क्षपयन्तो विद्यन्ते । जातायां वेलायां रेलगन्त्री समागत्य नियतस्थाने विरराम । प्रथमकक्षान्तरात् राजकीयाः केचन जना नीचैरवातरन् । भूमौ पदं दधतामेव तेषां प्रयागनगरवासिनः केचिन्नागरिकाः, संन्यासिनो, ब्रह्मचारिणो, गृहस्था, महिलाश्च स्वहस्तेषु पुष्पमालाः प्राचुर्येण नीत्वा तत्कक्षसमीपमागत्य—'विजयताम् सनातनो वर्णाश्रमो धर्मः !' इत्युद्घोषपुरस्सरं समवेत्य तस्थुः । दासीभिः सहैका वयोवृद्धा विदुषी क्षात्रमहिला रेलगन्त्र्याः समुत्तीर्य यावद्भूमौ पद निदधाति तावत्तस्या उपरि पुष्पाण्यवर्षन् । सा किञ्चिद्विस्मितेव यावदितस्ततो दृष्टिं प्रसार्यावलोकते तावदेव कश्चित् युवा परिव्राट् सम्मुखमागत्य तामब्रोचत्—'मातः ! काशीधामस्थमहामण्डलेश्वरमहाभागानां दार्शनिकसार्वभौमानां संन्यासिसङ्घस्य सभापतीनां शिष्योऽहं विज्ञानचैतन्यनामा तदाज्ञया श्रीमत्या यात्राप्रसङ्गेऽत्र सहयात्रित्वेन निर्देशकत्वेन च नियुक्तः सम्प्रति समुपस्थितोऽस्मि । तदेतन्मम परिचयाय गुरुचरणैः प्रदत्तं परिचयपत्रम् । प्रत्यक्षं करोतु भवती राजमाता । श्रीमत्या निवासायात्र नगरे सर्वं प्रबन्धादिकं सुव्यवस्थितमास्ते । तदागम्यताम् नगरं गच्छामो वयम् ।' इत्युक्त्वा तां राजमातरं सहनीत्वा सर्वैः सहचारिभिर्जनैः साकं बाष्पशकटी विश्रामस्थलात् बहिर्गन्तुमुपचक्रमे ।

अथ सा राजमाता बहिराजगाम तावदेकं स्वर्णमण्डितं मृत्तरयानमागत्य तस्याः सम्मुखमुपस्थितम् । सा च तदारुरोह. तस्याः सहयात्रिणः सर्वेऽपि चान्यान्यानि मृत्तराश्वरथयानानि समुपाविशन् । राजमातुः सहानीतानि सर्वाणि सम्भारोपस्करणानि चानीय परिव्राडनुयायिभिर्जनैर्यानेषु सावधानं सुरक्षितं च संस्थापितानि । यदा राजमातुर्मृत्तरयानं गमनाय गतिशीलमभवत्

तदैव तामानेतुं समागतानाम् लोकानां समूहो जयघोषानुच्चारयन् गव्यूतिपर्यन्तं भजनकीर्तनस्तुतिस्तोत्राणि प्रपठंस्तनुवव्राज। तमेतं सुविशदं महद्भव्यं भद्रं राजसिकं स्वागतमवलोकमाना वृद्धा राजमाताशातीतं महान्तं जनयूथं तदाज्ञावशंवदं विभाव्यातीवानन्दसन्दोहं, महान्तं सम्मानं चात्मनो भाग्यं धन्यधन्यं मन्वाना भृशं मोमुद्यमाना परां तुष्टिमन्वभूत् अतीव प्रसन्ना सा राजमाता स्वमृत्तरयानचालकस्य समीपेऽग्रासनमुपनिषण्णं तं युवानं परिव्राजं हर्षोद्रेकान्मनोभावान् गोपायितुमपारयन्ती बभाषे—

'भगवन्! संन्यासिप्रवर!! मत्कृतेऽत्रभवद्भिर्भवद्भिर्बहुश्रमोऽङ्गीकृतः। तीर्थयात्रामागताया मे श्रीमन्तो यां बह्वादरां सम्भावनामाचरन्ति तयाहं लज्जे। कथमहं महामण्डलेश्वरमहाभागानां तच्छिष्याणां सुयोग्यानामानृण्यं गमिष्यामि। बहु कृतं भवद्भिः! यत्र तीर्थेषु धर्मध्वजाः केचन धूर्ता वञ्चका वसन्ति तत्रैव भवादृशाः परोपकारपरायणाः श्रद्धया सज्जना महात्मानोऽपि च विराजन्ते, इति विचिन्तयन्त्या मम पूर्वाग्रहो दुर्धारणा चेदानीं व्यपगतेवाभाति। महत्सौभाग्यं मे यत्तीर्थदेवैः श्रीमत्सदृशाः सज्जनाः प्रेषिताः। मन्ये, सेयं मम तीर्थयात्रा सानन्दं सकुशलं च सम्पत्स्यते नूनम्।'

एवं वार्ताविनोदं कुर्वतां तेषां यानानि किलैकं भव्यं भवनं प्रापुः।

राजमाता दासीजनैः साकं मृत्तरयानादवतीर्य तद्भवनं प्राविशत्। तत्र सर्वेऽपि कक्षा राजोचितैः सर्वैः सम्भारैरुपस्करैः साधनसमूहैः सुसज्जिताः शृङ्गारिताश्चासन् अन्तः प्रविश्य सा तत्रत्यां व्यवस्थां प्रबन्धादिकं सर्वविधा राजसीः सुविधाश्चालोक्य स्वराजप्रासादादप्यधिकं तुतोष शौचस्नानसन्ध्यादीनि नित्यकृत्यानि कृत्वा विज्ञाचैतन्यस्य तत्त्वावधाने नियुक्तैर्भृत्यैः संसाधितं भोजनं कृत्वा यात्राश्रमापनोदनाय विश्रामं कृतवती पुनः प्रबुद्धा स्वस्था प्रसन्ना सती सा विज्ञानचैतन्येन सह मन्त्रणां कृत्वा क्रियमाणाया यात्रायाः कार्यक्रमं स्थिरीकृत्यादौ प्रयागे, ततः काश्यां, सारनाथे, गयायां, हरिद्वारादिषु चान्यान्यतीर्थधामसु तत्तत्तीर्थस्नानानि देवदर्शनानि च विधाय सकुशलं सानन्दं च पुनः काशीमाजगाम।

तीर्थाटनं कुर्वत्या राजमात्रा यत्र तत्र सर्वत्र तीर्थक्षेत्रेषु संन्यासिप्रवरस्य तस्य श्रीविज्ञानचैतन्यस्य सुमहान् प्रभावः, प्रतिष्ठा, प्रतिपत्तिः, सम्मानो, वैदुष्यं, सच्चरित्रता च प्राप्तकालं समनुभूता। तदनुभावात् सा भृशं तुतोष, मनोवाचामगोचरां कामपि मुदं प्राप। सा सर्वात्मना विज्ञाचैतन्यस्य वशवर्तिनीवोपकारक्रीतेवाभूत्। सा मनस्येवमचिन्तयत्—

"यस्य महामण्डलेश्वरस्यैवं विधा विद्वांसः सदाचारिणः शिष्याः, येषां किलैवंविधः सुमहान् प्रभावो, येषां देशे सर्वत्रेदृशी पूजा, प्रतिष्ठा, समादरः, स महात्मा स्वयं कीदृक् प्रभावशाली, तेजस्वी महिममहीयान् स्यात् ! संन्यासिनो ब्राह्मणान् तीर्थपण्डितान् साधुसमाजं प्रति च यो मे पूर्वाग्रहोऽन्यथाधारणा चासीत्तन्मे मोहविलसितमज्ञानविजृम्भितमेवाभूत् । तदधुना मयात्र समागतया विज्ञानचैतन्यस्य गुरवो महामण्डलेश्वराचार्या अवश्यमेव द्रष्टव्याः"

इत्थं विचिन्त्य तया विज्ञानचैतन्येन परामर्शं कृत्वा महामण्डलेश्वरस्य दर्शनार्थं तदाश्रमगमनं विनिश्चितम् ।

६

काशीक्षेत्रम् । गंगायास्तीरोपकण्ठं महामण्डलेश्वरस्य भव्यं हि प्रासादोपममाश्रममन्वभवम् । अद्य तावद्राजमातात्रैवातिथ्यं स्वीकरिष्यतीति कृत्वा महामण्डलेश्वरस्याज्ञयाचार्यवर्यस्य संन्यासिवर्गस्य कुलपतेः सर्वे शिष्यप्रशिष्या धनिका भक्ताश्छात्राश्च क्षात्रराजमातुस्तस्याः सम्भावनार्थं प्रातरेवातिथ्यस्ता नानाविधान् समुपचारसम्भारान् सज्जीकुर्वन्तो विलोक्यन्ते । आश्रमोद्यानस्य मध्यभागे भगवतश्चन्द्रमौलीश्वरस्य मन्दिरप्राङ्गणे बहवो नागरिका जनाः समुस्थिता दृश्यन्ते । क्वचिद्विद्वांसः पण्डिताः शास्त्रार्थं कुर्वाणाः प्रखरतरधाराप्रवाहं संस्कृतभाषया भाषन्ते । क्वचिन्महाभारतभागवतवाल्मीकिरामायणोपनिषदां पारायणानि कुर्वन्तो विलसन्ति महापौराणिकाः । क्वचिद्रुद्राभिषेकं कुर्वाणा द्विजातिपरिवृढा वेदाध्ययनं कुर्वते । क्वचिद्ब्रह्मचारिणः शिवविष्णुदेवीसूर्योपासनापरायणाः स्तोत्रमन्त्रान् पठन्ति । क्वचिद्धोमकुण्डेषु होमाहुतीः समर्पयन्तऽध्वर्यवोऽग्निदेवमाराधयन्ति । क्वचित् सस्वरं चतुर्वेदमन्त्रानुच्चारयन्ति वैदिकाः। क्वचिद्गायका भगवत्कीर्तनानि गायन्तः पीयूषसरसां सङ्गीतसुधाधारां वर्षन्तः शोभन्ते । क्वचिद्धूपदीपनैवेद्यपत्रपुष्पोपचारैर्देवाः पूज्यन्ते । क्वचित् सङ्गीताचार्याः शास्त्रीयं सङ्गीतं सतालस्वरालापमाविष्कुर्वन्तो मोदन्ते । वाराङ्गना नृत्यन्ति, हासपरिहासैरानन्दोद्गारैः सर्वतो मुखरित इवद्याश्रमाम्याशः कामपि नवीनामेवाभूतपूर्वां शोभां विधत्ते सर्वतः सात्त्विकमेवाभाति तदाश्रमस्य वातावरणम् ।

यज्ञवेद्याः समीपे दर्भासनमुपविष्टो विराजते महामण्डलेश्वरः । त्यागभावात् सात्त्विकवृत्तेर्वैराग्यात् राजसिकभोगनिर्व्यपेक्षोऽकिञ्चनोऽपि काषायवस्त्रकौपीनमात्रपरिग्रहोऽपि चाडम्बरशून्योऽपि स महात्मा महामण्डलेश्वरो वेदवेदान्तन्यायव्याकरणशास्त्रेषु अनन्यसाधारणीं प्रतिभां दधानोऽपि बालवत् सरलहृदयो

निःस्पृहोऽपि महाप्रभावो देहात्मभावरहितोऽपि च साक्षाद्बृहस्पतिरिव सौम्याकृतिः प्रशांततेजाः स्थिरचित्तो मितभाषी स्वस्थः प्रसन्नो निर्विकल्पे समाधावात्मनोऽशेषा वृत्तीः प्रविलापयन्निवातितरां शांतिमनुभवन्निषण्णोऽभूत् ।

तावदेव विज्ञानचैतन्येनोपदर्श्यमानमार्गा राजमाता महामण्डलेश्वरस्याश्रमद्वारमाजगाम । तत्रोरस्थितैः सर्वैरपि जनैराश्रमद्वारमागत्य जयघोषपुरस्सरं वाद्यध्वनिसहितं मङ्गलाचारविधिना राजमातुः स्वागतं व्यधायि । प्रविश्य चाश्रमं सा चन्द्रमौलीश्वरस्य दर्शनं कृत्वोद्याने प्राकृतजन इव सर्वान् देवान्, भूदेवान्, सभ्यान् नागरिकान् सविनयं सादरं च प्रणम्यान्ते मण्डलेश्वरस्याभिमुखं गत्वा साष्टाङ्गप्रणिपातपूर्वं तच्चरणौ ववन्दे । सोपचारं शिष्टाचारविधिं निवर्त्य सा राजमाता महामण्डलेश्वरेण सङ्केतेन निर्दिष्टमेकमूर्णासनमुपविवेश । मध्याह्नं यावत् तत्र स्थितायास्तस्याः सर्वा धार्मिक्यः क्रियाः प्रावर्तन्त । दानदक्षिणानन्तरं प्रसादवितरणमनु चोत्सवः सानन्दं समाप्तिं गतः ।

अथ मध्याह्ने महामण्डलेश्वरस्यान्तरङ्गैः प्रमुखैः शिष्यैः साकं भगवत्प्रसादं गृहीत्वा सा राजमाताश्रमस्य तस्यैकभागे राजोचितैः साधनैः सम्पन्ने महाप्रकोष्ठे शय्यासनकुट्टिमचित्रतिरस्करिणीविभूषिते विश्रामं कर्तुमगच्छत् । स्वयं महामण्डलेश्वरो विज्ञानचैतन्यादयोऽन्तेवासिनः सर्वे यथेच्छं स्वदिनचर्यानुसरणे प्रवृत्ताः ।

अथ सायं तीर्थदेवानां दर्शनानन्तरं भागीरथ्यास्तटघट्टेषु भ्रमणं, नौकाविहारं, श्रीकाशीविश्वेश्वरान्नपूर्णाकालभैरवादीनां दर्शनानि कृत्वा प्रतिनिवृत्तायां तस्यां राजमातरि सायन्तनं भोजनं परिसमाप्य चन्द्रमौलेर्देवालयस्यैकदेशे महामण्डश्वरो, राजमाता, विज्ञानचैतन्यश्च सुखमुपविष्टा मिथो वार्तालापं कुर्वन्ति—

**राजमाता**—'भगवन् ! तपोनिधे !! श्रीमच्चरणानामनुग्रहात्, श्रीविज्ञानचैतन्यस्य परिश्रमान्मामकीनासौ तीर्थयात्रा सकुशलं परिसमाप्ता । अधुना मां ग्रहान् प्रति प्रस्थानुमाज्ञापयन्तु महाभागाः । यद्यपि मया स्वजीवने पञ्चवारं तीर्थाटनयात्रा विहिता परमस्यां खलु यात्रायां मया यो हि धर्मलाभो लब्धो, यद्धि तीर्थदेवता नांदर्शनसुखमाप्तं, साधुसंन्यासिनां, महात्मनां, विदुषां च सत्सङ्गोऽनुभूतस्तत्सर्वं भवत्कृपाप्रसादेनैव सम्पन्नम् । धन्या भवादृशा महात्मानो धन्याश्च विज्ञानचैतन्यसदृक्षा भवच्छिष्या येषां कृपाकटाक्षैर्मत्सदृशा अधमा जीवा अपि पापपङ्काद्विमुच्यन्ते । महानेवोपकारभारो मयि गुरुचरणानाम् ! अनेक-

जन्मजन्मान्तरेष्वपि नाहं भवतां तमिममुपकारभारं, दयादाक्षिण्यं, निर्व्याजं स्नेहानुबन्धमहैतुकीं कृपापरम्परां, महतीमनुकम्पां च विस्मरिष्यामि ! क्वाहमधमा, पापा भवदुपकाराणामानृण्यं विधातुम् ! भगवन् ! अस्यां यात्रायां मयायद्दृष्टं, यच्छ्रुतं, यच्चानुभूतं, तेन सनातनवर्णाश्रमधर्मं प्रति, साधुसंन्यासि-ब्राह्मणपण्डितान् प्रति च यो हि मे पूर्वाग्रहोऽनुदारा विचारा, अन्यथा भावना, दोषदर्शनबुद्धिश्चाभूत्ताः सर्वा मम क्षुद्रता विलयं जग्मुः। मम विचारसरणीषु महत् क्रान्तिकारि परिवर्तनमजायत। पुनर्जन्मैवात्मनो मन्येऽधुना।'

मण्डलेश्वरः—'देवि ! अवितथं ते वचः। भवती च महाकुलप्रसूताभिजनवताम् क्षात्राणां संस्कारा एव तादृशाः। भारतेऽत्रदेशे पुरुषापेक्षया देव्य एव हि समधिकमास्तिक्यभावापन्नाः सन्ति। साध्वीनां महिलानामन्तः करणे यो हिसहजश्रद्धाविश्वासभावस्तदाधारेणैव जीवत्यसौ वर्णाश्रमसनातनो धर्मः। वर्द्धतां ते कुलम्, पुत्रपौत्रैःप्रपौत्रैश्च चिरञ्जीवानुभव त्वं धर्माचरणैः सकलमपि राजभोगसुखम् ! धर्मलाभश्च ते सदा सर्वदा भूयात् !'

राजमाता—'भगवन् ! गुरो !! सत्याः सन्तु ते शुभाशिषः। भवतां तदिदं महद्वैभवं पश्यन्त्या मे नास्त्येवाल्पमपि सामर्थ्यं तादृक् येनाहं श्रीमच्चरणयोः किमपि समर्पयितुं सक्षमा स्यां परमेतत् किञ्चिदतीवाल्पाल्पं धनं श्रीमच्चरणयोर्निवेदयानि, तत् कृपया स्वीकृत्यानुगृह्यताम्। नात्र गुरुचरणैः किमपि प्रत्याख्येयम्। नाहमस्मि समर्थान्यत् किमप्युपाहर्तुं गुरुचरणेषु !!

(इति निवेदयन्ती राजमाता सपुष्पहारं सश्रीफलं च पञ्चसहस्ररूप्यकाणि, फलानि, वस्त्राणि च मण्डलेश्वरायार्पयति)

मण्डलेश्वरः—'देवि ! राजमातः !! श्रद्धया समर्पितं धनं परिगृहीतुमेव युज्यते, परं त्यक्तसर्वपरिग्रहस्य संन्यासिनो धनेन किं प्रयोजनम् ? तथापि श्रीमत्या अनुरोधात्—आश्रमस्थितेः परिपालनार्यैतत् विज्ञानचैतन्याय समर्पय। स एव ममाश्रमस्य व्यवस्थापकः, स एव संन्यासिसङ्घस्य महामन्त्री, स एव हि मम प्रधानः शिष्यो धर्मपुत्रो वोत्तराधिकारी वा।'

इत्युक्त्वा मण्डलेश्वरेण सङ्केतेन तद्धनं स्वीकर्तुं प्रेरितो विज्ञानचैतन्यः। स च तदादायाश्रमान्तर्निधातुं गतवान्।

राजमाता—'भगवन् ! गुरो !! स एष विज्ञानचैतन्यः सत्यमेव हि श्रीमदनुरूपोऽन्तेवासी। मासमेकं यावत् तीर्थेषु पर्यटन्त्या मया निपुणं परीक्षिता-

स्यान्तर्वृत्तिः । सोऽयं विद्वान् विलक्षणबुद्धिः कर्मठश्चतुरः कामक्रोधादिभिर्विकारैरसंस्पृष्टोऽतीव निर्मलवृत्तिः सात्त्विको निश्छलश्च प्रतीतः । एतादृशो निष्ठावांस्त्यागी स एष शिष्यस्ते नूनं भवत्प्रतिमूर्तिरेव मतो मे । तस्मिन् यदि भवतां विश्वासो निष्ठास्था प्रीतिर्वात्सल्यं वातितरां वर्तते तत् स्थाने खलु । विज्ञानचैतन्यस्य व्यहारेण, शिष्टतया, विद्ययाचरणैः कर्मकौशलेन, प्रबन्धपाटवेन चाहमतीव प्रीता संतुष्टा चास्मि । पुत्रवत् स्निह्यति तमेतं मे मनः । तस्य यावती प्रशंसा क्रियेत सा तद्गुणानुरोधादल्पैव !'

**मण्डलेश्वरः**—'सत्यमभिहितं भवत्या । स खलु तादृश एव । अहं च तं प्राणेभ्योऽप्यधिकं स्निह्यामि । स मे परमं विश्वासपात्रम् । स विद्वत्तया, चारित्र्येण, कर्मण्यतया चात्र देशे—विशेषतः संन्यासिसमाजे—सुतरां प्रतिष्ठितः । प्रजाजनाश्चापि तं बह्वाद्रियन्ते । अहं भवत्याः कथनात् बहु सन्तोषमनुभवामि यत् सः श्रीमत्या यात्राप्रसङ्गे समधिकं साहाय्यं समाचचारेति ।'

**राजमाता**—'भगवन् ! अहं जाने यत् संसारं परित्यक्तवतां साधूनां संन्यासिनां तपस्विनां च कुलजातिगोत्रादिविषये किमपि प्रश्नादिकरणमनुचितं भवति तथापि सहवासपरिचयात् गुणवैशिष्ट्यात् कर्मकौशलात् शोभनादाचारात् शीलसौजन्याच्च विज्ञानचैतन्यस्य जन्मस्थानकुलादिविषये च भवन्तं किमपि प्रष्टुमिच्छति मे मनः । यदि च स्वामिचरणानामत्रभवतां भवतां नातिखेदकरमिव भवेत्तदा तत्परिचयं मह्यं प्रयच्छन्तु । यतोऽस्माकं राजधान्यां केचन मठा देवालया महान्ति मन्दिराणि च विद्यन्ते येषां व्यवस्थानिर्वाहार्थं जीविकावृत्तिरपि राज्येनोपकल्पिता विद्यते । परमेतत् सखेदं निवेदयानि यत्तत्र न कोऽपि विद्वान् सदाचारी वा विद्यते साधुर्यो हि स्वगुणैः राजप्रजानां हिताय धर्मोपदेशं कर्तुं सक्षमः स्यात् । तेषु स्थानेषु परम्पराप्राप्ता ये केऽपि सन्त्यपि तथाकथिता साधवो मोहान्ताः संन्यासिनो वा ते सर्वे प्रायेणाधिकारबुभुक्षवो दुराचारा व्यसनग्रस्ता दाम्भिका एव वर्तन्ते । मत्पुत्राश्च सर्वे नवशिक्षादीक्षासम्पन्ना नवीनाचारविचारानुयानिनः पुनस्तादृशांश्चरित्रभ्रष्टान् बाबापदवाच्यान् दर्शं दर्शं नास्तिकत्वं भजन्तो वर्णाश्रमसनातनधर्मादपरज्यन्ते । तस्माद्यदि तत्र विज्ञानचैतन्य इव कोऽपि सदाचारी विद्वान् संन्यासी निवसेत्तदा मे मनसि महानानन्दो जायेत, मम वृद्धायाश्च धर्मलाभः सत्सङ्गसुविधा च भवेत् । तेनेदं प्रष्टुमुत्कण्डते मदीयं मनः ।'

**मण्डलेश्वरः**—'श्रीमति ! राजमातः !! विज्ञानचैतन्यसम्बधि यावदहं जाने, तावत्त्वामहं ब्रवीमि । श्रूयताम् स एष विज्ञानचैतन्यः पञ्चविंशतिवर्षेभ्यः

पूर्वमत्र काशीं समाजगाम । तदानीं सः केवलमष्टवर्षदेशीयो बालक आसीत् । आदौ सोऽत्रास्माकं संन्यासिसमाजस्य छात्रालये विद्यार्थित्वेन न्यवसत् । स च स्वजन्मभूमेः शासकद्वारा प्रदीयमानां दशरूप्यकमितां छात्रवृत्तिं लभमानः शिक्षां प्राप्नुवानोऽभूत् । तदानीं स छात्रालये वसतां सर्वेषामपि विद्यार्थिनामपेक्षयाल्पवया बालोऽभूत् । तत्समये स न किञ्चिदपि स्वात्मगतमभिप्रायं स्पष्टतो वक्तुं शशाक । तद्विषये वयमेतावदेव हि ज्ञातुमपारयाम यदयं राजपुत्रप्रान्तस्यैकस्मिन् भूभागे निवसतः कस्यचिद्गृहस्थस्य साधोः पुत्रोऽस्तीति । पितास्य मोहान्तोऽपि राज्याश्रितोऽपि च दुर्व्यसनसेवनात् राज्ञा तिरस्कृत्य कुतोऽपि स्वप्रदेशाद् बहिर्निर्वासितः । माता चास्य जीवति महता कृच्छ्रेण च स्वनिर्वाहं करोति । तेनैव राज्ञा सोऽयं बालो विद्याध्ययनार्थं काशीं प्रेषित इति ।'

'तदानीं तु नायं मम सम्पर्कमासादितवान्, परं यथा यथा शिक्षाक्रमेऽभ्युन्नतिं कुर्वाणस्तद्गुरुजनैः प्रशंसितस्तथा तथा स्वयमेवात्मशक्त्या, सत्वसम्पन्नतया, पात्रत्वेन च मम कर्णगोचरो बभूव । संन्यासिनामस्माकं समाजे यातायातं प्रकुर्वाणे मयन्नेकशोऽवलोकितः, स चाधिकाधिकं मत्सम्पर्कमागतः परिचितो मया । किं बहुना, तत्रैवास्माकं छात्रालयेऽध्ययनपरो विद्यामुपलभमानोऽथ शास्त्रेषु व्युत्पन्नः स्वस्य सहपाठिनां छात्राणां, छात्रालयस्य च सेवार्थं महान्तमुद्योगं कृत्वा तां संस्थां महतीमभ्युन्नतिं निनाय । तत्संस्थासम्बन्धीनि कार्याणि सम्पादयन् यदा कदा मत्समीपमप्यागच्छन्नासीत्, विचारविमर्शाश्च तेन बहुधा मया साकमक्रियन्त । ततश्छात्रालयस्य कृते धनसङ्ग्रहाय मया सार्द्धमनेक वारं स निखिलमपि च देशं बभ्राम । यात्राप्रसङ्गेष्वयं मेऽधिकाधिकं सामीप्यमासाद्य गुणैस्तैर्वैदुष्येण, सेवया, प्रबन्धचातुर्येण, व्यवहारकौशलेन च क्रमशो मम प्रधानशिष्योऽन्तरङ्गसखो विश्वस्तः प्रीतिपात्रमभूत् । एतावदेवाहं तद्विषये जानामि ।'

एवं वार्तालापं कृत्वा राजमाता महामण्डलेश्वरस्याश्रम एव तां रात्रिं निनाय । अथापरेद्युः प्रातः सा मण्डलेश्वरं प्रसाद्य तदाज्ञामासाद्य विज्ञानचैतन्येन कृतया व्यवस्थया सा वाराणस्या बाष्पशकटीविश्रामस्थलं प्राप्य रेलगन्त्र्याः प्रथमश्रेणिगतं कक्षमारुह्य विज्ञानचैतन्यं स्वप्रदेशमागन्तुमनुरोध्य ततः प्रतस्थे ।

७

एवं प्रायो द्वित्रिवर्षात्मकः समयो व्यतीयाय । अधुना नगरे लोका कर्णाकर्णि सम्वादं निशम्य परस्परं चर्चां कुर्वाणा विद्यन्ते यद्धि राजकीयेऽतिथिभवने कश्चनैकः संन्यासी महात्मा शिष्यद्वयसहितोऽत्र समागतोऽस्ति यो हि

निखिलशास्त्रपारङ्गतो भाषास्वनेकासु व्युत्पन्नो वैराग्यगतोऽतितरां निःस्पृहोऽपि च लोकसङ्ग्रहप्रवीणो वेदवेदान्तादिदर्शनानां व्याख्यां कुर्वाणो राजकुटुम्ब-सदस्यानां पुरतो धर्मोपदेशं कुर्वन् विराजत इति । श्रूयते यत् स खलु नित्यमेव प्रातर्नववादनपर्यन्तं मौनव्रतमास्थितो न कस्मा अपि दर्शनं प्रयच्छति, न च केनापि सम्भाषणं कुरुते । मध्याह्ने भोजनात् पूर्वं राजप्रसादं व्रजति तत्र च सर्वेभ्यो राजपरिवारसदस्येभ्यो वर्णाश्रमसनातनधर्मानुसारमध्यात्मोपदेशान् वितरति । ततो भोजनं कृत्वा होराद्वयं यावत् विश्रामं कृत्वापराह्णसमये सर्वसाधारणेभ्यो नागरिकेभ्यो दर्शनं ददाति, वार्तालापप्रसङ्गावसरं च प्रयच्छति। ततः सायं वनं गत्वा शौचस्नानादिकाः क्रियाः सम्पाद्य ततो राजभवनं गत्वा नृपतेःपुरस्तात् गीतोपनिषदादीनां प्रवचनव्याख्याननि च कुरुते । अतीवा-साधारणोऽयं विद्वान् संन्यासी तथोपदिशति राजानं, तथा प्रगल्भं भाषते, तथा व्याख्यायते शास्त्रार्थान् यथासौ नवशिक्षितो गौराङ्गसभ्यताचारदीक्षितो नास्तिकप्रायो पि च नरेशस्तस्य वैराग्यं, विरक्ततां, निःस्पृहतां, वैदुष्यं, ज्ञान-विज्ञानप्रवीणतां, सभाचातुर्यं, वाक्पटुतां, नयनैपुणीमनुभवप्रौढीं, प्रत्युत्पन्नमतित्वं, निर्भीकतामात्मज्ञानविद्यां तथा तांस्तानशेषान् गुणान् परिचिन्वानस्तदुपदेशान् श्रावं श्रावं तच्चमत्कारैश्चकितो भवति । यो हि शासकोऽयं प्राक् साधुसंन्यासि-ब्राह्मणान् तृणाय मन्यमानस्तान् निन्दति स्म स एवेदानीं परिव्राजोऽस्य चरणयोर्निषण्णः श्रद्धाभक्तिभावार्द्रहृदयोऽवनतशिराः सादरं सविनयं च धर्मोपदेशान् शृण्वानो मोमुद्यते । केचन लोकास्तमिमं संन्यासिनं हरिद्वारवासिनं मन्यन्ते, केचित्तं हिमालयप्रदेशादागतं कथयन्ति, परे काशिवासिनं वदन्ति, अन्ये द्वारिकातोऽत्रायातं ब्रुवते, केऽपि रामेश्वरादागतं दाक्षिणात्यं सम्भावयन्तीत्येवं नानानुमानैस्तद्विषये सकौतुकं चिन्तयन्ति । तथा हि—

**एको नागरिकः**— अये, सोऽयं संन्यासी तु राजानं बालकमिवोपदिशति । येन राज्ञा साकं वार्तालापे महान्तो विद्वांसोऽपि मुह्यन्ति, यस्य प्रभावात्तेज-स्विनो गूढानुभवशालिनो मन्त्रिवृद्धाश्चापि शङ्कन्ते स्वबुद्धेः पराभवं, यस्याग्रे खल्वार्यसमाजस्य प्रखरतरतर्ककर्कशधिषणा धर्मोपदेशका अपि मध्येसभं मौनमाश्रयन्ते, यश्च वर्णाश्रमसनातनधर्मं साधुब्राह्मणादीनामाडम्बरमात्रं मन्यते, स एवाधुना महात्मनोऽस्याध्यात्मोपदेशं श्राव श्रावं तद्वशंवद इव, मन्त्रमुग्ध इवास्तिक्यं भजते, तदेतन्महदेवाश्चर्यम् । नूनमयं परिव्राट् महानेव विद्वान् बहुविद्याप्रवीणोऽनेकभाषाविचक्षण इति श्रूयते ।'

**द्वितीयः**—'अयि भोः, बन्धवः ! मया तु श्रुतं यदिह संन्यासिप्रवरोऽ-यमत्रत्यानल्पज्ञानपि ब्राह्मणान् प्रति बह्वादरं वितनुते, वृद्धजनांश्च सादरं

सविनयं सम्मन्यते, बालकेषु बाल इव मधुरालापपूर्वकं सस्नेहं व्यवहरति, विशेषतो हि द्विजन्मनां कुलेऽतीवश्रद्धाभावं दृढयति राजकीयसदस्यानाम् । स्वयं सर्वशास्त्रतत्त्वज्ञोऽपि व्युत्पन्नो बुधोऽपि चासौ स्थानीयानल्पशिक्षितान् ब्राह्मणपण्डितान् प्रीत्या स्नेहेन च सम्भाषते ।'

तृतीयः—'अयि, भ्रातरः ! अवश्यमयं संन्यासी कोऽपि सिद्धो योगी महात्मा वर्तते । श्रूयते यदयमागामिनि श्रावणाख्ये पुरुषोत्तममासेऽत्रैव स्थितिं प्रकल्प्य सर्वसाधारणेभ्यः प्रजाजनेभ्यो वेदवेदान्तोपदेशान् दास्यति ।'

चतुर्थः—'अये, शृणुत ! मम पितामहो ह्यः सायं राजभवनं गतस्तमिमं परिव्राजं प्रत्यक्षं ददर्श । स कथयति, यदयं युवापि संन्यासिवर्यः प्रौढमुपदिशति धर्मतत्त्वानि राज्ञे । अत्यन्तं स्थूलस्थूलं तेजोमयमस्य भौतिकविग्रहं देहबन्ध-स्वरूपम् ! महाविदुषां ज्ञानिनामपि च विस्मयमापादयेत्तादृक् सुस्पष्टया संस्कारवत्या प्रखरतया गिरा भाषतेऽसौ गम्भीरमर्थगौरवयुक्तं च व्याख्यायते शास्त्रार्थान् । राजा त्वस्य समक्षमकिञ्चनो ज्ञानरङ्क इव दृश्यते सर्वात्मना तदाधीन इव सावधानं समर्यादं च चेष्टते ।'

पंचमः—'साधु, साधु; नास्तिकप्रायो गौराङ्गानुचरोऽयं राजा संन्यासिना मेवंविधानां विदुषां महात्मनां तेजः प्रभावप्रशस्तनां सङ्गतिमासाद्य धर्मोपदेशान् शृणोति चेत् तत्सर्वेषामप्यास्तिकानां प्रजाजनानां पक्षे हितावहम् ।'

इत्थं संन्यासिनस्तस्य राजभवनमधिवसतः पक्षप्रायः समयोऽत्यवर्तत । ततः समागते श्रावणे मासि पुरुषोत्तमाख्ये राजानुरोधात् प्रजानां चाग्रहात्तत्रैव नगरे तेन परिव्राजा चातुर्मास्यमतिवाहयितुं विनिश्चितम् । मध्येनगरं प्रधान-चत्वरे सुप्रतिष्ठिते विष्णोर्देवालये नित्यमपराह्णतः सायं यावत् स भागवतीं कथां लोकेभ्यः श्रावयितुमारब्धवान् । सहस्रशो मानवसङ्घास्तत्रागत्य कथां शृण्वन्ति, हृष्यन्ति, प्रसीदन्ति, मोमुह्यन्ते च । स्वयं तत्प्रदेशस्य शासको राजा, राजमहिषी, राजमाता, राजकुमाराः, कुमार्योऽधिकारिणः, सामन्ताः, श्रेष्ठिवर्या, धार्मिका नगरवासिनश्च संन्यासिना व्याख्यायमाणां कथां श्रोतुमुपतिष्ठन्ते । संन्यासिप्रवरस्य तस्य कथापारायणशैली, तत्त्वनिरूपण-पद्धतिः, प्रवचनसरणिश्च तादृशी सरला, सरसा, सुधावर्षिणी, मधुरमधुरा, चिन्ताकर्षिणी, मनोहारिणी चाभूद्यया समस्तमपि नगरं तच्छ्रवणेऽशेष-वृत्तिलीनं तन्मयं च बभूव । शृङ्गार-वीर-करुण-हास्यादिरसवर्णनप्रसङ्गे प्रकरणानुरूपं स तथा व्याचख्यौ तत्तद्विषयान् यान् शृण्वतां लोकानां

समक्षं तच्चित्रं साक्षादिवाजायत । न केवलमस्य कथानिरूपणं भावानुभूतिहृशां मर्मस्पृगभूत् प्रत्युत मध्ये मध्ये सांख्य-योग-मीमांसा-धर्मशास्त्र-वेद-वेदाङ्ग पुराणोपनिषदां सन्दर्भा दृष्टान्ताः समसामयिक-विज्ञानार्थशास्त्रराजनीतिप्रसङ्गा-श्चाप्यनेन परिव्राजा तथावातार्यन्त, दार्शनिकसिद्धान्तानां शङ्कररामानुज-मध्व-वल्लभाचार्यादीनां च दृष्टिकोणाः समन्वयव्यतिरेकाभ्यां तथोपनता यान् शृण्वतां लोकानां परातृप्तिरजायत । किं बहुना, विधर्मिणो यवनादयो जैनाश्चाप्यत्र कथाश्रवणे स्वयमेवानामन्त्रिता अपि स्वरुचिमाविरकार्षुः। बहिस्तो भूम्यां वर्षाजलधाराप्रवाहा अजस्रमवर्षन्नन्ततो लोकानां मानसभूमौ ज्ञानगङ्गाप्रवाहाः सन्ततं समन्ततो ववर्षुः । न केवलं परिव्राडसौ स्वयमेव केवलं कथां व्याचख्यौ प्रत्युत तन्नगरनिवासिभ्यो ब्राह्मणपण्डितेभ्योऽपि च भाषण-व्याख्यान-प्रवचनादीनामवसरं चापि प्रादात् । एवं स संन्यासिपरिवृढः सर्वासां प्रजानां राजकुटुम्बिसदस्यानां चापि हृदयसम्राट् गुरुर्गरीयान् स्वयंसिद्धः प्रसिद्धो लोकप्रियश्च बभूव ।

अथ सम्प्राप्तेऽस्य कथापारायणस्य समाप्तिदिने यज्ञहोमादिकाः क्रियाः प्रावर्तन्त । ब्राह्मणा धर्मकृत्यसम्पादनायाव्रियन्त । चण्डीपाठा, रुद्राभिषेका, गीतापारायणानि, विष्णोः स्तुति-स्तोत्र-पारायणानि, ब्रह्मभोजनानि, भजनकीर्तनानि, नगरभोजनादीनि च राज्ञा कृतेन प्रबन्धेन सुव्यवस्थया चाक्रियन्त । द्विजातिभ्यो दानदक्षिणाः प्रादीयन्त । विद्वांसः सम्मानिताः । प्रचुरं धनमदीयत दीनहीनेभ्यो याचकेभ्यः । गोदानानि, कन्यादानानि, भूमिदानानि च प्रादीयन्त सत्पात्रेभ्यः । यथा यथास्य संन्यासिप्रवरस्योत्सवयात्रायाः समयः समीपमुपयाति तथा तथा तत्र विष्णोर्मन्दिरे जनसम्मर्दो महान् समवेतुमारभत । परःसहस्रा जनास्तत्रोपातिष्ठन्त । राज्ञा दशसहस्रसंख्यका मुद्रा, वस्त्राणि, मिष्टान्नानि, फलानि, पुष्पाणि च कथावाचकाय परिव्राजे सादरं समर्पितानि । यात्रासमारम्भात् पूर्वं नागरिकैश्चापि सर्वैर्यथावैभवं यथाशक्ति नानावस्तूनि धनानि पदार्थादीनि च समर्पितानि संन्यासिमहाभागाय । संन्यासिनस्तस्य शोभायात्राया कियद्भ्यः क्षणेभ्यः पूर्वं तत्रैव देवालये सर्वेषां नागरिकाणां, राजपरिवारसदस्यानां, सामन्तादीनां, मन्त्रिपरिषत्सदस्यानां, श्रेष्ठिनां, तथान्येषां च सर्वसाधारणप्रजाजनानां तत्रोत्सवे विद्यमानानां समुपस्थितौ राजाज्ञया प्रधानामात्येन लिखिताक्षरमेकं दानपत्रं प्रपठ्येत्थं श्रावितम्—

"श्रीमत्परमहंसपरिव्राजका दार्शनिकसार्वभौमाः सर्वतन्त्रस्वतन्त्राः श्रीमद्विज्ञानचैतन्यमहाभागा अद्यारभ्यास्माकं राजगुरवो जोघुष्यन्ते । अमीषां सम्मानार्थं दशग्रामा दशसहस्राधिकवार्षिकधनाय युक्ताश्चैतेषां चरणयोर्भक्त्या

श्रद्धया च समर्प्यन्ते । अथास्माकं राज्ये ये केऽपि च संन्यासिनां मठाश्रमाः सन्ति ते सर्वेऽद्यारभ्य स्वामिचरणानाममीषामाधीनाः क्रियन्ते । मठाश्रमेषु तेषु सर्वेषु राजगुरूणामेवाधिपत्यं सदा सर्वदा सर्वतो भावेन भविष्यति । अमीषां तत्त्वावधान एव तत्र तत्र परिव्राजोऽन्यान्ये जीविकावृत्तिमुपभुञ्जानाः स्थास्यन्ति । त एते गुरुमहाभागाः सरोवरस्य तीरभूमौ विद्यमाने प्राचीने राजगुरुमठाश्रमे ससुखं निवसन्तो राजकीयसदस्येभ्यो नागरिकजनेभ्यश्च धर्मोपदेशं प्रददानाश्चिरं निवसन्तु । यद्यप्यस्माकमयमभिलाषो यदिमे राजगुरवो महात्मानः सशिष्य-प्रशिष्याः समधिकमत्रैव स्वस्थितिं कल्पन्तां तथाप्येते तीर्थाटन-देशसेवा-धर्मप्रचार-विद्वत्परिषदादिकार्यार्थं यत्र तत्र सर्वत्र यथेच्छं विहर्तुं स्वाधीनाः । नात्र कोऽपि राजकृतः प्रतिबन्धः स्यात् । आशास्यते, श्रीमद्गुरुचरणास्तामिमामस्माकमभ्यर्थनां "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदिदं भक्त्युपहृतं गृह्णामि प्रयतात्मनः ॥ १ ॥" इति भगवद्वाक्यानुरोधात् कृपया स्वीकृत्यास्मान् सर्वांस्त-द्भक्तान् श्रद्धाप्रवणान् प्रसन्नेनान्तरात्मना समनुगृह्णीयुरिति ।'

अकस्मादित्थं राजगुरुवरणात् सर्वेऽपि च लोका आनन्दस्य परां कोटिं गताः । सर्वत्र महानेव हर्षोल्लासः प्रससार परमप्रसन्नमाह्लादपूर्णं च नगरस्य वातावरणमजायत । राज्ञा प्रजाजनैश्च परिव्राजश्चरणयोर्हर्षोद्गाराः समर्पिताः । कवयः काव्यालापानगायन् ।

अथेदानीं परिसमाप्तेऽस्मिन् महामहोत्सवे राजारुहे चीनांशुकप्रावरण-शोभिते स्वर्णराजतालङ्कारैः शृङ्गारिते महागजे तमिमं राजगुरुमारोप्याश्वगज-सैन्यपदातिसहिता राजगुरोः शोभायात्रा वाद्यघोषपुरस्सरं सकुसुमवृष्टिपातं दुन्दुभिमङ्गलध्वनिपूर्वकं देवालयात्तस्मात् शनैः शनैः प्रचचाल । मध्येमार्गं स्थाने-स्थाने चत्वरेषु वीथीमुखेषु राजकीयेषु भवनेषु च लोकैर्गोपुराणि वन्दनवारामाङ्गलिकानि रङ्गमण्डलानि ध्वजपताकादीन्युपकल्पितान्यासन् । गजारूढोऽसौ संन्यासी स्वशिष्यद्वयोपेतश्छत्रचामराभ्यामुपवीज्यमानः प्रधानराजमार्गेण मन्दं मन्दं व्रजन्नासीत् । स्वयं राजामात्या मन्त्रिणोऽधिकारिणः सामन्ता नागरिका नरा नार्यो बालका वृद्धाश्च सर्वे यूथशस्तमनुव्रजन्तोऽभूवन् । कमप्यभूतपूर्वं विजयोल्लासमानन्दातिरेकमनुभवतोऽप्यस्य परिव्राजो हृदये नानाविधानां भावानुभूतीनां विचित्रः कोऽपि च सङ्घर्षो जायमान इवालक्ष्यत । तस्य मुखाकृतिः क्षणं प्रसन्ना, क्षणं गम्भीरा, क्षणं चिन्ताकुला विवर्णेव पर्यलक्ष्यत ।

अथ च पूर्वाकाशक्षितिजे निर्मले नीले नभसि पूर्णिमायाश्चन्द्रबिम्बेऽभ्युदिते

सरोवरस्य जले दुग्धफेनधवलायां चन्द्रज्योत्स्नायां प्रतिबिम्बितायां, देवमन्दिरेषु सावन्तनारार्तिकक्रियायां दुन्दुभिघण्टाध्वनिसहितं जायमानायां सैषा राजगुरोर्यात्रा क्रमशः पूर्वोक्तस्य ज्योतिर्लिङ्गभगवतो मन्दिरस्य प्राङ्गणभूमिं प्राप्य सरोवरस्य तटे व्यरंसीत्। गजपृष्ठादवतीर्य स नव्यो राजगुरुः परिव्राट् राज्ञा सादरं सोपचारं च प्रदत्तं हस्तावलम्बनं गृहीत्वा रत्नजटिते स्वर्णपादुके परिधार्य मन्दं मन्दं कानिचित् पदानि गत्वा तस्य शिवालयस्य प्रधानगोपुरस्य तोरणाधस्तस्थौ। ततः पुरोहितादिभिर्ब्राह्मण-जनैर्मन्त्रोच्चारपूर्वकं युवतिभिः कन्यकाभिश्च मंगलाचरणविधयो विहिताः। ततो जयघोषैः साकं स परिव्राड् देवालयान्तः प्राङ्गणं प्रविवेश। प्रविश्य च स सर्वादौ भगवन्तं ज्योतिर्लिंगविग्रहं ववन्दे। ततोऽन्यान्या देवमूर्तीः प्रणम्य प्रदक्षिणविधिसम्पादनाय वामतो दक्षिणं देवालयं परितो बभ्राम। देवालयाङ्गणे परिक्राम्यन् स महात्मा राजगुरुर्यावदितस्ततो दृष्टिं व्यापारयति तावत्तत्र मठस्य पृष्ठभागस्योत्तरदिक्कोणे तिष्ठन्तीमेकां दीनदीनां सर्वसाधनहीनां जर्जरितसर्वाङ्गीं मलिनवसनां गलितदन्तपङ्क्तिं पलितकेशीं मन्ददृष्टि-मेकां वृद्धां ददर्श। दृष्ट्वा तां सहसा स परिव्राट् झटिति तत्समीपं गत्वा तस्याश्चरणयोर्निपत्य पुनः पुनः प्रणम्य तत्पदयोः स्वमस्तकं निधायोन्मुक्तकण्ठं भृशं रोदितुमारेभे। सा वृद्धा तु तत्त्वतस्तदिदं किमपि नो बुबुधे। सा तु चकितचकिते वोद्भ्रान्तेव दिङ्मूढेव कान्दिशीकेव किंकर्तव्यविमूढेव कृतापराधेव स्तब्धा जडा निष्पन्दार्धमूर्च्छितेव विक्षिप्तेव सोन्मादेव नेत्रे विस्फार्य प्रयत्नात् पश्यन्ती यावदात्मानमवगततथ्यं विधातुं चेष्टते, तावदेव कथमपि धैर्यमवलम्ब्य स संन्यासी वक्तुमुपचक्रमे :—

'अयि, पूज्ये! जननि!! स एष तेऽहं बालो गोपालस्त्वां वन्दे! अहं तवैव बालकोऽस्मि मातः! अधुनाहं गुरुप्रदत्तेन विज्ञानचैतन्य इति नाम्ना प्रसिद्धोऽस्मि! त्वामीदृशीं महतीं दयनीयां कष्टां दशां गतामवलोक्य शतधा विदीर्यते मम हृदयम्! तदिदानीं स्वस्था भव मे मातः! त्वत्कृत एव मयैतत्सर्वं व्यवसितम्! तवापेक्षयैव मयैतावान् प्रयासो महानङ्गीकृतः। तव कृपयैवाद्य सिद्धं मे समीहितम्! त्वदाशीर्भिरेवाद्य सफलाः सर्वे मम मनोरथाः! भगवति! जननि!! पूज्ये!!! अम्ब!!! अपि त्वं मां विस्मृतासि! मातस्तव चरणयो-रुपस्थितं मां परिचिनुहि। मम जनन्यास्ते प्रसादादेव ममेदं राजगुरुत्वं सम्पन्नम्!! प्रसीदाम्ब!!! त्यज्यतां शोकः! गतं सर्वं मानुशोच! भगवति! जननि!! देहि मे प्रतिवचनम्!!!'

एतच्छ्रवणसमकालमेव सा वृद्धा तं गाढं समालिङ्ग्य तच्छिरो मुहुर्मु-

हुराघ्राय निरतिशयानन्दसन्दोहसुधाप्लाविता स्वनेत्राभ्यां प्रवहमानैरविलैरश्रु-जलैस्तमभिषिञ्चन्ती कथमपि धृतिमालम्ब्य सबाष्पकण्ठमब्रूत—

'वत्स ! क्वाहं किमिदं पश्यामि ! अपि त्वं ममाधमायाः पापायाः पुत्रो-गोपालः ? कथमहं त्वामभिजाने ?? मम नेत्रज्योतिस्त्वद्विरहे रोरुद्यमाणाया मन्दतां जगाम । मरणमपेक्षमाणायास्त इमे कृपणाः प्राणा नो मुमुचुस्तदिदधमं शरीरम् ! कदाचित्त्वन्मिलनायैव कथमपि कृच्छ्रेण जीवितास्मि ! तद्वत्स ! ब्रूहि सत्यम् ! सौम्य !! त्वमद्य सर्वपूज्यो राजगुरुरिति सत्यमुताहोस्वित् स्वप्नेन्द्र-जालविलसितम् ???'

—'मातर्मा चिन्तयैवम् ! नाहमन्यथा वच्मि !! त्वच्चरणयोः शपथं कृत्वाहं ब्रवीमि यदहं तवैव पुत्रस्त्वं च मे जननी । स वै खल्वेष मठो यत्राहं बाल्ये क्रीडितस्तवोत्सङ्गे चात्रैव त्वयोपलालितः ! अपि त्वं ननु स्मरसि यदस्याशोकवृक्षस्य शाखासु यदा वानरयूथमागत्योत्प्लवते स्म तदाहं भयभीतो विक्लवः सन् बहुधा यमुनानाम्नीं धेनुं दुहन्तीं त्वामाक्रोशम् ? अपि त्वं न जानीषे यदास्याम्रवृक्षस्य फलानि पक्वतां यान्ति स्म तदाहं तस्मात् प्रकोष्ठाच्चौर्ये-णानीयात्र कोणे तूष्णीमभक्षयम् ??'

'वत्स ! सत्यमेतत् ! सुतरां परिचिनोम्यधुना त्वाम् ! धन्योऽसि त्वं यद्धि राजगुरुत्वं विलयं गतमपि त्वयाद्य पुनर्विजितम् ! चिरंजीव वत्स ! सुखमुपभुङ्क्ष्व राजगुरोः पदप्रतिष्ठां सम्मानं च !! त्वयाद्योद्धृतं स्वकुलम् ! यशस्ते दिक्षु प्रसरतु । त्वयि प्राप्ते परिपूर्णा मे सर्वेऽपि मनोरथा आकाङ्क्षाश्च सर्वाः सफलतां गताः जीवन्त्यैव मयाद्य योगिनामपि दुर्लभा मुक्तिः सम्प्राप्ता ! सफलमद्य मे जीवितम् ! त्वामासाद्याहं पुत्रवती धन्यधन्यमात्मानं मन्ये !!!'

—'जननि ! त्वच्चरणयोर्दर्शनार्थिनैव मयात्रागमनं स्वीकृतम् । नोचेन्मम हिमालयप्रदेशे तथोत्तरकाश्यां, वाराणस्यां, बदरिकाश्रमे, हरिद्वारे च स्वाधीना आश्रमा वर्तन्ते, तेषु चाश्रमेषु सर्वेषु प्रभूता धनराशयो मदायत्ता विद्यन्ते, पुनस्तत्र तत्र महान्तो धनिकाः श्रेष्ठिनश्च मे भक्ताः सन्ति ये लक्षाधिका मुद्रा वर्षासनरूपेण मदर्थमुत्सृजन्ते, केचन संन्यासिप्रवरा महामण्डलेश्वराश्च मां प्राणेभ्योऽप्यधिकं स्निह्यन्ति स्वोत्तराधिकारिणं च मां विधातुमपि वाञ्छन्ति, परन्तु मयात्रागमनं कामयानेन स्पष्टमुद्घोषितं यन्नाहं ब्राह्मणजन्मा मण्डलेश्वर-पदवीं स्वीकर्तुं पात्रत्वं दध इति । तथापि तेषां सर्वेषामहं परमं प्रीतिपात्रमस्मि । तत्र तत्र तत्तन्महामण्डलेश्वराणां केचन विद्यालयाः पाठशालाश्चिकित्सालया धर्मशालाः प्रसादोपमानि खल्वतिथिभवनानि देवालया मठा आश्रमाश्च ममैव

तत्त्वावधाने मन्निरीक्षणे च सञ्चाल्यमाना वर्तन्ते । इत्थमनन्यसुलभं स्वर्गीयं समस्तमतुलवैभवं सम्प्राप्यापि यन्मयात्र गर्तप्राये हरिद्रतमे देशे स्वागमनं स्वीकृतं तज्जननि ! त्वदपेक्षयैव । अस्तु । अधुना त्वं स्वस्था भव । तव बालेनानेन मया त्वदाशीर्वादैर्लब्धं सकलमपि धनवैभवं त्वं यथेच्छमातृप्ति भुङ्क्ष्व मातः ! तुभ्यं यदि रोचेत, तदा त्वमत्रैव ससुखं स्ववसतिं प्रकल्पयाथवा मयासाकं तीर्थाटनं कुर्वाणा सानन्दं शेषं जीवनं यथारुचि नयस्व !'

एवं परस्परं संवदतोस्तयोर्मातापुत्रयोस्तमिमं सम्वादं निशम्य राजा चकितश्चित्रलिखित इव साश्चर्यं विज्ञातवान् यदयं मयाद्य सद्यो व्रतो राजगुरुः श्रीमद्विज्ञानचैतन्यो महात्मा तु स एवास्ते बालको यमहं मठेऽत्राष्टवर्षवयस्कं महिलयानया सह तदानीं वर्तमानमद्राक्षम् ।

ततस्तां राजगुरुः स्वजननीं मठस्याभ्यन्तरं कक्षं निनाय । स्नानादिकं कारयित्वा वस्त्राभरणैरलंकृत्य सर्वमपि च भौतिकं परिग्रहं धनवैभवादिकं तदधीनं तदैकायत्तं कृत्वा सानन्दं सुखं चिरं मुमुदे ।

—०—

# भोजनभट्टानां सुहृद्गोष्ठी

एकदा केचन भोजनभट्टाः सुहृद्गोष्ठीयात्राप्रसङ्गेन स्वच्छन्दमानन्द मनुभवितुं स्वनगरात् क्वचिद् बहिर्गन्तुं मनश्चक्रुः। तदानीं भाद्रपदमासस्य शुक्लः पक्ष आसीत्। अमीषु भोजनभट्टानां सुहृद्गोष्ठीसदस्येषु श्रीमान् लम्बोदरमिश्रः, मोदकानन्दपाण्डेयः, कुक्षिम्भरिद्विवेदः, चारुपाकश्चतुर्वेदः, सर्वभक्षी त्रिपाठी, बह्वशनो भट्टाचार्यः, भङ्गार्णवः शुक्लः, इत्याद्या महाशयाः प्रमुखा आसन्। एभिः सर्वैरपि मित्रैः सम्प्राप्ते प्रस्तावे मिथो विमृश्य, चिरंविचार्य, सुदिनं निश्चित्य चायोजनं कर्तुमारब्धम्। सर्वेषां तेषां यानत्वेनोपवेष्टुं अन्नपानादिसम्भारान् वोढुं च तैरेतैः काचिदेका बलीवर्द्वाह्या शकटी शुल्कविनिमयेन स्थिरीकृता। दिनत्रयात् पूर्वमेव त एते स्वमनोऽभिलाषरुचिकल्पनानुरूपं पृथक् पृथक् पाथेयं सज्जीकर्तुं महतोत्साहेन तत्परा बभूवुः।

केनचित् यात्रायामस्यां सह नेतुं घृतं, शर्करा, गोधूमानां पिष्टं, चणका, मुद्गा, माषानांद्विदलास्तण्डुला इत्यादयः पदार्थाः पोट्टलिकासु बध्वा सज्जीकृताः। अन्येन केनचिदवलेहः (चटनी) सन्धितं (अचार) गुडः, तैलं, दधि, नवनीतं, पर्पटाः (पापड) मरीचानि, लवणं, हरिद्रा, जीरकं, हिगुङ्प्रभृतीनि वस्तूनि गृहीतानि। परेण वृन्ताकानि (बैंगन) गोजिह्वा (गोभी) भिण्डिकाः, कुष्माण्डं, कदलीफलानि, पटोलकानि (परवल) गृन्जनानि (गाजर) हरितमरीचाः, जम्बीराणि (नींबू) कारवेल्लानि (करेले) इत्यादयः फलशाकपदार्था गृहीताः। अपरेण केनचित् द्राक्षा, नारिकेलं, बादामानि, खर्जूराः, केशरः, कस्तूरिका, एलालवङ्गादयो गृहीताः। अन्येन केनचन ताम्बूलपत्राणि, सुधा (चूना) खदिरसारः (कत्था) पूगीफलानि (सुपारी) तमाखुपत्राणि क्रीत्वा नीतानि। परेण लाजाः, सक्तवः होलकाः (होले) प्रभृतयो गृहीताः। तथा चान्येन मोदकाः, चक्रिकाः (बरफी) फेनिका (फैनी) घृतपूरा (घेवर) मल्लपूपाः (मालपुरा) कुण्डलिकाः (जलेबी) मिष्टमण्ठा (बालूशाही) दुग्धपूपिकाः पूरिका इत्यादयो नानाविधा भोज्यपदार्था मिष्टान्नानि च सज्जीकृतानि।

सर्वेऽपि च ते द्विजपुङ्गवाः सुहृदः सुनिश्चिते दिवसेऽपराह्णसमये एकत्र मिलिताः। सुहृद्गोष्ठ्या अस्या उद्घाटनसंस्कारमङ्गलमिव प्रारब्धुं सर्वादौ भङ्गारसमपिबन्। ततः शौचस्नानविधिं निर्वर्त्य, दिनशेषे शकटीं नियोज्य, संयोज्य, सर्वानपि च तान् सिद्धानसिद्धांश्च पदार्थान् तत्र शकटीयाने संस्थाप्य, यात्रानन्दमङ्गलं भावयन्तो नगराद् बहिर्निष्क्रम्य पश्चिमाशामिमुखं प्रतस्थिरे। कियन्तं मार्गमतिक्रामतां तेषां सूर्योऽस्ताचलचूडामवाललम्बे। भाद्रपदो मासः, शुक्लश्च पक्षः, सर्वसिद्धा त्रयोदशी तिथिः, फुल्लायां सन्ध्यायां पूर्वक्षिति-जाकाशे पूर्णचन्द्रोऽभ्युदितः। यथा यथा भगवान् चन्द्रदेवो ज्योत्स्नाजालैः साब्धिद्वीपां सवनपर्वतां शस्यश्यामला शरत्प्रसन्नां वसुधामभ्यरोचत् तथा तथा ते सर्वेऽपि भोजनभट्टा अपि च भङ्गारसमदेनोत्फुल्लचित्ता मिथो वार्तालापान् कुर्वन्तो. हास्यविनोदपरिहाससुखं समनुभवन्तस्तां शकटीमनुवव्रजुः शनैः शनैः पथि संलग्ना अपि ते क्षणं काव्यपाठैर्मोमुद्यमानाः, क्षणं सङ्गीतस्वरमाधुरीं वन्यप्रदेशे तन्वानाः, क्षणं वंशीं वादयन्तः, क्षणं पाणिभ्यां मुखेन वा तालं साधयन्तो, मध्येमार्गं क्वचिज्जलपानं कुर्वन्तः, क्षणं मध्यान्तरावकाशे सतमालताम्बूलवीटिकाश्चर्वयन्तः, क्षणं नव्यानां प्राचीनानां समसामयिकानां च लोकचरितानां साधिकारां समालोचनामनुकूलां प्रतिकूलां समर्यादं निर्मर्यादं वा यथेच्छं स्वच्छन्दं च कुर्वाणाः क्रमशो मन्दं मन्दं व्रजन्तोऽभूवन् ।

कियन्तं पन्थानं समतिक्रान्तानां तेषां गोष्ठीरसः सिद्धतायाः पूर्णतामिव पस्पर्श। कश्चित्तेषु प्रोक्तवान् अयिभोः ! रसिकप्रवराः !! सहृदो मे प्रियाः सखायः !!! कीदृङ् मनोहरोऽयं प्रसन्नमधुरः समयः ! चन्द्रज्योत्स्नामिर्धवलितं निखिलमपि वसुधामण्डलम् ! जलाशयेषु प्रतिबिम्बितं चन्द्रमसो बिम्बं प्रकृति-सुन्दरीं शृङ्गारवदिव जडचेतनानामन्तर्हृदि सुधासारधारामिवाभिवर्षति ! पर्वतश्रेणीभिर्विराजमाना वन्यप्रदेशास्तरुपादपलतापत्रपुष्पैर्विलसन्तोऽधुना कीदृङ् मनोरमाः शोभन्ते ! परां निर्वृतिं मुदमानन्दं हर्षातिरेकं च जनयति नैसर्गिकं विभवसमृद्धिश्रिया शोभमानं नीरवं प्रशांतमपि सुस्फीतमेतद्वातावरणम् ! एवंविधे खलु परमरमणीये समये यदि वयमत्र क्वचिन्नदीतीरे वा जलाशयासन्न-वर्तिनि स्थले समुविश्य स्वल्पाहारं कुर्मस्तदा यात्रेयं शुभोदर्का मङ्गलाय महते तथानन्दाय च जायेत। आशास्यते, तमिमं प्रस्तावं मे श्रीमन्तः सर्वे वयस्याः सहृदयतया निर्विरोधं सर्वसम्मत्या समर्थयितुमुत्सहेरन् !' इति। मदोद्धतानां कल्पनालोके संचरतां सर्वेषां तेषामतिशयभावुकात्मनां मित्राणां प्रस्तावोऽयमती-वावसरानुरूपः सर्वसम्मतो जातः। मध्येमार्गं सरित्कूले क्वचित् स्फटिकसंकाशासु

पाषाणपट्टिकासु व्यश्राम्यन् । हस्तपादं प्रक्षाल्य, मुखमार्जनं कृत्वा, वस्त्रास्तरणं विस्तार्य, सायन्तनं स्वल्पभोजनं कर्तुं व्यवसितास्ते । समानवयोगुणकर्म-स्वभावशीलास्ते भङ्गारससेवनाद् दीर्घसूत्रत्वं याताः । मन्दं मन्दं क्रियाकलापान् सर्वान् तगद्तेन मनसा सम्पादयन्तस्तदानीं सुरेन्द्रपदवीमपि तृणाय मन्यमाना आत्मनः सहृदयताया रसिकतायाश्च चरमां कोटीमाटीकन्त सुहृत्सङ्गमसुखा-नुभूतिमन्वतुष्यन् ।

तदैव केनचित् प्रोक्तम्—'लोकेभ्यः श्रूयते, यदत्र निर्मानुषे वनप्रदेशे वनेचराणां चौराणां लुण्टाकानां सिंहादीनां श्वापदानां रात्रिचराणां च महद् भयमास्ते ! तदधुनास्माभिरतोऽग्रे प्रस्थातव्यम् । त्वर्यताम् !!' इत्थं वदत एव तस्य वचनं सभ्रूभङ्गाक्षेपमाक्षिप्य तेषां मध्यादेकः कश्चित् प्रोच्चैः स्वर-मुवाच,— 'आम्, जाने त्वां जन्मत एव स्वभावभीरुम् ! नागरिकाज्जीवनान्नि-र्विण्णा वयं महता काठिन्येन चिराद्गोष्ठीरससुखमनुभवितुं मिलिताः स्मः । सौभाग्यमयेऽस्मिन् सुललिते समये त्वं कुतो नुबत भयविक्लवो भवसि ? अकुतो-भयं संचरताम् ! अस्माकमत्र कुतो नु खलु भयं सम्भावयसि ? न जानीषे किं यदुक्तं श्रीमदानन्दतीर्थाचार्यप्रवरैः—

"शोकस्थानसहस्राणि, भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ १ ॥"

तत् समाश्वस ! मा भैषीर्बाल !! जगदीश्वरो रक्षकः सर्वेषाम् । किं नैतज्जानासि—'भयानां भयं भीषणं भीषणानाम् ।'

एवं विनोदलीलाः कुर्वतां तेषां रात्र्या आद्यः प्रहरो व्यतीतः । शकट-वाहको वराको भृत्यः पण्डितानामेषां भोजनभट्टानामेषां वास्तविकीं मनोदशा-नुवुद्‌घयन्नपि विलम्बे जाते भयाशङ्कातङ्काकुलोऽपि प्रकटरूपेण समर्यादमब्रवीत्—'अयि मान्या भूदेवाः ! श्रीमन्तः सर्वे तु विद्वांसो दर्शनकेशरिणः शास्त्रज्ञाः सूक्ष्मदृष्टयो विद्यवयोवृद्धा अनुभविनो द्विजपुङ्गवाः सर्वजनपूज्याः । मया सेवकेन किं वा निवेदनीयमाप्तेभ्यो भवद्भ्यः ? परमधुना कालातिक्रमणात् शकटीधुरीणौ मे बलीवर्दौ विलम्बं न सहेते । अतोऽग्रे प्रस्थानमितो विचार्यतां कृपया ।'

तद्वचनमाकर्ण्य तेषां मध्ये केनचिद्भणितम्—'परावर्त्यतामयं शकट-वाहको नगरम् ! मूढोऽयं किं जानीयात् प्रकृतिसौन्दर्यम्, वनश्रियां दर्शनस्य विलाससौख्यं मूढा भोक्तुं नार्हन्ति । आनन्दं ब्रह्मेति स्वाज्ञानान्न जानन्त्यं

वृथैव भीरुतामात्मनोऽस्मास्वारोपयति, अरसिकत्वेन सोऽयं गोष्ठीसुखं चापबाधते, यत आयातस्तत्रैव गच्छतु पुनर्नगरं प्रतीति विसृज्यताम् भोः ! शकटे वृषभौ नियोज्य वयमेव याता स्मः, किं प्रयोजनमेवंविधेन कातरेणास्माकम् ?'

श्रुत्वैवैतल्लम्बोदरो मिश्रः—

"शनैः कन्था शनैः पन्थाः शनैः पर्वतलङ्घनम् ।
शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनैः शनैः ॥ १ ॥"

इति पठन् स्वयमुत्थाय सर्वानपि सुहृदोऽनुनीय कथमपि प्रस्थातुमुद्यतः । सर्वेऽपि ते मुखतो विवदमाना अपि कर्मणा गतानुगतिकं व्यवहरन्तस्तत्र प्रसृतां सर्वां सामग्रीं शकटे निधाय पथि संलग्नाः ।

यावत्ते तत्र निर्मानुषेऽरण्ये पार्वत्यप्रदेशानुल्लङ्घमाना भंगारसमदविह्वला गिरीगह्वरलताद्रमगुल्मसङ्कुलं श्वापदाकीर्णं पन्थानं स्तोकं गतास्तावदेव वनमध्यादकस्मात् सिंहध्वनिगर्जनमिवास्पष्टमशृण्वन् । तत्क्षणमेव तेषामानन्दसमाधिभंगो जातः, क्षणमेकं ते स्तब्धा जडा मूका इव विक्लवा इव परस्परं मुखान्यालोकन्त । नीरवे निशीथे पश्चिमाशाक्षितिजात् प्रोज्जृम्भमाणमन्तः स्तनितनिर्घोषं तडित्वन्तं महामेघपटलसमूहं कज्जलपर्वतोपमं ददृशुः । एकत्र मध्याकाशे विराजमानो द्विजपतिरपरत्र महामेघमण्डलमभ्ये नीरन्ध्रे विस्फूर्ज्जन्तीं विद्युल्लतां पर्वताश्रयिणोऽधित्यिकाशिखराद्विलोकमानास्तत्सौन्दर्यमात्मसात्कुर्वन्तोऽपि मार्गाक्रमणे त्वरमाणा इवाभूवन् । तदैव केनचित् साक्षेपं प्रोक्तम्—'महाशयाः ! सोऽयं सखास्माकं धन्यो यो मेघगर्जितमपि सिंहध्वनिमुत्प्रेक्ष्यानन्दमये समयेऽस्मिन् भयादकाण्डताण्डवं कर्तुं सन्नद्धः !' अन्योऽवदत्—'अरे, किं न पश्यसि ? इमे मेघास्तावदेकार्णवामिव महीं कर्तुं समस्तं जगदाप्लावितुमिवोद्यता दरीदृश्यन्ते । अस्माभिरधुनापि चार्द्धयोजनप्रायं दूरमितो गन्तव्यमभीष्टं स्थलम् । त्वर्यताम् त्वर्यताम् !! यावद्धारासारं वर्षन्त इमे मेघा जलप्रलयं न कुर्वन्ति तावदवशिष्टं पन्थानमतिक्रमाम । नो चेदत्रैव वनेऽतिभयावहे का गतिर्विडम्बनामयी स्यादस्माकं सर्वेषाम् !'

शीतानिलस्पर्शात् कामपि चेतनामात्मनोऽनुभवतः सर्वेऽपि ते सखायो द्रुततरं मार्गमतिक्रामितुमारेभिरे । मध्यरात्रे ग्रामोपकण्ठं नदीमुत्तीर्य यावत् ग्रामसीमानं ते प्रापुस्तावन्मुसलधारं ववर्ष पर्जन्यः । निबिडान्धकारेणावृतं दिङ्मण्डलं, सूचीभेद्येऽतिघनतमे तमसि ग्रामसीमाक्षेत्रानुगामिनि जलपङ्क-

गर्तंभूते मार्गे कथं कथमपि महता क्लेशेन पदात् पदं व्रजन्तस्ते सर्वे भूदेवाः सशकटाः कर्दमोदधिमिवोल्लङ्घमाना विवशतया कस्यचिन्महावृक्षस्याधो जलक्लिन्नाः शीतात्कम्पमानाः स्वात्मानमगतिकं कान्दिशीकमसहायं मन्वाना अपि विद्युत्प्रकाशे मिथो मुखानि पश्यन्तो जहसुः। तत्र वृक्षाधो निरुद्धास्ते तडिल्लतायां विस्फूर्जन्त्यां दूरस्थितानि ग्रामीणानां क्षेत्रोटजानि गृहान् वसतीश्च पश्यन्ति, परं ततः पदमेकमप्यग्रे सतुं न पारयन्ति। 'स्थातुं गन्तुं द्वयमपि सखे! नैव भट्टाः समर्थाः!!' सेयं स्थितिस्तदा तेषामजायत। व्यतीतासु कासुचिद्घटिकासु झंझावाताहता महान्तो मेघा यत्र तत्र विच्छिन्ना क्रमशो व्यलीयन्त। चन्द्रज्योत्स्नाभिः पुनः प्रसन्नमभून्नभो जलपूर्णा क्षितिर्नील-धवलं व्योममण्डलं शीतरश्मेर्बिम्बं वर्षान्ते पुनः सुस्फीतं देदीप्यते स्म दिग्दिगन्तेषु। शकटीं संयोज्य ते पुनरग्रे सतुं पुरुषार्थमाचेरुर्भूदेवाः। भाग्याच्छकटवाहको ग्राम्योऽप्यनुभवशाली समभूत्। तस्य मार्गनिदर्शनेन तत्साहाय्यात् ते कथमपि मार्गे गन्तुं प्रवृत्ताः। क्षेत्रेभ्यः प्रवहतो महतो जलौघप्रवाहानुच्चावचांल्लङ्घमाना यदा कदा सत्यावश्यके शकटीं तामग्रतः पृष्ठतश्चोपढोकयन्तो वृषभोपनिषत्परमतत्त्वानुभवं गृह्णाना महद्भिः प्रयत्नै-र्नानोपायैर्विविधैरायासैः प्रयासैश्चातिश्रमादन्ते कंचिदेकं सुविशालं शिवालयं प्रापुर्निशायास्तृतीये यामे, तत्रैव चागत्या विश्रामं चकल्पिरे।

विज्ञानाविष्कृतेन ज्योतिर्लिंगेन (Torch) शिवालयस्य स्थितिमालोक्य, सहानीतेन घृतेन पात्रमापूर्य दीपशलाकया दीपकं प्रज्वाल्य—'आत्मा त्वं गिरिजा…' इत्यारभ्य 'यद्यत्कर्म करोमि तत्तदखिलं शम्भो! तवाराधनम्!' इति पर्यन्तं भगवन्तं प्रलयङ्करमपि शङ्करं प्रणम्य देवालयस्य कलामण्डपे पार्श्वकोणेषु यत्र तत्र सर्वान् सहानीतान् सम्भारान् संस्थाप्य, शयनास्तरण-व्यवस्थां विधाय, जलक्लिन्नानि वस्त्राणि च स्तम्भेषु तोरणेषु चेतस्ततः समवलम्ब्याध्वश्रमपरिखिन्नास्ते ससुखं प्रसुप्ताः। प्रातर्यदा निद्रासमाधिस्थिते-र्भङ्गात् प्रबुद्धास्तदा ते मानुषे लोके स्वात्मनो मित्रमण्डलीं तत्र रमणीये शिवालये कृतवसतिं सकुशलां प्राप्य परं प्रमोदं गताः। तथापि तेषाम् 'सम्प्रति नयनालस्यं रजनिरहस्यं निवेदयति' स्म। आस्तिका अर्द्धास्तिका वा ते ब्राह्मणतल्लजास्तत्र शोभने स्थले शौचस्नानसन्ध्यादिकर्मोचितां सुविधासम्भावनां मनस्याकलय्य सोत्साहं दिनचर्याक्रममनुवर्तितुं प्रावर्तन्त।

प्रकृत्यैव मुखरमुखराः प्रखरमुखाः शास्त्रार्थवादिनस्ते पदे पदे सिद्धान्तवादान् स्थापयन्तः संस्कृतभाषायां, हिन्दीभाषायां, प्रान्तवाण्यां चालघ्वीर्गल्पगोष्ठीः कुर्वाणाः प्रातःक्रियाकलापानुष्ठानाय सोपक्रमं सोद्योगा

अभूवन् । केनचित् सर्वादौ चायचषकपानं प्रस्तावितम् । अन्येन ताम्बूलचर्वणं कामितम् । अन्येन गण्डूषाविधिमनु जलपानं समर्थितम् । अपरेण तमाखुपत्र-फक्किकासेवनमाकांक्षितम् । कुलीनास्ते शकटवाहस्य पश्यन्तो धूम्रपानं तु कथं कुर्युर्यशोधनास्तदपि पुनर्देवालये ? यद्यपि देववाण्या माध्यमेन केनचित् तदपि निपुणं प्रस्तावितम् । इत्थं वाद विवादानाचरतां तेषां भूयान् समयोऽप्यवर्तत । सर्वान्ते भंगार्णवशुक्लमहाभागैः प्रोक्तम्—'अयि, भोः ! श्रूयताम् !! ह्यो भंगारसपानादवशिष्टेयं बदरीफलाकारा गुटिकैका मत्सविधेऽवशिष्यते । सर्वैरनुमोद्यते चेत्तामेतां गुटिकां जलेन वस्त्राञ्चले निर्गाल्य श्रीमतां सेवायां समुपस्थापयितुमुत्सहेऽहम् । यूय सर्वे एतस्या सजलानुपानं सेवनान्निर्मला विगत-श्रमाः स्वस्थाश्चाचिरेण भवितास्थ, गोष्ठीरसानुभवसुख चानेन सर्वं निर्विघ्नं सकुशलं सानन्दं च सम्पत्स्यते । मन्ये, सर्वेऽपि यूयं सहृदया नेमां मे प्रार्थना-मस्वीकरिष्यथ. तत् साधु ! पुनः 'स्वल्पारम्भाः क्षेमकराः' इत्युक्त्वा शुक्ल-महाशयेन भंगारसमास्थानिष्ठाश्रद्धाभक्तिभावपुरस्सरं सज्जीकृत्य सर्वेभ्यश्चुलुकप्रमाणं क्रमशोऽपाययत्सः । मध्ये कश्चन प्रोवाच—'भारतीयां सञ्जीवनी विद्यां सोमवल्लीरसरसायनमस्मत्पूर्वजाः सेवन्ते स्म । भोगिनोऽपि चैवंविधैरसैरमृतत्त्वं लेभिरे । वीराः सम्राजो दिग्विजयानकार्षुः । ज्ञानिनो मोक्षं वव्रजुर्भक्ता भगवति लीनाः । ते सर्वेऽप्यस्मत्पूर्वपुरुषाः कलिकाले भगवती-मिमां विजयामेव सोमवल्लीं मेनिरे । भंगारससेवनेनैव ते पूर्णज्ञानिनः पूर्णकामाः पूर्णपुरुषा विद्वांसो महात्मानश्चासन्निति भवन्तः सर्वे मे सखायोऽत्र सर्वादौ भंगारससेवनं कृतवन्तस्तदनेन सर्वमप्यानन्दमयं भावीति प्रोच्य 'शेषं भीमाय' इतिवत् तत्रावशिष्टं सर्वमपि भंगारसं निपीय तद्गुणातिशयान् काव्यालापैर-वर्णयत् ।

अथ ते वस्त्राणि पात्राणि च नीत्वा जलाशयं जिगमिषवो देवालयाद् बहिर्गन्तुं ततः प्रचलिताः ।

अधुना सूर्योदयानन्तरं घण्टाद्वयव्यतीतप्रायः समयः । रात्रौ जाता महा-वृष्टिः स्थगिताभूदिदानीम् । प्रशान्तं शीतलमपि च वायुतरलमासीद्वातावरणम् । महामेघपटलानि नीरन्ध्रश्लिष्टान्यपि चास्फाल्योदयत्सूर्यबिम्बं पाण्डुरमिव प्रतीयते स्म । तत् किल पूर्वाकाशक्षितिजे समुद्रादभ्युदयच्चन्द्रबिम्बमिवाभाति स्म । सदा सर्वदा प्रातः काले योहि जीवानां जागर्तिजन्यः कलकलः, खगानां कलकूजनानि, मनुष्याणां, वृक्षनीडाश्रितानां पक्षिणां, वने वसतां श्वापदानां, गोचरभूमिं व्रजतां शाद्वलेषु क्रीडाकूर्दनानि समाचरतां पशुसमूहानां, जलचराणां, सरिसृपाणां च या प्राकृता जागर्तिः, स्फूर्तिः, कर्मप्रवृत्तिर्भवति सा महत्याति-

वृष्ट्या निर्निरुद्धा स्थगिता स्तिमितास्तम्भिता बाधितेवाभूत् । स्तब्धतायाः साम्राज्यमिव सर्वतोदिग्बभूव । प्रवहतां जलौघस्त्रोतसां धारकल कला एव केवलं श्रूयन्ते स्म, नान्यत् किमपि कर्णकुहराणि वायुलहरीं विना शब्दायमान-मनुभूयते स्म । मध्ये मध्ये यदा कदा मेघखण्डेषु सूर्यदेवो दृश्यते स्म तदा तदातप-प्रकाशोष्मभ्यां धरणीतलं प्रलयानन्तरं पुनः प्राणस्पन्दनमिव कुर्वत् प्रतीयते स्म । यावत् सूर्यो मेघेभ्यः पृथग्भूतः प्रकाशं वितरति स्म तावज्जीवलोकोऽयं नव्यां चेतनामिवानुभवति स्म ।

अथ यावत्ते सुहृदो द्विजाः शिवालयस्य सुविशालं गोपुरद्वारदेशं प्राप्य दृष्टिं प्रसार्यावलोकन्ते तावद्दिङ्मूढा इवागतिका इव कान्दिशीका इव वज्रपात-भीता इवोद्भ्रान्ता इव विक्लवा विह्वला आतुरा भीतास्त्रस्ता इवाभूतपूर्वां कामपि महतीमाशङ्कां पुरतस्तत्कालमुपस्थितामिवाशङ्कमाना जातातङ्काः सहसा तारस्वरेण मिथः प्रोचुः—

'अहो अत्याहितम् ! समागतोऽयं प्रलयसमयः !! ग्रामं परितः प्रवहमाना नदी जलौघपूरप्रवाहैः परिपूर्णा कूलङ्कषा निर्मर्यादं प्रवहति !!! तीराश्रितान् ग्रामावसथान् बाधमाना सेयं सरित् समग्रं भूमण्डलं प्लावयन्तीव वर्धमाननीरा वर्वर्ति ! महीमण्डलं जलान्तर्विशतीव प्रतिभाति । ग्रामवासिनो जना यत्र तत्र शरणमन्विच्छन्तो निलीना अन्तर्गृहाश्रयस्थानेषु ! नद्या जलपूरप्रवाहैः प्रति-स्तम्भिता अन्ये लघवः परीवाहप्रवाहास्तस्य शिवालयस्य पादप्रदेशे परितः प्रसरन्तः सोपानपङ्क्तिमूर्ध्वंगतामपि क्रमशस्तरङ्गभङ्गैः स्प्रष्टुमिवोत्सहन्ते ! महानेवानर्थः कोऽपि मुखं व्यादायास्मान् प्रसह्य भक्षितुमिवोज्जृम्भते ! हा हन्त ! क्व नु वयं बतात्र घोरे विपज्जाले स्वयमेवापतिताः ? भगवान् पशुपतिः शङ्करः पायादस्मादवितर्कितादपायात् !' एवं बिभीषिकां महतीं मन्वानास्तात्कालिकीं यथार्थस्थितिं नग्नसत्यां प्रत्यक्षमवबुध्य किमप्युपायान्तरमपश्यन्तस्तत्रैव यथा-कथमपि शौचादिकं निर्वर्त्य पुनर्देवालयप्राङ्गणभूमिं प्राप्य कलामण्डपे स्वासने-षूपविष्टाः ।

अथ प्रातरेव चुलुकीकृतेन भङ्गारसमदेन तरलाग्निनेव प्रोद्दीपितमस्तिष्क-तन्तवस्ते बुद्धिवादिनो भावावेशादात्मनोऽप्रतिमशास्त्राचार्यत्वं व्युत्पादयन्तो वाक्-शूरा अनिष्टशतशङ्काकुला नान्यां गतिं पश्यन्तः स्वभावाभ्याससंस्कारवशात् सहसा भगवन्तं शिवं शङ्करमेव स्वरक्षितारं भावयन्तः स्नात्वा धौते वाससी परिधाय तत्र देवालये सुप्रतिष्ठितशिवलिङ्गपूजनाडम्बरे तत्परा अभूवन् । इत्थं व्यतीतो दिवसस्य प्रथमो यामः यावज्जलप्रवाहाः स्थगिता न भवन्ति,

यावच्च मार्गा यातायातं कर्तुं नानुमन्यन्ते, तावदत्रैव शिवालये स्थितिः क्षेमावहा, नान्यत् किमप्युपायान्तरमिति सर्वमवधार्य तैः सुहृद्भिः सर्वैस्तत्रैव निवासाय स्थिरीकृतं मनः। तेषां सर्वेषां धाराप्रवाहं सततमस्खलितं भाषणं सम्भाषणं वाग्विनोदा हासपरिहासाः काव्यस्तुतिपाठास्तु पदे पदे प्रखरतरेणोच्चस्वरेण बोभूयमाना अस्खलितमनवरतं च जायमाना अवर्तन्त। मध्ये मध्ये स्तुतिस्तोत्र मंत्रोच्चारकवितालापैश्चापि ते मुहुर्मुहुर्मोमुद्यमाना अभवन्। एवं कुर्वतां तेषां क्षुत्पिपासा च भृशं विवर्धमाना तच्चेतनां भृशं बबाधे। यद्यपि तेषां सविधे बह्वन्नपानभोज्यमासीत्तथापि ते स्वयंपाकाः शास्त्रिणो भोजनभट्टाः किञ्चिदि-वालस्यप्रमाददीर्घसूत्रताशैथिल्यं गताः कथं विनाग्निसाक्षिकमभोक्ष्यन्त ? सर्वेऽपि च भोजनसाधनसम्भारास्तैर्नगराच्छकटे सहानीता आसन्। परमत्र क्वनु खल्विन्धनादिकं पात्रासादनं वेति नो तत्त्वतः किमपि निश्चेतुमपारयन्।

इत्थं वृथा तर्कजालं निष्फलमूहापोहं कुर्वतां तेषां देवालयस्य पूजको वृद्धोब्राह्मण एकः कश्चित्तत्राकस्मात् प्रादुर्भूय—'नमस्कारा निवेद्यन्ते भूदेवेभ्यः! अहोभाग्यं मे यदत्रभवतां भवतां विदुषामद्य प्रातरेव पुण्यानि दर्शनानि जातानि !! धन्यामात्मनो भाग्यसम्पदं मन्ये! अहमत्र शिवालयस्य पूजको देवलो ब्राह्मणः प्रतिदिनं भगवन्तं सेवे। सेवकत्वेन मे कापि वृत्तिरुपकल्पितात्र क्षेत्रीयैर्ग्रामीणैः। अद्य तावज्जलवर्षणातिशयान्मध्येमार्गमवरुद्धो महद्भिः क्लेशैर्जलौघान् संतीर्यात्र सेवार्थं विलम्बेन प्राप्त इति क्षन्तव्योऽस्मि भोः! भवद्भिर्दयालुभिर्भूदेवैर्यदि क्षाम्येतासावपराधस्तदा भगवांस्तु मेऽयमाशुतोषोऽपराधमिममवश्यमेव क्षमेत।' एवं स खलु कर्मठो वृद्धस्तान् सर्वान् विप्रान् तत्रस्थान् सम्भारांश्च सर्वान् समृद्धान् वीक्ष्य स्थितेः सम्यग्ज्ञानं कृत्वा किञ्चिद्विहस्य तान् प्रत्युवाच पुनः—'महाभागाः! अद्य तावद्वृष्टिः प्रभूताजायत। दुर्दिनमेतत्। जलपूरोपप्लवैः सर्वे पन्थानोऽवरुद्धाः। देवालयोपकण्ठं सर्वतः पुरुषदघ्नं जलम्। श्रीमतां सर्वेषामद्येतः क्वचिदपि बहिर्गमनं नामासम्भवप्रायम्। अतोऽत्र देवालयान्तर्यावज्जलौघा न प्रविशन्ति तावद्रुद्राभिषेकमङ्गलं क्रियताम्। अत्र ममाधीनं यत्किमपि सामग्रीजातमस्ति तद्भवत्सेवायां निवेदयामि। जलप्लावन-प्रलयमयेऽस्मिन् समये भगवन्तं शिवं शङ्करं विना कोऽन्यः सहायो विपत्संतरणे स्यात् ?' एतावदुक्त्वा स स्वोटजं प्रति प्रस्थितः।

अथैको भोजनभट्टः प्रोवाच—'जीवनं मरणं वाधुना नास्मदधीनम्। यद्भाव्यं तद् भविष्यति। परं सखायः! श्रूयतां मे वचः। यद्वयमन्नपानादिकं नगरात् सहानयाम, तत्सर्वमत्र प्रसन्नेन मनसा भोक्तव्यमस्माभिः। क्रियन्ताम् पूजनभोजनसमारम्भाः। प्रवर्तन्ताम् ब्राह्मणोचिताः कर्मयोगाः।'

अन्योऽवदत्—'त्वयोक्तं सर्वं शोभनं, तथ्यं पथ्यं चास्ते। परन्त्वस्मिन् समये केन बतधूमघोरणीभिः पर्याकुलेक्षणेन पापच्येत भोजनम्? अधुनात्वियमुक्तिः सर्वात्मनात्र घटतेः—

"रन्धनं बन्धनं पुसां मरणं परिवेशनम्।
मरणादधिकं मन्ये भूलेपं पात्रमज्जनम्॥ १॥"

तदत्रातीव शीतदारुणे झञ्झानिलनिष्ठुरे च समये सर्वादौ सिद्धमन्नपानादिकं प्रातराशत्वेनोपभुज्यताम्। ततो निवृत्ते पूजाभिषेककृत्ये पुनः शक्तिमावर्ज्य साग्निसाक्षिकं सद्यः पक्त्वा सायं भोक्ष्यामहे।'

भङ्गाप्रियेण शुक्लेनोक्तम्—'गृह्यतां तावत् पुनश्चुलुकमात्रं भङ्गारसः सर्वैस्तदनु निर्वर्त्यन्तामन्याः सर्वा क्रियाः।'

एवं वदत एव तस्य वचनमाक्षिप्य कश्चिदवदत्—'अद्य तु तावदापद्धर्मोऽनुवर्त्यताम्। अस्मन्मते तु मन्त्रस्नानमेवात्र शुद्धये पर्याप्तं स्यात्। परं शिवाभिषेकस्तावत् करणीय एव, ततः कटिस्नानेन तु मन्येऽस्माकं सिस्नासा सर्वात्मना निर्व्यूढा भवेत्। भगवानपि स्वयं अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः' इति स्तूयते। स वै नस्ततः क्षमिष्यते नाम नूनम्। नो चेद्यदि वज्रवन्निष्ठुरेऽस्मिन् हिमानिलैः शीतं जलं प्रचण्डैर्धारासारैर्वर्षति पयोदे, जडतामापद्यमाने वातावरणे च वर्षाजलैः साङ्गोपाङ्गस्नाता वयं सद्यः स्वर्गातिथयो भवितार इति सुनिश्चितमेव मन्यताम्। 'न वारिणा शुद्ध्यति चान्तरात्मा!' अहं तु हस्तपादप्रक्षालनावधि सर्वां शुद्धिं जातां समर्थये। किं न जानीथ यूयं यदुक्तं शुद्धिकामैराचार्यैः प्रेक्षावद्भिः—

"अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा।
यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यंतरः शुचिः॥ १॥"

स्नानाडम्बरस्तु दाम्भिकानां धर्मयुद्धे कवचमिवोपकल्पितो धूर्तदिगम्बरैः। साधूक्तम्—

"आमध्याह्नं नदीवासः समाजे देवतार्चनम्।
सततं शुचिवेशश्चेत्येतद्दम्भस्य जीवितम्॥ १॥

तावद्दीर्घं नित्यकर्म यावत् स्याद्दुष्टमेलकम्।
तावत् संक्षिप्यते सर्वं यावद् द्रष्टा न विद्यते॥ २॥"

ततो भङ्गारसप्रियेण शुक्लेन मरीचिमिश्रितं भङ्गारसजलं चुलुकप्रमाणं गङ्गाजलमिवातिश्रद्धया भूयोऽपि तेषां कण्ठगतं महतानुरोधेन कारितम्। ततोऽवशिष्टं सर्वं स्वयमेव पपौ।

अथ सर्वे ते भोजनभट्टा गृहीतपात्रा यज्ञोपवीतं शिरसि कर्णयोश्च धनुराकारं तिर्यगवलम्ब्य मलत्यागाय प्रस्तुता अभवन्। शिवालयस्य तस्य द्वारदेशं गत्वा यावत् पुनः पश्यन्ति तावज्जलपूराः क्षणं स्थगिता इवादृश्यन्त। धाराप्रवाहाः स्तिमिता इवाभूवन्। प्रवर्षन्तो झंझानिलाघातहता मेघा व्योम्नि व्यशीर्यन्त। वृष्टिर्विरराम, किञ्चिदाश्वस्तमिव प्राणिजगज्जातम्। कथमपि जलार्द्रायां भूमौ, कर्दमगर्तप्रायेषु च स्थानेषु यत्र तत्र शौचस्नानादिकं महता कष्टेन निर्वर्त्य प्रक्लिन्नवाससस्ते सर्वे विजयाविदग्धा मदविह्वलाः शिवालयं प्राप्ताः। धौते वाससी परिधायासनान्युपकल्प्योपविष्टास्तेः परस्परं मुखान्यवलोकमानाः स्थितेर्गम्भीर्यमनुभवन्तः सन्ध्योपासने प्रवृत्ताः। प्रोक्तेन प्रकारेण सन्ध्यां पूजां शङ्कराभिषेकं च परिसमाप्य झटिति स्वल्पाहारयोजनायां तत्परा बभूवुः। धूपदीपपुष्पैः सुवासिते शिवालये सुरक्षितास्ते बाह्यपरिस्थितेरस्पृष्टाः पुनः पुनर्गृहीतभङ्गारसा दीर्घसूत्रतामातन्वाना गृहेभ्यः समानीतं सर्वं पाथेयं पोट्टलिकाभ्यो निष्कास्य यावन्मिलितोपचारैः पत्रावलीः संयोज्य यावत् सतृष्णं भोजनारम्भं कामयन्ते तावन्मिश्रमहाभागेन ब्रह्मार्पणमन्त्रोच्चाराः प्रारब्धाः—

"ओ३म् ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ १ ॥

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ २ ॥

बलिर्विभीषणो भीष्मः प्रह्लादो नारदो ध्रुवः।
नारायणप्रसादं वै सर्वे गृह्णन्तु वैष्णवाः ॥ ३ ॥

कालरावणचण्डश्च नन्दीभृङ्गीजटाधराः।
सदा शिवप्रसादं वै सर्वे गृह्णन्तु शाम्भवाः ॥ ४ ॥"

यथा यथा ब्रह्मार्पणविधिमन्त्राः सस्वरोच्चारणाल्लम्बमाना दीर्घाश्च बोभूयमाना जायन्ते तथा तथा ते क्षुत्क्षामकण्ठाः सतृष्णं बुभुक्षवो भोजनभट्टा अन्तर्मनसि पूर्णाहुतिं कामयमाना अपि धर्मध्वजमर्यादां वहन्तः कथमपि निर्वहन्तोऽपि विनोदभङ्ग्या प्राहुः—

"अये! अत्र तु भौतिकविग्रहाणामस्माकं प्राणोत्क्रान्तिसमयोऽस्ति

संजातो, गोदानवेलेयमागता, क्षुद्देवी चात्रोदरकुरुक्षेत्रे ससत्याग्रहं महान्तं विप्लवं सशङ्खध्वनि समारुब्धुमन्तव्र्यूहान् रचयन्तीव वर्तते तत्र श्रीमन्तो महाभागाः प्रकाण्डं ब्रह्मार्पणकर्मकाण्डस्याकाण्डताण्डवं सतालस्वरं वितन्वाना मोदन्ते, तदधुना संक्षिप्यतां विधिरेषः, स्वात्मार्पणेऽविलम्बं प्रयत्नो विधीयतां भोः !" इति वदन्त एव प्रोच्चैः—स्वरं 'नमः पार्वतीपतये हराय !' इति वा 'दाता भोक्ता हरिः स्वयम् !' इति समुच्चार्य पत्रावलीषु परिवेशितेभ्यो भोज्यपदार्थेभ्योऽतीव सस्पृहाः सतृष्णाश्चाजायन्त ।

अथ कियन्तं कालं तूष्णीमालम्ब्य भूरिभुक्तवतां तेषां प्रातराशस्तृप्तये चानन्दाय चाभूत् । तदनु गृहीतताम्बूलवीटिका एलालवङ्गतमालचूर्णं चर्वयन्तः सर्वे ते स्वस्था भूत्वा भोजनोत्तरक्रियाकलापान्निरवर्तन्त । अधुना क्षणं विश्रम्यात्मनः स्थितिमपेक्षातः स्वस्थामनुभवन्तस्ते सुखासीना अभूवन् । शकटवाहको वृद्धो देवालयस्य सेवको तौ द्वावप्येतौ तैः प्रदत्तमाहारं भुक्त्वा भूशुद्धिं पात्रमज्जनादिकमकुरुताम् । कांश्चित् क्षणान् यावत् वामकुक्षिशयानाविश्रामं कृत्वा जलमापीय ततः काव्यालापान्, सङ्गीताराधनं भजनानि, कीर्तनानि, सामवेदमारभ्य चित्रपटगता गीतीर्यावत् साङ्गोपाङ्गां सङ्गीतपद्धतिं स्वगलास्फालनैः प्रदर्शयन्तः पर्यन्ते वाग्वीरास्ते विषयाद्विषयान्तरं कामयमाना भूयोभूयः सव्यङ्ग्यं साक्षेपं सद्भ्रूभङ्गं सर्वामपि जगतः स्थितिमालोचयन्तः सिद्धान्तवादेषु प्रवृत्ताः । नवीनेऽस्मिन् युगे श्राद्धतर्पणादिषु ब्राह्मणभोजनादिकर्मसु लोकानाम् नास्तिक्यमनुत्साहं प्रति च सामर्षं क्षुभ्यन्तोऽपि चात्मारामाः समाजे स्वस्थितिपालने ऽक्षमतामात्मन आकलय्य नव्याश्चायपार्टी—डिनर—स्वल्पाहार—विश्रामगृहसेवन—क्लबगोष्ठीः स्वल्पमतानां प्रतिस्पर्द्धिनीः परिपाटीः प्रजातान्त्रिकीरग्निज्वालामाला इवालोचन् ।

केनचित् प्रोक्तम्—'वृथैव क्लिश्यथ यूयम् ! 'यावज्जीवेत् सुखं जीवेत् !' इति सिद्धान्तीकृत्य प्रवर्तध्वमत्र जीवनसङ्घर्षे वैज्ञानिकेऽपि राजनीतिप्रधानेऽप्यर्थैकसाध्येऽपि च वर्तमानेऽस्मिन् समये ! विश्वप्रजानामुदरयन्त्रं तु कथं नामोपेक्षेत विश्वम्भरो भगवान् ? नेतारो, लोकनायकाः समाजसुधारकाः शासका मन्त्रिमण्डलस्थाः सदस्याः स्वयं मन्त्रिप्रवराः सर्वेऽपि मिलित्वा प्रजानामुदरयन्त्रसञ्चालनायान्नं जलं वस्त्राणि संरक्षणं विचारस्वातन्त्र्यं च यथार्थं दातुं न पारयेयुस्तदा कृतं प्रजातन्त्रेण । तदत्र मात्स्यन्यायं जीवति जीवलोके येन केन प्रकारेण प्रसिद्धः पुरुषो भवेदिति सर्वेषां भोजनभट्टानां वर्गसङ्घटनं विधाय कोऽपि पुरुषार्थोऽवलम्ब्यताम् !"

"न केवलं ब्राह्मणा एवं भोजनभट्टाः ! यद्यपि नवीनैः पार्टीप्रवर्तकैर्ब्राह्मणास्तथा कथितास्तथापि वस्तुस्थितिः सेयं यत् समस्तेऽपि भूमण्डले, सर्वेष्वपि राष्ट्रेषु, सर्वास्वपि मानवजातिषु भोजनभट्टाः सार्वकालीनाः प्राप्तकालमुपलभ्यन्त इति तात्त्विकोऽनुभवः प्रेक्षावतां, विशेषतोऽस्मादृशां तथाकथितानां भोजनभट्टानां भुक्तभोगानाम्। एवं बहुमतं भोजनभट्टत्वम् ! तद्देशकालानुरूपं क्षेमावहमान्दोलनं किमपि प्रवर्तताम्। नो चेदिमे सर्वभक्षा नव्या भोजनभट्टाः स्वसभ्यतावर्गीयं बहुमतमापाद्य ब्राह्मणानेव शाकाहारिण प्रचण्डभोजनभट्टानाक्षिप्य प्रक्षिप्य कूटनीतिजाले स्वोत्कर्षं साधयेयुरन्ताराष्ट्रियभोजनभट्टपरिषत्सु। भारतीयानां सनातनभोजनभट्टानामेकादशीव्रतोपवासव्यवस्था च भवेदत्र नवराष्ट्रयोजनासु।"

अथान्योऽवादीत्—"नन्वनागतवतीं चिन्तां किमर्थं विडम्बयथ ? 'सद्यो गृह्णन्ति पण्डिताः' इति मूलमन्त्रो न विस्मर्तव्यः। अस्मत्सहानीताः केऽपि सम्भारा असिद्धाः सिद्धा वावशिष्यन्ते। सायन्तनस्य भोजनस्य सिद्धये शनैः शनैरुपक्रमस्य सूत्रपातो विधीयतां वार्तालापविनोदैर्यावज्जलं पिबामः। 'स्वल्पारम्भाः क्षेमकरा' इति मया प्रस्तावितं ततो भवन्तः प्रमाणम्।"

कश्चिदपरः साश्चर्यमब्रवीत्—'अयि भोः, महात्मानः ! अधुनैवातृप्ति प्रभूतं भुक्तं भुक्तवतामपि वत्सानां न तावत्तात्त्विकस्तोष इति धन्या क्षमताशालिनां श्रीमतां सेयं भोगतृष्णा ! मुग्धाः !! यूयमिदानीमात्मनो वास्तवीं स्थितिं, परिवर्तितौ देशकालौ, भोगवादिनं समाजं, जनसंख्यावृद्धिमनु भोजनसमस्याः पश्यन्तोऽपि न पश्यन्तः सर्वं प्राक्तनमेव चिन्तयथ। अतिशये भोगवादे 'भोगा न भुक्ता वयमेव भुक्ताः' इति परिणमेत्।'

ततः शुक्लमहाभागाः साटोपमुपविश्य साडम्बरमाहुः—'जानीमहे सर्वं वयं क्रान्तदर्शिनः। 'अन्नं ब्रह्म, 'रसो वै सः'। तथापि वयं नव्यानां मते बताक्षेपयोग्या न प्रसिद्ध्यामः। अतो वयं भोजनं प्राणपोषणे स्वाभाविकं कर्मं मन्वाना भगवत्प्रसादं परिकल्प्य परस्परं बन्धुत्वेन मुहुर्मुहुर्गोष्ठीरसास्वादनमाकाङ्क्षन्तः सहृदयतानुरोधात् 'सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै' इति भुञ्जामः।'

'पुनर्नव्यास्तु प्रकारान्तरैः समाजोत्सवैर्गोष्ठीरससुखमनुभवन्ति। अतीव स्वाभाविकोऽयं मानवधर्मः। प्रत्यक्षं व्यावहारिकं च सत्यमेतत्। सर्वेऽपि च सचेतनाः प्राणिनः स्वार्जितं भोक्तुमेव हस्तपादस्पन्दनं कुर्वन्ति। किं बहुना, 'सर्वारम्भास्तण्डुलप्रस्थमूलाः !' 'मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् !'

इति व्यवहारनीतेः स्वयं सिद्धः सार्वभौमः सिद्धान्तः। स चायं जगत्क्रमः प्रवर्तते तावन्मात्रास्मान्नमेव भोजनभट्टत्वे कोऽपि मरणधर्माक्षेप्तुं दुश्चेष्टताम्। उक्तं च—

"भोगे भोजनशक्तिश्च रतिशक्तिर्वरस्त्रियाम्।
विभवे दानशक्तिश्च न चाल्पतपसः फलम्॥ १॥'

"यदि च केनचित् 'क्षीणा जना निष्करुणा भवन्ति' इति लोकोक्तिगतं सत्यं साक्षात् कारयितुं चेष्ट्यते, तदतीव स्वाभाविकम्! यतः—

"उद्वेजयति दरिद्रं परमुद्राया झणत्कारः।
गृहपतिरतिमिलितायाः कङ्कणनादो यथा जारम्॥ १॥"

"परं वीराः! यावदिमे नवसंस्करणा भोजनभट्टा महार्णवे तिमिङ्गिला इवास्मान् शाकाहारिणो जीवान् स्वभुजबलोपार्जितमुपभुञ्जानान् व्यावल्गन्ति, तावद्वयमेव सर्वभक्षपक्षीयान्नूनं जेष्याम इति वादेनालम्! अधुनाद्यतनीं चर्यां ससुखमाचरत निर्विशङ्कम्॥"

इत्थं सुहृद्गोष्ठयां गल्पाष्टकानि जल्पन्तो मोमुद्यमाना अपराह्णोत्तरं वायुसेवनाय प्राकृतिकदृश्यावलोकनाय च ते मुहुर्देवालयद्वारमागत्य घनाडम्बरैराच्छाद्यमानं, मध्ये मध्ये विद्युत्स्फुरणतरलं दुर्दिनायमानं वातावरणं विलोक्यागत्य पोताश्रयाः खगा इव पुनस्तत्र देवालये परावर्तिताः। भङ्गारसमदस्य प्रभावेऽल्पीयसि जाते निशामुखे चासन्नमायातेऽन्धकारे सर्वतः प्रसृते च ते सर्वे भोजनभट्टाः स्वस्याः स्थितेर्याथार्थ्यं गाम्भीर्यं चावाबुद्धयन्। सायङ्काले पुनर्भोजनं स्थगयित्वा तां रात्रिं तत्रैवातिवाहयितुं स्थिरीचक्रुः।

सायं सन्ध्योपासनं शिवाय धूपदीपपुष्पनैवेद्यारार्तिकं विनिवेद्य शान्तिपाठमङ्गलमन्त्रोच्चारान् कर्त्तुं व्यवसिताः। 'श्वोभूते नवान्नं भोक्ष्यामः!' इति मनोरथान् पालयन्तो भूयो भूयो जलं पिबन्तोऽथ ताम्बूलपूगीफलैलालवङ्गतमालादिभिर्मुखवासैर्मोमुद्यमानाः शयनीयानि प्रकल्प्य ससुखमस्वपन्।

अथ द्वितीयेऽहनि प्रत्यूषे समुत्थाय शिवालयाद्बहिर्विस्तृतायां पार्वत्यभूमौ प्रवहन्त्या नद्यास्तीरदेशं प्राप्ताः। तत्रैव शौचस्नानादिकं प्रातः कृत्यं च निर्वर्त्य धौतवस्त्राणि परिधार्य महतीमेव स्वस्थतामन्वभवन्।

अधुनाकाशमण्डलं विगतघनं स्वच्छं प्रसन्नं चाभूत्। पूर्वस्यां दिशि

चारुणोदयप्रभा गिरिशिखराणि, वनस्थलीश्चाभिरोचयन्ती सर्वतः प्रससार। वृक्षपङ्क्तिषु नीडाश्रितानां खगानां कलरवा अश्रूयन्त। क्रमशो जायमानेन सूर्योदयेन सर्वमपि सचेतनं जगद्यथापूर्वं प्राकृतां स्थितिं प्राप्तमिवादृश्यत। सूर्यबिम्बं शनैः शनैः प्रत्यक्षं क्षितिजेऽवालोक्यत। स्वर्णप्रभाभास्वरैः सूर्यस्यारुणैः किरणैरातपोष्मणा च संस्पृष्टा जलक्लिन्ना भूभागाः पन्थानश्च सर्वे नीरजस्काः स्वच्छा यातायातयोग्या बभूवुः। शिवालयं प्रति निवृत्तास्ते भूदेवाः प्रातः सन्ध्योपासनं शिवपूजनादिकं कृत्वा महानीतैः पदार्थैर्मोदकवाटिकासूपशाकादीनि विविधानि परिपक्तुं सोद्यमा अभूवन्। भंगारसं तु सज्जीकृत्य वनौषधमिवापीय महर्षिकुलतन्त्वस्ते विप्रा पञ्चाग्नितपस्तप्यन्तस्तं शिवालयाश्रमं ज्वालामालाकुलं धूमस्तोमघोरणीकर्बुरमिव कुर्वाणाः सर्वरसस्वादीयसीर्भोजनसामग्रीरपचन्। मध्याह्नोत्तरं प्रभूतं भुक्त्वा क्षणं विश्रम्य च केचिच्छकटीमारूढाः केचन शकटीमनु पद्भ्यामेव 'भोजनान्ते शतपदं गच्छेत्!' इति विधिविधानं नाटयन्तो वव्रजुः। मध्ये मध्ये जलाशयेभ्यो जलं पेपीयमाना नानाविनोदविलासान् कुर्वन्तो दिनस्य शेषे नगरमागत्य स्वगृहान् जग्मुः।

—:०:—

# मूढचिकित्सा

वनान्तरे खट्वायामेकस्यामेकं रुग्णं जनं नीयमाना: केचन श्रमजीविनो जना: पार्वत्ये पथि गच्छन्ति। रोगिणस्तस्य महतीमवस्थां सम्भावयन्तस्ते सर्वे मन्दं मन्दं निष्पन्दं सावधानं च पदानि निदधतश्चलन्ति। तस्य रुग्णस्य रोगशय्याया अग्रत: पञ्चशो जना उच्चावचं मार्गं निर्दिशन्त: सन्त: सरन्ति, पृष्ठतश्चापि केचन शस्त्रपाणय: सार्वकारीया: प्रहरिणश्चानुगच्छन्ति। ते सर्वेऽपि खिन्ना दीना विषण्णा: क्षुत्तृड्भ्यां परीता मार्गक्लेशै: परिश्रान्ता अनिष्टाशङ्कातङ्काकुला: क्लान्ताक्लिष्टाश्च सर्वमप्यात्मनो दु:खं परिस्थितिगौरवात् सहमाना मौनमेवाध्वानमतिक्रामन्ति। मध्येमार्गं यत्र तत्र गव्यूतिप्राये मार्गेऽतिलङ्घिते ते सर्वे क्वचित् सघनवृक्षच्छायामध: शय्यामुत्तार्य रोगिण: स्थितिं निपुणं परीक्ष्यालोकन्ते, समीपवर्तिन: कुतश्चिज्जलाशयाज्जलमानीय तस्मा आतुराय जलमौषधं पथ्यरूपेण दुग्धं च पाययन्ति। क्षणे क्षणे पुनस्ते रोगिणं किमपि पृच्छन्ति परं न स रुग्ण: किमपि भाषते! स निश्चेतनप्रायो न किमपि चेष्टते, न च पार्श्वपरिवर्तनमपि कुरुते। इत्थं व्यवसितास्ते गोधूलिसमये रोगिणं वहन्तो ग्रामोपकण्ठं प्राप्ता:।

क्षेत्रेभ्य: समागच्छन्त: केचन ग्रामीणा: कर्षका, गोचरभूमिभ्य: प्रतिनिवर्तमाना गोपाला:, कूपाज्जलमानयन्त्यो ग्रामवध्वो महिलाश्च तमिमं दुस्सम्वादं स्पष्टमस्पष्टं च कर्णाकर्णि परस्परं ग्रामे कथयामासु:। एवंविधमनिष्टोदन्तं समाकर्ण्य तत्र ग्रामे सर्वत्र सर्वेऽपि च लोका महतीं चिन्तां प्रापु:। रुग्णस्य तस्य रमाकान्तस्य वृद्धौ पितरौ, ज्येष्ठो भ्राता, प्रतिवेशिनो जना:, सगोत्रा:, सम्बन्धिन:, सुहृद:, सखायश्च सर्वेतमिमं समाचारं निशम्य शीघ्रमेव हि रमाकान्तस्य गृहाङ्गणे समवेता:।

'किमेतदकस्मात् रमाकान्तस्यानिष्टं जातम्? 'अये, सप्ताहात् पूर्वं त्वस्माभि: स्वस्थ: प्रसन्नो नीरोग: सर्वत: कुशली च दृष्टो रमाकान्त! न ज्ञायते, सहसैतत् किं जातम्?' 'भगवान् रक्षतात्तमेनं रमाकान्तम्!' इत्यादयो नानाविधा वार्ता: सर्वेषां मुखेभ्यो निर्जग्मु:। गृहे महिला: सर्वा एकस्य प्रकोष्ठस्याभ्यन्तरे शय्यामेकामास्तीर्य रुग्णस्य तस्य रमाकान्तस्य गृहागमनं प्रतीक्ष-

माणास्तनद्दिदृक्षवस्तस्थुः । केचन युवानस्तमागच्छन्तं रमाकान्तं गृहमानेतुं ग्रामोपसीम्नि तं प्रतिजग्मुः । अस्मिन्नेव समये रुग्णस्य तस्य रमाकान्तस्य रोगशय्या तद्गृहप्राङ्गणमाजगाम । स्वस्कन्धेभ्यो रोगिणः खट्वामवतार्य सर्वे तेऽनुचरा यत्र तत्र क्रमशो यथास्थानमुपाविशन् । तत्रोपस्थितेषु जनेषु केचन युवानः सास्तरणं रमाकान्तं गृहाभ्यन्तरं निन्युः । प्रकोष्ठाभ्यन्तरे पूर्वतः सज्जितायां शय्यायां तमशाययन् । सुव्यवस्थितायां परिस्थितौ सञ्जातायां, सर्वादौ रमाकान्तस्य ज्येष्ठो भ्राता कमलाकान्तस्तत्समीपं गत्वा रमाकान्तस्य कर्णयोः किमपि शनैः शनैरवदत् परन्तु रोगावेशवशादत्यन्तं पराधीनतां गतो विसंज्ञ इव न स किमपि प्रत्युत्तरं दातुमपारयत् । केचिदन्येऽपि चात्मीया जना रमाकान्तस्य शय्यां परितः समागम्योपविष्टास्तं हि सावधानं निपुणं च पश्यन्ति पृच्छन्ति च तं मुहुर्मुहुः परन्तु रमाकान्तस्त्वचेतनप्रायो मूर्च्छित इव नेत्रे निमील्य मौनमेव शयान आसीत् । तस्य तामेतावतीं महतीं रोगाक्रान्तां दशामालक्ष्य सर्वेऽपि जनाः स्तब्धा जडा अगतिकाः किंकर्तव्यविमूढा इव जोषं तस्थुः । तदानीमेवैकेन केनचिज्जनेन जलमानीय रमाकान्तस्य मुखे दशप्राया जलबिन्दवः पातिताः । रमाकान्तस्तान् जलबिन्दून् महता काठिन्येन कथमपि गलाधः कृत्वापिबत् । ततः पुनरपि स यथापूर्वं निश्चेष्टं सुष्वाप ।

अथ गृहप्राङ्गणैककोणे निषण्णो रमाकान्तस्य पिता रोगशय्यां नीत्वा तत्र समागतानामनुचराणां नायकमपृच्छत्—

'अयि, भोः ! नायक !! कथं मे वत्सो रमाकान्तोऽकस्मादेवं रोगग्रस्तः समभूत् ? किमिति युष्माभिः सर्वैरस्य वत्सस्य मे रुग्णतासम्बन्धी समाचारोऽस्मभ्यं शीघ्रमेव न प्रहितः ??'

नायकोऽवदत्—'श्रीमन् ! अस्माकं कार्यालयाध्यक्षाः श्रीरमाकान्तमहोदयाः ह्यः सायं राजकीयकार्यप्रसङ्गात् क्वचित् कार्यप्रगतिं निरीक्षितुं ग्रामान्तरमगच्छन् । मध्यरात्रे ततः परावृत्ता नगरमाजग्मुः । आगता एव त एतेऽकस्मात् सहसा रोगाक्रान्ता बभूवुः । समग्रां रात्रिं यावत्ते महतीं हि ज्वरपीडामन्वभवन् । अद्य प्रातस्तेषां स्थितिरत्यन्तं शोचनीया समभूत् । ततो वरिष्ठाधिकारिणः केचिद्गृहमागत्य डाक्तरानाहूयौषधोपचारैस्तच्चिकित्सामकारयन् । महद्भिः प्रयत्नैस्तैः सर्वैरोगोपशमाय नानाविधोपाया औषधोपचाराश्चविहिताः परन्तु ज्वरावेशो यदा नांशतोऽपि चाल्पाल्पमपि स्थगितस्तदा तैराज्ञप्ता वयं तानेतानस्मदधिकारिमहाभागान् श्रीरमाकान्तमहोदयान् शय्यामध्यारोप्यात्रानीतवन्तः । एतेषां रोगस्य वास्तवं निदानं तु वयं न जानीमहे

परमेतत्सुनिश्चितमेव यत्तेषां स्थितिर्वर्तात्यन्तं शोचनीया वर्तत इति। श्रीरमाकान्तमहाभागानामत्रानयनमेव श्रेयसे स्यादिति विचिन्त्यैव वयं तानेतानत्रानयाम। रोगविषये द्राक्तरैर्यन्निरणायि, तत् सर्वंपत्रपत्रे सुस्पष्टं लिखितमास्ते। अतोऽग्रे भवन्त एव हि प्रमाणम्।' इत्युक्त्वा स नायकः कानिचित् पत्राणि लिखिताक्षराणि रमाकान्तस्य पितुर्हस्ते समर्प्यान्यामाज्ञां प्रतीक्षमाणो यथापूर्वं प्राङ्गणैकभागे न्यषीदत्। कियत्कालानन्तरं स वृद्धो नायको रमाकान्तस्य पितुरादेशं प्राप्य सर्वानपि तान् भृत्यान् सह नीत्वा पुनर्नगरं गन्तुं प्रतस्थे।

अथ द्वितीये दिवसे प्रातर्निःसंज्ञो रमाकान्तः कथमपि चेतनामलभत। तस्य ज्वरोऽपि च मन्दतामगच्छत्। तथापि ज्वरांशस्त्वद्यापि तच्छरीरं पीडयन्नासीत्। किञ्चिदिव लब्धचेतनो रमाकान्तो नेत्रे उन्मील्य यावत् पश्यति, तावत्तेन दृष्टं यत् तस्य रोगशय्यां परितस्तत्पिता, माता, भगिनी, पितृव्यो, भ्रातर इत्याद्याः सर्वेऽपि च कौटुम्बिका जना उपविष्टाः सन्ति। ते सर्वेऽतीव चिन्ताकुला दीनदीना विवर्णाकृतयो विषण्णाः सोद्वेगा अनिष्टमाशङ्कमानास्तस्य रोगस्योपचारचिकित्सासम्बन्धिनं विचारविमर्शं कुर्वाणा वर्तन्ते। तथाहि—

पिता—किमिदमेतावदनिष्टं सहसापतितं वत्सस्य मे रमाकान्तस्य? को नु बताभ्युपायः क्रियतां येन वत्सो मम स्वस्थो भवेत्??'

माता—'हे भगवन्! दुर्गे मातः!! त्वमेव मे वत्सस्य रमाकन्तस्यानिष्टं निवारय! हे विष्णो! हे गणनायक!! हे हनुमन्!!! रक्ष, रक्ष मे बालकमेतं रोगाक्रान्तं हि रमाकान्तम्! प्रभो! यावत् ममासौ बालको नीरोगो भूत्वा पूर्णतः स्वस्थः प्रसन्नो न भवति, तावन्नाहं लवणं, घृतं, शर्करा, दुग्धं च भक्षयिष्यामीति प्रतिजनो भगवोन्! दीनदयालो!! पाहि, पाहि, एतस्मात् सहसापतितात् सुदुस्सहादनिष्ठान्मे वत्सं रमाकान्तवराकम्!!!'

रमाकान्तस्य भगिनी—'हे देवि! कालिके! मातः!! मा भूत्किमप्यनिष्टं मम भ्रातूरमाकान्तस्य! दयस्व देवि!! ममाग्रजस्य रोगमुक्तिपर्यन्तं नाहं किमपि फलं सेविष्ये, न च सीमन्तश्रृङ्गारं करिष्ये, न च ग्रामसीमानमुल्लङ्घिष्ये! जाते हि स्वस्थे मम बन्धौ रमाकान्तेऽहं ब्राह्मणान् भोजयिष्ये, बटुकांश्च पूजयिष्यामि!'

रमाकान्तस्य पितृव्यः—'अयि भोः! तस्मिन् खलु ग्रामे श्रीशिवनारायण-

शुक्लो नाम वैद्यराजः सुप्रसिद्धो हि श्रूयते । स एवात्र कमपि सम्प्रेष्याहूयताम् । सोऽत्रागत्य किमप्यस्मै बालाय रमाकान्ताय सदौषधं दत्वा नीरोगं कुर्यात् । स किल शुक्लो वैद्यो नाडीपरीक्षणे, रोगनिदाने, त्वपरो धन्वन्तरिरिव कौशलं धत्ते, इति क्षेत्रेऽस्मिन् वसतां सर्वसाधारणानां सुमहान् विश्वासः !'

अथैको वृद्धः कश्चित् स्वकूर्चान् संवाहयन् महत्या गम्भीरया मुखमुद्रयावदत्—'अये, किमितिभोः ! स दीनानाथो नाम भैरवभट्टो नाहूयते ? तच्छरीरे हि बटुकभैरवस्यावेशो भवति । तमाविष्टः स रोगिणां भूतप्रेतपिशाचबाधाग्रस्तानां जनानां तात्त्विकं निदानं क्षणादेव करोति, दृक्पातमात्रेणैवातुरान् सद्यो नीरुजो विधत्ते !'

काचिद्वृद्धा महिला तमेतमभिप्रायं समर्थयामास—'सत्यमेतद्भोः ! परन्तु रविवासर एव ननु स भैरवाविष्टो भवति निशीथे ! अद्य तु तावद्गुरुवारस्तदा कथं तेन रमाकान्तश्चिकित्स्यताम् !'

वृद्धः पुनरुचे—'अये ! ज्ञातं मया !! तद्ग्रामसमीपं श्मशानभूमौ मम परिचितः कश्चिद्योगिजनो ब्रह्मराक्षसं संसाधयंस्तिष्ठति । स खलु मन्त्रतन्त्रौषधैः पश्यतामेव सर्वेषां क्षणादेवासाध्यमपि रोगिणं स्वस्थं करोति । तमेवात्रामन्त्र्य दर्शयन्तु रमाकान्तम् ।'

इत्थं कश्चित् किं कश्चन किमिति स्वमतानुसारं रोगचिकित्सार्थं प्रस्तावं चक्रे । एवं ते नानाविधान् रोगचिकित्सोपायान् चिन्तयन्त अपि तत्त्वतो न किमपीदमित्थं निर्णेतुमपारयन् । समयगतिर्न कमपि प्रतीक्षते । तद्दिनं तु विचारविनिमयं कुर्वाणानामेव तेषां व्यतीयाय ।

अथ तृतीये दिवसे रमाकान्तस्य ज्वरावेगः पूर्वापेक्षया कथमपि नैयून्यं जगाम किन्तु तस्याऽशक्तिस्त्वतितरामवर्द्धत । सोऽधुनापि शय्याशरणो नोत्थातुं न च भाषितुमपारयत् । महता काठिन्येन सर्वतो दृष्टिं प्रसार्य सोऽपश्यत् ! यद्यपि रमाकान्तस्तत्रत्यां परिस्थितिं, लोकानां वार्तालापान् यथार्थतो बुबुधे परं प्रबुद्धचेतनोऽपि चाशक्ततया मौनमेवावलम्बमानस्तस्थौ । अथ मध्याह्नोत्तरं तस्य माता तत्समीपमागत्य शिरसि हस्तं निधायावोचत्—

'वत्स ! रमाकान्त !! अपित्वं मां ते जननीं परिचिनोषि ? तात ! कथं त्वमेवंविधो रुग्णोऽसि संजातः ?? ब्रूहि, ब्रूहि; वत्स ! किमर्थं त्वमस्मान्न सम्भाषसे ? हा, हन्त ! हन्त! ! दुर्भाग्यमेवैतन्मम ! मुहुर्मुहुः पृष्टोऽपि ममासौ

रमाकान्तोऽक्षरमेकमपि नो वक्ति ! केवलमक्षिणी विस्फार्य परवश इव मे दिशमपश्यन्नितस्ततो निर्लक्ष्यमीक्षते !! उद्भ्रान्त इव प्रेताविष्ट इव वाक्कीलित इवोत्स्वप्नायमान इव जोषमवलोकयति !!! हा, किं कुर्याम्, क्व गच्छेयम्, कं प्रच्छेयम्, कमाह्वयेयम्, कं चाराधयेयम् !!!'

रमाकान्तो नाम सार्वकारस्य प्रशासनतंत्रे वरिष्ठं पदमधितिष्ठति। स खलु विश्वविद्यालयस्य सर्वोत्तमां परीक्षामुत्तीर्णोऽस्ति। प्रशासनयोग्या आइ. सी. एस. परीक्षायामपि सः प्रथमश्रेण्यामुत्ततार। स खलु विद्वान् कुशलो राजनीतिज्ञो व्यवहारपटुः कार्यकलापेष्वतितरां निपुणश्चास्ते। परं तस्य जन्म नितान्तनिरक्षराणां ग्रामीणानां वसतावजायत। स स्वयं रूढीवादान्मुक्तः स्वतन्त्रचिन्तको नवसभ्यतानुयायी सुशिक्षितश्च वर्तते, परं तस्य कौटुम्बिका ज्ञातयः परिचिताश्च सर्वे प्राचीनतावादिनः पुराणपुरुषा रूढीवादाक्रान्ता जडप्राया इवासन्। ततः स स्वान्तर्मनसि सर्वं परिस्थितिजातं वातावरणं जानानोऽपि चात्मनः स्वरूपं, विद्यां, बुद्धिं, मनोभावाननुभूतीर्विचारांश्च प्रच्छन्नमाच्छाद्य तेषां सर्वेषां स्वरोगचिकित्सासम्बन्धिनो विचारान् शृण्वन्नपि नैकाक्षरमप्यभाषत। तन्माता, पिता, भगिनी, पितृव्यः, परिचितास्तथान्येऽपि च ग्रामीण यदा भूयोभूयः किमपि भाषमाणा न कथमपि व्यरमन्त तदासौ स्वव्यक्तित्वं गोपायन् खट्वायां तस्यां केवलमन्यतः पार्श्वपरिवर्तनं विधायान्यकुक्षि निभृतं सुष्वाप।

अथान्येद्युः केचन ग्रामीणास्तस्य ज्ञातिजनास्तत्र समाजग्मुः। नमस्कारादिशिष्टाचारानन्तरं जलपानं विधाव यावत्ते गन्तुं व्यवस्यन्ति तावदेव रमाकान्तस्य पितृव्यो गृहस्यान्तः प्रकोष्ठाद्बहिरागत्य तान् ग्रामीणानभिसम्बोध्याब्रवीत्—

'अयि, भोः ! लालाराम !! अस्माकं भ्रातृपुत्रोऽयं रमाकान्तो रोगाक्रान्तो वर्तते। भवांस्तु तावद्विषवैद्यो मान्त्रिकस्तान्त्रिकश्चेति श्रूयते। कथमप्यस्यौषधोपचारं कुरुष्व। आगच्छ, गृहाभ्यन्तरं प्रविश्य निरीक्षस्व रोगिणम् ! नाडीपरीक्षणं कृत्वा ततो यत्कर्तव्यं, तदादिश।'

एवमुक्त्वा स तं लालारामं हस्तेन गृहीत्वा कोष्ठान्तरं नीत्वा शय्यामधिशयानं रमाकान्तमदर्शयत्। लालारामः प्रसुप्तं रमाकान्तं वीक्ष्य तद्रोगस्य निदानं कर्त्तुं चेष्टते। क्षणं तस्य नाडीं परीक्षते, क्षणं हृदयगतिक्रममवलोकते,

क्षणं नेत्रे समीक्षते, क्षणमुदरं स्पृशति, क्षणं जिह्वां निभालयति, क्षणं शिरः परामृशति, क्षणं दन्तावलिं च परिपश्यति। चिराय निपुणं परीक्ष्य लालारामोऽब्रूत—

'अये! रोगस्तु तावन्नैव वर्तते! शङ्के, सोऽयं रमाकान्तो बर्बर-पिशाचेनापबाधितः। तद्भवन्तो ग्रामान्तरेभ्यो भैरवभट्टान् मान्त्रिकान् डाकिनी-व्यन्तरचिकित्सकान् विषवैद्यान् वाहूय तान् दर्शयन्तु बालमेतम्। त एव हि चिकित्सितुं प्रभवेयुरमुम्।' स एवं मुक्त्वा यथायातस्तथा गतः।

अथैवं कुर्वतां तेषां दिनचतुष्टयमत्यवर्तत। रमाकान्तो मनसि सर्वं निपुणं बुद्ध्यन्नपि न किमपि भाषते, न च तेषां चिकित्सोपक्रमेषु हस्तक्षेपं वा निषेधं वा करोति। दिने दिने स किञ्चित् किंचित् स्वास्थ्यं लभमानोऽपि च मौनमेवातिष्ठते।

पञ्चमेऽह्नि प्रातरेव केचन भैरवभट्टा वैतालसाधका ग्रहशांतिकारका विषवैद्या भूतप्रेतपिशाचडाकिनीचिकित्सकाश्च तत्राजग्मुः। तेषां सर्वेषामा-देशानुसारं गृहस्य प्रकोष्टे गोमयेन भूलेपः कृतः। तैः सर्वैः स्वकीयां चिकित्सापद्धतिमनुसरद्भिस्तत्र प्रकोष्टान्तरे तत्तद्देवतानां मण्डलानि नानाविधैरंगद्रव्यैरापूरितानि। घृततैलकार्पासादिभिर्दीपकाः प्रज्वालिताः। धूपाश्चसर्वत्र संयोजिताः। जलकुम्भाश्च यत्र तत्र संस्थापिताः। पूजाडम्बरो महान् सर्वतः प्रसारितः। प्रसादोऽर्पितो देवताभ्यः। स्थण्डिलं प्रकल्प्य कैश्चिन्मन्त्रैर्होमोऽपि विहितः। कुष्माण्डवलिश्च देवताभ्यः प्रादीयत। दीपदानमक्रियत। अन्ते पूजनशेषेन जलेन रमाकान्तस्य मस्तकेऽभिषेकं कुर्वद्भिः कैश्चित्तस्य शरीरे प्रेताह्वानं चाक्रियत। परन्तु रमाकान्तः सर्वमेतदाडम्बरघटाटोपं जानन्नपि तूष्णीं स्थितः। यदा तैः सर्वै रमाकान्तो निर्विकारोऽप्रभावितश्च यथापूर्वमालोकितस्तदा केनचित्तस्य शिखामुत्पीड्य, केनचित्तस्य वामपाणेरंगुलिं कनिष्ठां सम्मर्द्य, केनचिद्धस्तप्रकोष्ठयो रक्षासूत्राणि च बध्वा—'कोऽसि त्वम्? किमर्थमेनं बालं पीडयसि? किमनेन तवापराद्धम्? मुञ्च बालकमेतम्! नापगच्छसि किम्? शीघ्रमेव पलायस्व यदि स्वजीवितं कामयसे, नो चेदधुनैवात्रास्माभिर्मन्त्राग्निना दग्धो भस्मशेषतां नेयोऽसि!' इत्यादिभिर्भयोत्पादकैर्वाक्यैर्नाना विधिभिश्च तत्त-त्पद्धतिगतैर्नितरां स्वोपचारकौशलं प्रदर्शितम्। पर्यन्ते तैरुक्तम्—'नासौ सामान्योऽस्ति प्रेतः! सर्वसाधारणोचितेन विधिना नायमपगच्छेत्! दिनद्वयं

यावदद्यतनस्य कृतस्योपचारस्य प्रभावः परीक्ष्यताम् । नो चेदुपायान्तरं करिष्यामहे !' इत्युक्त्वा दानदक्षिणादिकं पूजोपचारांश्चनीत्वा ते सर्वेऽपि मान्त्रिकप्रवराः स्वगृहान् प्रतस्थिरे । गतेषु तेषु सर्वेषु रमाकान्तः स्वमातरं सङ्केतेनात्मनः समीपमाहूय मन्दस्वरेण केवलमेतावदेवोक्तवान्—'मातः ! किमर्थं यूयं सर्वे वृथा ताम्यथ ? अपव्ययं च कुरुथ ? नाहं प्रेताविष्टोऽस्मि । न च काप्यन्या तादृशी व्यन्तरबाधा मम जातास्ति । अहं तु ज्वरेण पीडितोऽस्मि । कालपरिणामिनो भवन्ति हि रोगाः। तद्यूयं मा वृथा चिन्तातुरा भवत ! धैर्यमवलम्ब्य शांतचित्तैर्भूयताम् ! स्वल्पैरेवाहोभिरहं स्वस्थो भविष्यामि ।' इत्येवं प्रबोध्य पुनः ससुखमशेत ।

इत्थं क्रमेण दश दिनानि व्यत्ययुः । रमाकान्तोऽद्यापि चाशक्तः शनैः शनैः कथमपि स्वास्थ्यं लभमानोऽस्ति परं तत्पित्रोः कौटुम्बिकानां सम्बन्धिनां च मते योग्यां चिकित्सां विनैवासौ भूतप्रेतबाधाभिः पीड्यत इति निर्णयो विनिश्चितः ।

अथैकदा मध्याह्नसमये रमाकान्तो गभीरनिद्रावशं गतः शयानोऽभूत् । तदानीमेव तत्पितृव्येनैको ग्रामीणो विषवैद्यस्तान्त्रिको गृहमामन्त्रितोऽभूत् । स तत्र गृहैकप्रकोष्ठे मण्डलान्यापूर्य, जलकुम्भं संस्थाप्य, सिन्दूरस्वर्णपत्रैः स्वस्तित्रिशूलादीनां चित्राणि यन्त्राणि चालेख्य सुप्तस्य रमाकान्तस्योपरि नाना तन्त्रप्रक्रिया अकरोत् । पर्यन्ते स खल्वेकान्ते रमाकान्तस्य वृद्धं पितरमाह—'महाशय ! अन्यानि तूपायान्तराणि सर्वाणि यावच्छक्यं मया कृतानि, परमेकोऽभ्युपायोऽधुना कर्तव्योऽवशिष्यते । स किलायमास्ते यद्धि रमाकान्तस्य वक्षःस्थलस्य मध्यभागे चिटिकाकारः सूक्ष्मतमो लोहशलाकयाऽग्निदाहो विधेयो भवति । कृतऽग्निदाहे सर्वा अपि रोगबाधा निश्शेषा भविष्यन्ति । तद्यदि भवन्तोऽनुमन्येरंस्तदाहं तमेतमुपचारं विदध्याम् ।' रमाकान्तस्य वृद्धःपिता स्वगृहिण्या भ्रात्रान्यैश्च परिवारसदस्यैर्निभृतं मन्त्रयित्वा दाहकरणायानुमतिं तान्त्रिकाय प्रददौ । तेन च तान्त्रिकेण तत्र प्रज्वलन्त्याऽग्निशिखया कामप्येकां तन्वीं लोहशलाकां संताप्य प्रगाढनिद्रानिर्भरं शयानस्य रमाकान्तस्य वक्षःस्थलमध्ये दाहसंस्कारो विहितः । तेनावितर्कितसम्भवेनाकस्मात्कृतेनाग्निदाहेनोत्पीडितो रमकान्तश्चीत्कारान् कृत्वा सहसा प्रबुद्धो 'हा हन्त ! हतोऽस्मि ! मृतोऽस्मि !! नितरां भृशं पीडितोऽस्मि !!! हा ! हा !! हन्त !!! हन्त !!!' इति व्याक्रोशन् विलपन्नतितरां विव्यथे । तेषां सर्वेषामशिक्षितानां ग्रामीणानां तच्चिकीर्षितं

दर्शं दर्शं स तान् भूयो भूयो भृशमतितरां निरभर्त्संयत्तदज्ञानविजृम्भित मूर्खाणां मूर्खतां च दृष्ट्वास्वरोगकष्टादप्यधिकां मानसीं व्यथामन्वभूत् । रमाकान्तस्य चर्मचक्षुषोः पुरतस्तदिदं सत्यं साक्षाद्बभूव यद्विद्यालये वैकल्पिक-विषयत्वेन संस्कृतभाषामधीयानेन पठितमासीत्—

"पण्डितोऽपि वरं शत्रुर्न मूर्खोहितकारकः ।।" इति ।।

—:०:—

# धूर्तपुरोहितः

अस्माकमत्र भारतवर्षदेशे, सामन्तशासनप्रधाने समये, क्वचित् वनपर्वत-बहुले, राजस्थानसदृशे पार्वत्यप्रदेशे, काचित् ग्रामीणानां वसतिरभूत्। तत्र प्रान्ते भिल्लाः किराताः कर्षका वनेचरा लोका एव प्राधान्येन प्रजाजना न्यवसन्। ग्रामीणानां तस्यां वसतौ प्रायो निरक्षरा असभ्या रूढीवादिनोऽन्ध-विश्वासा अशिक्षिता लोका एवासन्। तत्र यो हि कश्चन साक्षरः पत्रवाचनसमर्थो जनोऽल्पाल्पमपि जानाति स्म स खलु "निरस्तपादपे देशे एरण्डोऽपि द्रुमायते।" इत्युक्तिगतस्य सत्यस्य निदर्शनत्वेन लोकप्रियतां पूजां प्रतिष्ठां सर्वजनसम्माननी-यतां च लभते स्म। स खलु तत्रत्ये संसारे विचक्षणो विद्वान्, परमचतुरो गुणवान्, निपुणो नीतिज्ञः, सफलः कलाकारः, सर्वशास्त्रप्रवीणो वा मूढ-जनैर्निरक्षरैर्मन्यते स्म। तानिमान् कूपमण्डूकानिव शेषात् जगतः पृथग्भूतान्, सङ्कीर्णे स्थले वसतो ग्रामीणाञ्जनान् केचित् राजदायादाः क्षत्रिया, व्यापारिणो वणिजो, यजमानवृत्तिकरा ब्राह्मणाः, सर्वकारस्य भृत्याः, शासने महत्पदमधि-तिष्ठन्तो जनाः प्राप्तकालं छलबलदम्भापकौशलैर्वञ्चयित्वा नानाविधैर्दुष्टोपायैरव-लुण्टन्ति स्म।

एवंविधे देशे काले पात्रे परिस्थितौ वातावरणे च कश्चिदेको धूर्तो ब्राह्मणपुरोहितस्तत्र वसन् स्वात्मानं सर्वशास्त्रपारङ्गतं वेदोपनिषद्व्युत्पन्नं ज्योतिः-शास्त्रायुर्वेदनिपुणं भगवद्भक्तं सदाचारं चरित्रशुद्धं दिव्यसिद्धिसम्पन्नं दैवज्ञं कर्मकाण्डिनं प्रख्यापयन् लोकैः प्रतीतस्तत्र प्रजानां जीवनेऽधिकाधिकं परिचयं संस्थाप्य विविधोपचारैः स्वकीयां जीविकावृत्तिं समुपार्ज्य दिनचर्यां निर्वहति स्म, स्वकुटुम्बपरिपालनं च करोति स्म।

अथैकदा भीष्मे तातप्यमानेऽतिप्रचण्डे ग्रीष्मे, मध्याह्नसमये, सर्वतोदिक् परितप्यमाने लोहपटल इव धरणीतलेऽनलज्वालामालाभिरिव भुजङ्ग-विषफूत्कारवर्षिषु वायुषु प्रवहत्सु, असह्यातपाक्रान्ते दिङ्मण्डले, खदिराङ्गारभार-पुञ्जेष्विव भास्करकिरणजालैः प्रतपत्सु पर्वतेषु, सर्वतोऽवरुद्धेषु यातायात-सञ्चारेषु, प्राणिपुञ्जेषु सर्वेषु यत्र तत्रानातपगृहान्तःप्रकोष्ठावासेषु निलीनेषु कठोरपरिश्रमाध्यवसायशीलेषु कृषाणेष्वपि सघनतरुच्छायायां निषण्णेषु,

ग्रामीणगृहस्थेषु भूमिगृहान्तः प्रविश्य कथमपि मध्याह्नकालमतिवाहयत्सु, पशुपक्षिसरिसृपेषु वनप्रान्तरेषु जलाशयोपकूलं सघनच्छायवृक्षलतावितान-कुञ्जनिकुञ्जेषु निभृतं विश्राम्यत्सु, कस्मिञ्चित् सुविशाले महति देवालये कोऽपि किलैको ब्राह्मणपुरोहितो जपमालां प्रजपन् वर्तते। स खल्वादौ शिवपार्वत्योः पूजाभिषेकार्चनं निर्वर्त्य ततो देवालयस्य चतुःषष्ठीपाषाणस्तम्भनिर्मिते कलामण्डपे प्रस्तरपट्टिकाप्रशीतले वायुसञ्चारशीले स्थले सुखासनं परिकल्प्य निषण्णो मन्त्रजपान् कर्तुं तत्परोऽदृश्यत।

अथ किञ्चिदिवातीते मध्याह्नसमये, समुपसर्पतीवापराह्नकाले. शनैःशनैः स्तिमिते ग्रीष्मप्रभञ्जनवेगे चायं ब्राह्मणो मन्दान्दोलितेन शीतसुगन्धभरेण मलयानिलेन सुखस्पर्शेणोपवीज्यमान इव तस्मिन्निःस्तब्धे हि वातावरणे क्षणं तन्द्रापरवशो भवति, क्षणं निद्राति च पुनः पुनः सावधानो भूत्वा मन्त्रजपकर्मणि कृतादरस्तन्मयश्च बोभूयते। 'प्रकृतिं यान्ति भूतानि निग्रहःकिं करिष्यति।' इतिवत् सोऽयं द्विजोत्तमस्तत्रैवान्तरमासाद्य निर्मक्षिकं चालोच्य मनसि समाश्वस्तः स्तम्भमेकमाधारीकृत्य हस्तेनैकेनोपधानमस्थायि प्रकल्प्य क्षणमेकं निद्रासुखमनुभवितुमशेत।

संयोगात्तस्य यजमानस्य स्वगृहमधिवसतस्तदानीमेव भावप्रवणतया मनस्येवं विचारतरङ्गाः प्रादुरासन्—'अतिप्रचण्डोऽयं प्रतपति भीषणो ग्रीष्मः। अस्या किल प्रलयकालकठोरायामतिमहत्यां मध्याह्नवेलायां मामकीनः पुरोहितो मम पुत्राप्तये शिवं शङ्करं तत्र ग्रामोपसीम्नि देवालये सन्तानगोपालपाठजपानुष्ठानं कुर्वाणो वर्तते। स खलु सर्वमेव क्षुत्तृषादिकं संयम्योपवासव्रतमाचरन् तपस्तपस्यति। कियत् कष्टं सोऽनुभवन् स्यात्! तदहं तत्कृते कमपि शीतोपचारं परिकल्प्य तं तोषयानि। परितुष्टे हि ब्राह्मणपुरोहिते सफलं स्यान्मेऽनुष्ठानमिदं मनोरथांश्च सर्वान् मम भूतभावनो भगवान् परिपूरयिष्यति। ममाकिञ्चनस्य सविधेऽन्यत् किं वर्तते, परमेतान्याम्रफलानि सद्यः परिपक्वानि कानिचिदव-तिष्ठन्ते, सक्तवो दुग्धं, शर्करा च विद्यते। तानेतानुपचारान् शीतलजलपूरितं कुम्भं व्यजनं च नीत्वाहं शिवालयं व्रजानि। फलाहारेण, स्निग्धमधुरेण शीतलेन च जलरसादिना चात्मनः कुलपुरोधसं ब्राह्मणं परितर्पयानि।" इति मुहुर्मुहुर्विचिन्त्य विप्रसेवासु कृतादरो मुग्धो यजमानःस ग्रामीणो यथामिलितान् तांस्तान् सर्वान् पदार्थान्नीत्वा शिवालयं प्रति गन्तुं मनः कृत्वा गृहात् प्रतस्थे।

स यावत् शिवालयं प्राप्य देवदर्शनं कृत्वा कलामण्डपमागत्य ब्राह्मण-सम्मुखीनो भूत्वा पश्यति तावत् तत्र पूर्वोक्ताकारस्वरूपं स्तम्भैकदेशमाश्रित्य

प्रसुप्तं सघर्घरारावं श्वासोच्छ्वासं गृह्णन्तं निद्रापरवशं पुरोहितमपश्यत् । तं विलोकयत एव तस्य किमपि मनोमन्थनं समभूत्, तथाविधं तं शयानं विप्रं तूष्णीमालोक्यैव तस्य ग्रामीणयजमानस्य श्रद्धास्तिक्यं पूज्यभावश्च शैथिल्यं जगाम । क्षणं विचार्य च स कौतुकपरवशस्तं पुरोधसं प्रोच्चैः समबोधयत् । अथाधुना तथा भूते व्यतिकरे स ब्राह्मणः स्वकीयां दुःस्थां स्थितिं, यजमानस्य च तस्य मानसीमशांतां दशां विचिन्त्योपेक्षया गजनिमीलिकामाश्रित्य पुनरपि शयनाभिनयमनाटयत् । भूयस्तं पुरोहितं शयानमालोक्यात्मनोऽवज्ञां च तत्कृतामालोच्य मनसि कमप्यन्तःक्षोभमन्वभूत् । अन्तर्मनसि कुप्यन्नपि स ग्रामीणः शिष्टाचारानुरोधान्नम्रवचोभिर्भूयोभूयः सम्बोध्य-सम्बोध्य च चिरात्तमजागरयत् । पुरोहितोऽपि यथार्थस्थितिमनुभवन् क्षणात् सावधानो भूत्वा पुनर्जपकर्मणि संलग्नो भवितुमारभते तावदेव तेन स ग्रामीणो यजमानः किमपि विवक्षुरिवालक्ष्यत । यावत् स ब्रूयात्तावदेव भ्रूभङ्गं कृत्वा ब्राह्मणोऽवादीत्—

"धिक् त्वां मूर्खम् ! सर्वमप्येतन्मे जपानुष्ठानं त्वया ग्रामकण्टकेन व्यर्थतां नीतम् !! यूयं ग्रामीणाः पशवो न जानीथ यद्देवताराधनं कियत् कठिनं भवति !!! अहं तु त्वत्कृते चिरात् दुराराध्यमपि भगवन्तं शिवं शङ्करं मृत्युञ्जयं गुरुतरैः क्लेशैः समाराधयन् महद्भिः प्रयत्नैः कथमपि तं प्रसादाभिमुखं कुर्वाणोऽद्य स्वप्नसमाधौ साक्षादामन्त्र्य स्तुतिस्तोत्रानुनयविनयप्रार्थनाभिस्त्वत्पुत्राप्तये वरं याचमानोऽभूवम् । इदानीमेव भगवान् वृषभध्वजो नीलकण्ठो विधुशेखरो मां स्वप्ने भाषमाणोऽभवदित्थम्—"भोः ! ब्राह्मण !! किं वृथा ताम्यसि ? किमर्थमात्मानं मां च क्लेशयसि, दुष्करमेतदनुष्ठानं समाचरन् पीडयसि ?? अस्य ते ग्रामीणस्य यजमानस्य मन्दभाग्यस्य ललाटे विधात्रा सप्तजन्मावधि संततिसुखं नैव लिखितमस्ति ! नास्य गृहिण्या अपि भाग्ये सन्तानमुखावलोकनसुखमास्ते !! त्वदाराधनेन, तपसा, पूजया, भक्त्या च प्रसन्नोऽप्यहं तस्मै कुलतन्तुमेकमपि दातुं न पारये; तस्य भाग्यलिपिरेखाविरुद्धम् !!! ततः किमिति त्वं वृथानुरोधं दुराग्रहं च कुरुषे ??? धनं, कीर्तिं, यशो, राज्यमन्यद्वा यत्किमपि कामयसे तत् प्रार्थयस्व, वरं च लभस्व परन्तु सन्ततिप्रदानाय मा त्वं शठवद्धठं कुरुष्व !"

"एवमुक्तवति शिवे मयाम्बायाः श्रीमत्याः पार्वत्याश्चरणयोर्निपत्य बहु करुणकरुणं परिदेवितम्, साश्रुगद्गदकण्ठं विलपितमाक्रोशितं रुदितं च । जातकारुण्यया भगवत्या तया प्रणोदितेन कृपाकटाक्षैर्मया पुनरपि भगवानाशुतोषो भूयोभूयः सम्प्रार्थितः । चिरादेवं प्रलपतो मे कथमपि

कर्तुमकर्तुमन्यथा वा कर्तुं समर्थो भगवान् पशुपतिः प्रलयङ्करः शङ्करो महता काठिन्येनानुकूलतां नीतोऽभवत् । स खलु वरदानायोद्यतो यावद्वरं प्रयच्छेत्तावदेव त्वया मूर्खेण पशुबुद्धिना ग्रामीणेन श्रद्धाविश्वासवैकल्याद-धीरेणाहं मध्येसमाधि जागरितो महान् विघ्नश्च समुत्पादितः ! तदधुना स्वभाग्यमाक्रोश ! करतलाभ्यां स्वकपालं प्रहर !! तदधुना त्वं कामं सोरस्ताडं हन्यतां वा स्वमस्तकम् !!! दुर्बुद्धे ! इदानीं त्वं कामं कियन्तमप्याक्रोशं कुरु परमधुना नास्त्येव पुनर्भगवत्प्रसादनाय किमप्युपायान्तरं मदधीनम् ! त्वद्विधानां ग्रामीणशठानां श्रद्धाभक्तिविरहितानां द्विजदेवेषु शङ्कमानमानसानां दुष्टानां मोहान्धानामतोऽग्रे पौरोहित्यं कर्तुं मनागपि नोत्सहे । धिक् धिक् त्वां, मां च धिक् ! यत्त्वयात्र शुभे कर्मणि समाधिभङ्गं विधायानुष्ठानमिदं सर्वं विघ्नाहतं विहितम् !! प्रतिनिवर्तस्व झटिति स्थानादस्मात् दुरन्तपातकिन् !!! यथायातं व्रज त्वं गृहान् ! नाहं त्वां प्रतिभाषितुमाकाङ्क्षे !"

इत्युक्त्वा स धूर्तपुरोहितः पूजापात्राणि सर्वाणि तथासनादीनि च गृहीत्वा स्वगृहाभिमुखं गन्तुमुपचक्रमे ।

तमेवं भृशं कुप्यन्तं क्रोधानलज्वालाजटालं रक्ताक्षं सभ्रूभङ्गं शपन्तमिव वाक्यप्रहारैः प्रहरन्तं साक्षाद्वर्तमानं सविग्रहं रौद्ररसमिव सवेपथुं प्रकम्पमानं च तं ब्राह्मणं मुहुर्मुहुः प्रणमन् भयोद्विग्नमनाः स ग्रामीणो यजमानो दीनदीनया वाचा सविनयं सप्रश्रयं च प्रार्थनामकरोत्—

"भगवन् ! भूदेव !! कुलपुरोहित !!! क्षमस्व मां ज्ञान-विरहितं पशु-प्रायं मूर्खं जडं स्तब्धं ग्रामीणं ते यजमानम् ! नाहमजानाम्, यत्त्वं मदर्थमेव हि स्वप्न-समाधौ भगवन्तं मृत्युञ्जयमाराधयन्नासीः । मया च दौर्भाग्यात् प्राकृतजनमिव त्वां मन्यमानेन मध्येसमाधि महान् विघ्नो विहितः ! पापात्मना मया चाण्डालेन जघन्योऽपराधो विहितस्ते, स्वभाग्यं चेदं घोरं कर्म कुर्वता बतापबाधितम् !! महता पश्चात्तापेनात्मग्लानिना ह्रिया भिया चान्तर्दग्धं मेऽन्तःकरणम् !!! भवानेवाधुना मे शरणम् ! का वान्या गतिर्मे ? समादिश, किमहमिदानीं करवाणि प्रायश्चित्तम् ?? कं शरणं गच्छानि, किं वाचराणि येन मे भूयोऽपि भगवान् भूतपतिः प्रसीदेत्, पुनरप्येतन्मे पुत्रावाप्तये कृत-मनुष्ठानं सफलं स्यादिति ।"

इत्थं पुनः पुनः प्रणामाञ्जलिभिस्तं पुरोधसं समाराधयितुं तत्परो

यजमानस्तस्मै तान् गृहादानीतान् फलाहारसम्भारान् सामग्रीश्च सर्वाः काश्चित् स्वर्णमुद्राश्च समर्प्य तदाराधनोपचारचर्यां बह्वीमपराधीव कुर्वाणोऽनन्य-गतिस्तच्चरणयोर्निपत्यमूर्च्छां गतः ।

अथ लोलुपोधूर्तश्च स पुरोहितः सर्वांस्तानुपचारसम्भारान् सस्पृहं निपुणं चालोक्य सिद्धमुद्रयात्मगतान् मनोभावान् हृदन्तः संगोप्य, स्वाकारं निपुणं निगूढं च प्रच्छाद्यापकौशलात् वाङ्मयीं समवेदनां सहानुभूतिं प्रदर्शयन् ससंज्ञं विधाय तं ग्रामीणमवदत्—"हंहो ! अहह !! हा, हन्त !! हन्त !!! त्वयाज्ञेन सिद्धमप्येतद्देवाराधनानुष्ठानं मौर्ख्यादपभ्रंशितम् ! नान्या गतिरधुना !! महीयसी हि विडम्बनेयमावयोः समुपस्थिता !!! मा ब्रूहि कमप्येतत्प्रकरणगत-मकाण्डताण्डवम् ! यदि त्वमात्मनः कल्याणमिच्छसि, नितरां गोपय वृत्तान्तमिमं सर्वमद्यतनमत्र जातम् ! भवन्ति हि दुर्भाग्याज्जगति जन्तूनां स्खलनान्येवं विधान्यकस्मादवितर्कितसम्भवानि च मोहविलसितानि बाधन्ते सौभाग्यसम्प-त्सिद्धीः ! ( क्षणं मौनमालम्ब्य सिद्धमुद्रया दम्भेन किमपि गम्भीरमिव ध्यात्वा, विमृश्य च ) आम्, शास्त्रेषु श्रूयन्ते प्रायश्चितानि, शोपोद्धाराः परिहाराश्च जानताजानता कृतानां दोषाणाम् । विषयमेतमहं पुनश्चिन्तयिष्यामि, तपोध-नाचार्यान् हितैषिणः कारुणिकान् गुरुजनांश्चाहं प्रक्ष्यामि । तदनु त्वं यदि पुनरप्येकवारमेवंविधं पुत्रावाप्तयेऽनुष्ठानं कर्तुं सङ्कल्पं करोषि चेत्तदाहं त्वत्पूर्वजानामन्नपिण्डभक्षणानुरोधाद्भूयोऽप्यथ कदाचित् शुभे समये देवदेवं महादेवं समाराधयिष्यामि, यथाशक्ति तमाराध्य प्रसाद्य च तुभ्यं वरप्रदाप-नाय च नूनं प्रयतिष्ये ।"

एव मुक्त्वा स्वात्मनः सिद्धाचार्यत्वं महामान्त्रिकत्वं च लीलयाभि-नाटयन् यजमानेन तेन खेदखिन्नेन सार्धमेव तस्माद्देवालयात् ग्रामाभिमुखं गन्तुं प्रतस्थे स धूर्तपुरोहितः ।

—:o:—

# विधानभङ्गः

सायन्तनः समयः । पश्चिमाशाक्षितिजे सूर्यनारायणो भगवान् किलास्ताचलं प्रति मन्दं मन्दं गच्छन् वर्तते । मन्दशीतलसुगन्धयुक्तो वायुः समन्ततः प्रवहन्नास्ते । वनप्रान्तेभ्यः समागच्छतां गोमहिषाजादीनां खुराघातैः समुद्धूयमाना रजोरेणवः कर्बुराकारं तमस्तोमं विदधाना नभोमण्डलं स्पृशन्त इव व्याप्नुवाना वर्तन्ते । गोचरभूमिभ्यो गोपालाः पशूंश्चारयित्वा वेणुवाद्यानि वादयन्तो ग्रामोपसीम्नि हसन्तो नृत्यन्तो विनोदपरिहासांश्च कुर्वाणाः स्वगृहाभिमुखं व्रजन्तो विद्यन्ते । सरस्सु, सरित्सु, वृक्षाग्रेषु, पर्वत-शिखरेषु च सूर्यकिरणा क्रीडन्त इव कामप्यपूर्वामिवारुणाभां शोभां प्रसारयन्तो विराजन्ते । सर्वत्रापि सायंसन्ध्या प्रोज्ज्वलमीषद्रक्तं प्रकाशपुञ्जं प्रक्षिपन्तीव रमणीयतामाविष्कुर्वाणास्ते । क्रमशः पश्चिमसमुद्रे निलीयमाने सूर्यबिम्बे नीले नभसि क्वचित् क्वचित् स्थूलस्थूलास्ताराः स्वल्पाल्पां स्वतेजोद्युतिं विकिरन्ति । यद्यप्यद्य पूर्णिमास्ति तथापि नेदानीं यावच्चन्द्रोदयः सञ्जातस्ततो हि सर्वासु दिक्षु घनान्धकारः प्रसरन् वर्तते । नदीतटाकजलेषु नीलिमानमुद्-वहन्तस्तरङ्गा एकमनुद्वितीयमुत्तिष्ठन्ते, तटभूमौ विलीयन्ते च । पक्षिणो दूरदूरतो नीडान् प्रति समुड्डीयमानाः कलमधुरमालपन्तो मनोहरं सङ्गीतं गायन्ति । सर्वतः प्रशान्तं वातावरणं भव्यं दृश्यमुपस्थापयति ।

एवंविधे हि समये केचन ग्रामीणा ब्राह्मणजना ग्रामोपकण्ठं कलकलं प्रवहन्त्या नद्यास्तीरे निषण्णा मिथो वार्तालापान् कुर्वन्तो हासपरि-हासविनोदैर्मोमुद्यमाना दृश्यन्ते । तस्याः किल नद्याः सैकतपुलिने शिलायामेको युवा ब्राह्मणबटुरहिफेनगुटिकायाश्चूर्णं कृत्वा ताम्रधातुविनिर्मिते खल्वैकस्मिन् लघुपात्रे वस्त्राञ्चले चूर्णं निःक्षिप्य तदुपरि क्रमशो जलबिन्दून् पातयन् तन्निर्गालयन्नास्ते । एकतोऽन्यो ब्रह्मचारी भङ्गारसं संसाधयितुं भङ्गा-पत्राणि शिलापट्टिकायां पाषाणेन निष्पेषयन् वर्तते । सर्वेऽपि च ते ब्राह्मण-मण्डलस्य सदस्या निश्चिन्तमकुतोभयं समुपविष्टाः परस्परं विविधान् गार्हस्थ्यसम्बन्धिनः प्रसङ्गान्, सामाजिकान् विषयांश्चाधिकृत्य वार्ताविनोदेषु प्रवृत्तास्सन्ति । तेषु दीक्षितावटङ्को रामनाथो, द्विवेदपदभाग् भानुदत्तश्चेति

द्वामिकौ वृद्धौ किमपि प्रभावशालि, समाकर्षकं च व्यक्तित्वं दधानौ साधिकारं प्रामाणिकेन प्रकारेण भाषमाणौ स्तः। द्विवेदो भानुदत्तः प्राह—

'दीक्षितमहाभाग ! त्वर्यताम् !! अस्तप्रायोऽयं भगवान् भुवनभास्करः। प्रदोषवेला चेदानीं प्रवर्तमानास्ते। पुनरितोऽस्माभिर्योजनद्वयमितं पन्थानमाहिण्ड्य नगरं प्रति गन्तव्यमस्ति। ततः सायन्तनमहिफेनरसपानं शीघ्रमेव निर्वर्त्य शौचस्नानादिकाः क्रियाः परिसमाप्यातोऽग्रे प्रस्थातव्यं भवति।'

दीक्षितो रामनाथः—'सत्यमेतद्भवतोक्तम्, किन्तु यावत्-अहिफेनरसास्वादनेन मे जिह्वा कामपि कटुतां न गच्छति, तावन्न ममेन्द्रियाणि कर्मशीलानि भवन्ति ! किमर्थं भवान् चिन्ताकुलो भवति ? अधुनैव सर्वं सम्पाद्यते ! अयि, भोः शिष्याः ! त्वरध्वम् !! त्वरध्वम् !!! अये, नित्यानन्द ! किमिति भोः ! भङ्गागुटिकां संसिद्धामपि निर्गल्य तरलाग्निरूपां न करोषि ? त्वरस्व, त्वरस्व; भोः ! त्वरस्व !!'

शिष्यो नित्यानन्दः—'अयि, भगवन् ! दीक्षितगुरो !! सिद्धप्रायोऽयं भङ्गारसः ! यदि क्षणमेकं विरमन्ते चेन्महाभागास्तदाहं तमेतं रसं कायकल्पक्षमं सिद्धचन्द्रोदयरसमिव संसाधयामि ! अस्माकं गुरुचरणाः श्रीद्विवेदमहोदयास्तावन्नो सन्तुष्यन्ति यावद् भङ्गारसपानाय साधीयसीं गुर्वीं मात्रां नासादयन्ति !'

द्विवेदः—'मा जल्प, रे मूर्ख ! झटित्येव निर्गलय संसिद्धां तामिमां भङ्गाचूर्णगुटिकाम् ! किमेतां कालकूटोपमां विधातुमिच्छसि ? अलं विलम्बितेन ! त्वरस्व !! त्वरस्व !!! इमेऽस्मत्सुहृदो दीक्षिताः महाभागाः खल्वस्मज्ज्ञातिजनानां शिरोमणयो नेतारः ! जातेऽपि हि विलम्बे नामीषां कापि क्षतिसम्भावना, परं वयं तु स्वसमाजस्य लघुतराः सामान्याः स्मः सदस्याः सेवकाश्च ! तत्कथमेभिः सह साम्यमस्माकं भवितुमर्हति ?'

दीक्षितः—'अये द्विवेदिन् ! किमर्थमेवं विब्रुवन् भवान् मम परिहासं कुरुते ? श्रीमतां पूर्वपुरुषैस्तपोधनैर्ज्ञातीनां सेवासम्पादनविधौ दीक्षितास्तस्मादेव वयं दीक्षिताः, नो चेत् के वयमत्र ज्ञातिषु नेतृत्वाधिकारिणः ?'

द्विवेदः—'मैवं ब्रूहि भगवन् ! मात्मानमवमन्यस्व !! श्रीमतां कुल पुरुषाः समर्था आसन्। तैर्ज्ञातीनां सेवासपर्यासु महांस्त्यागस्तपः साधना च विहिता। ज्ञातीनां हितापेक्षया तैः सर्वस्वमपि च समर्पितम्। तत एव हि ते ज्ञातिभिः स्वनेतारो घोषिताः सर्वेषां मूर्द्धन्याश्च प्रतिष्ठापिताः। न हि ज्ञातिषु

प्रामुख्यं, नेतृत्वं, कुलीनत्वं वा समाजसेवामन्तरा कस्यचित् क्वचित् कदापि च लभ्यते । आम्, सत्यमेतदहं ब्रवीमि ।'

दीक्षितः—'एतत् सर्वं त्वस्मत्पूर्वजानां पराक्रमैरेव सम्बभूव । तत्रास्माकमधुनातनानां का नाम पुरुषार्थमहत्ता ? श्रीमतां पूर्वजैस्तु वारत्रयं समग्रा हि ज्ञातिसमष्टिः पञ्चपक्वान्नभोजनैः संतोषिता, राजतानि जलपात्राण्यपि च ज्ञातिजनेभ्यः प्रत्येकमदीयन्त, चतुर्धाम तीर्थाटनं विहितं, सप्त कन्यादानानि निष्कामं समपाद्यन्त । स एष ज्ञातिसेवाक्रमोऽद्यापि च तद्वंशधुरन्धरैर्भवद्भिः सर्वात्मनाऽक्षुण्णं परिपाल्यते । तस्मादेव हि भवतां ज्ञातिसमाजे नेतृत्वं, पूज्यत्वं, सत्कारपात्रत्वं च सुप्रतिष्ठितं वर्तते ।'

द्विवेदः—'अलमलमस्मद्गतयातिश्लाघया ! भवतामस्माकं च पूर्वजैः किमपि तदतिमानुषं महत्कर्मानुष्ठानं त्यागभावेनास्थितं येन वयमद्यापि तद्वंश्या ज्ञातिपूज्यतामुपभुञ्जामहे । नो चेन्ननु कोऽस्मान् परिपृच्छेत् ! एतत् सर्वं तेषामेव माहात्म्यम् !'

दीक्षितः—'एतत् सर्वं प्राचीनं ननु वृत्तान्तजातम् । परन्त्विदानीं ज्ञातयो व्यस्मरन्निव तामेतां कुलीनतामस्माकम् । ततो हि केचनाकुलीना दुर्मुखाः प्राप्तकालं यदा कदा मध्येसमाजमस्मानाक्षेप्तुमिव दुस्साहसमाचरन्ति, निन्दावादांश्च कुर्वते ! समयमहिमासौ कलिहतकस्य !! किमन्यत् ?'

द्विवेदः—'अये ! किमर्थं भवान् चिन्तामेतावतीं कुरुते ? अस्मज्ज्ञातीनां चतुःष्वपि मण्डलक्षेत्रेषु नेतृत्वमस्माकमद्यापि चाक्षुण्ण कमपि महाप्रभावं धत्ते । सर्वेऽपि च सजातीयाः सज्जना निर्विरोधमस्माननुचरन्ति । न कोऽपि चास्मन्नेतृत्वे विप्रतिपत्तिमाशङ्कां वाविष्करोति । तदलमत्र चिन्तया, यदि केचनाज्ञा यदा कदा कुप्यन्ति, द्रुह्यन्ति, अभ्यसूयन्ति, निन्दन्ति चेत्, को नु बतावदधात्येवंविधानां द्रोहपरायणानां शठानां जल्पाकानामाक्षेपवचनेषु ? ननु साध्विदमुक्तम्—

"अनुहुङ्कुरुते घनध्वनिं, न तु गोमायुरुतानि केशरी ।।"

दीक्षितः—"ग्राम्यक्षेत्रीयास्तु सर्वेऽस्मासु समर्यादं व्यवहरन्ति, परन्त्वेते राजाश्रिता नागरिकाः केचनात्मानं सभ्यम्मन्या यदा कदा नन्वौद्धत्यं प्रकटयन्ति, राज्याश्रयबलात्ते गर्वायन्ते चापि, यतस्ते राजधानीमधिवसन्ति, नृपसभासदस्य-

त्वात्तत्सम्पर्कं चासादयन्ति। पुनर्नवशिक्षाप्रचारात्ते ह्यांग्लविद्यासु व्युत्पन्ना अस्मन्नेतृत्वे ग्रामीणतादोषमाशङ्कन्ते।'

द्विवेदः—'किं स्यादेभिः केषां चिन्मुष्टिमेयानां नगरवासिनां राज्याश्रय-मात्रबलादुद्धतानामाक्षेपैर्दोषोद्भावनाभिर्दुरुक्तैश्च ? सर्वमपि ज्ञातिमण्डलम-स्मदाधीनमेव चेष्टते। यदि चे मे कतिचन नागरा ज्ञातिविधानं, तन्मर्यादां, तन्नियमांश्च नो बहु मन्यन्ते, समाक्षिपन्ति, तिरस्कुर्वन्ति, अवगणयन्ति चेत्तदा कृतापराधाः प्राप्तकालं नूनं दण्डनीयाः स्युः।'

दीक्षितः—'का दण्डस्य वार्ता ? ते तु सर्वमपि च ज्ञातिसमाजविधान-मेव तृणाय मन्यन्ते ! न दृष्टं किं भवता, तदा तेनोपाध्यायापसदेन गतवर्षे सर्वजनसमक्षं यदस्मान् प्रति दुरुक्तम् ? यदि भवन्तोऽत्र विषयेऽवधानं नार्पयेयु-स्तदा श्रीमतामेतन्नेतृत्वं सङ्कटग्रस्तमेव मन्यताम् !'

द्विवेदः—'निश्चिन्तैर्भूयताम् ! अस्पृश्यप्रायाणाममीषामकुलीनाना-मुपाध्यायवराकाणां प्रलापजल्पनैः किं स्यादस्माकमहितम् ? ते तु शृगालाः सिंहैरिवास्माभिरेकदा नूनं हन्तव्या एव। अस्तु तावत्, निपीयतामेष संसिद्धो हि भङ्गारसः। अहमपि चाहिफेनरसमापीय चषकैः शौचस्नानादिकं करोमि। अद्य तावन्नगरे ज्ञातिभोजनप्रसङ्गः। तदस्माभिस्त्वरितमेव तत्र गन्तव्यम् !'

दीक्षितः—'गन्तव्यं तु वर्तत एव, परं यावद्वयं न गच्छामस्तावत्तत्र न किमपि कृतं स्यात् ! अस्मासु तत्र गतेष्वेव हि भोजनादिकं प्रारप्स्यते। वयं तु पुनश्चन्द्रवंशीयाः ! 'सोमोऽस्माकं ब्राह्मणानां राजा !' इति वेदवचनं विशेषतोऽत्र प्रसङ्गे स्मर्तव्यम् ! यावद्भिन्नग्रामेभ्योऽन्येऽपि च ज्ञातिसदस्या नगरं प्रति गच्छन्ति तावद्वयमपि च तत्र प्राप्स्यामः।'

इत्येवंविधान् वार्तालापान् कृत्वाहिफेनरसं, भङ्गारसं च पीत्वा ते सर्वे शौचस्नानादिकं कृत्वा सायं सन्ध्यामुपास्य मार्गमनुलग्नास्तावदेव पूर्वस्यां दिशि चन्द्रोदयः समभूत्। चन्द्रज्योत्स्नाधवलिते पथि ते मिथो नानाविधान् वार्ताप्रसङ्गान् ब्रुवन्तः शनैः शनैर्गन्तुमुपक्रान्ताः। यावत्ते स्तोकमध्वानमतिलङ्घन्ते तावन्मध्येमार्गं क्वचित्तमालपत्रचूर्णं भक्षन्ति, क्वचिदुप-विश्य मार्गजनितखेदापनोदनाय विरमन्ते, क्वचित् पूगीफलचर्वणं कुर्वते, क्वचिज्जलं पिबन्ति, क्वचित् किमप्यन्यदाचरन्ति। यदा कदा मार्गे चलन्तोऽपि च काव्यालापान् समालपन्ति। क्वचिज्ज्ञातिसम्बधिनां नव्यानां पुरातनानां

च विषयाणामालोचनं प्रत्यालोचनं च कुर्वन्तो मोदमाना गच्छन्ति । इत्थं चेष्टमानास्ते क्रमशो मार्गमतिलङ्घन्ते ।

अथ नगरोपकण्ठं सरोवरस्य पश्चिमतटे सुविस्तृतायां भूमावेकं ब्राह्मणसमाजस्य सुविशालं भव्यं च ज्ञातिभवनं सुप्रतिष्ठितमास्ते । तत्राद्य कस्यचिद्गृहस्थस्य पुत्रविवाहोत्सवनिमित्तं ज्ञातिभोजनस्य माङ्गलिकं प्रकरणं वर्वर्ति । ब्राह्मणसमाजस्य तस्य सर्वेऽपि पुरुषाः स्त्रियो बाला बालिकाश्चाबाल-वृद्धं समवेता विद्यन्ते । अधुना स एष रात्र्याः प्रथमप्रहरस्य समयो वर्वर्ते । गृहपतिना सर्वेऽपि च भोजनोपयुक्ताः पदार्थाः स्वगृहादानीय भोजनशालाया अस्याः किलैकस्मिन् कोष्ठे संस्थापिताः सन्ति । जलभरितानि महाभाण्डानि, पत्रावल्य, इन्धनानि तथान्यान्यानि तानि तानि वस्तूनि यत्र तत्र प्रयत्नात् संरक्ष्य स्थापिता न्यवध्रियन्ते । केचन ज्ञातिवृद्धाः पुरुषा बलसक्षमा युवानश्च कृतस्नानाः कौशेयवस्त्राणि परिदधाना अग्निमुखं कृत्वा भोजनपाकारम्भाय सन्नद्धा आष्ट्राणां समीपमितस्तो निषण्णाः सन्ति । केचन किशोरा भोजनशालाया अस्याः सुविशाले प्राङ्गणे क्रीडाकूर्दनानि कुर्वन्तो धावन्ति, खेलन्ति, हसन्ति च । महिला बालाः किशोर्यश्च वस्त्रालङ्कारपुष्पप्रसाधनैः शृङ्गारशोभां दधानाः सतालस्वरं मङ्गलगीतीर्गायन्त्यो वृन्दनृत्यं च कुर्वाणाः कमप्यनिर्वचनीयमानन्दमाह्लादं सुखं चानुभवन्त्यो हसन्त्य उत्सवमेतं सोत्साहमुद्यापायन्ति । कतिचन युवानः सरोवरे स्नानमाचरन्तो जलक्रीडां कुर्वाणा हासपरिहासवार्ताविनोदैः काव्यकथालापैश्च मोमुद्यमानाः शोभन्ते । वरराजो वधूश्च वस्त्राभरणैः पुष्पमालादिभिश्च शृङ्गारसज्जां कृत्वा तत्रैव शालाया एकभागे स्थितौ प्रसन्नेन चेतसा स्वविवाहकौतुकोत्सवं गौरवं चानुभवन्तौ सस्मितं परस्पर-मभिवीक्षमाणौ स्थितौ स्तः । द्वारदेशे दुन्दुभयो ध्वनन्ति, नानावाद्यैः सह स्वरलहरी सर्वतः प्रसरन्ती कर्णपुटेषु सर्वेषाममृतमिवापूरयति । ज्ञाति भवनस्यास्य स्तम्भेषु, तोरणेषु, द्वारेषु, भित्तिषु, गवाक्षेषु च यत्र तत्र सर्वत्र जाज्वल्यमाना दीपमाला भास्वरं प्रकाशं विकिरन्त्यो विराजन्ते । सर्वत्राह्ला-दमयस्यानन्दस्य च वातावरणं दरीदृश्यते ।

सत्यप्यानन्दमङ्गलमयेऽस्मिन् हर्षितप्रसन्ने समये वरकन्यापक्षयोः कुलवृद्धानां तत्सम्बन्धिनां च मनसि काप्यन्तर्गूढा चिन्तेव परिलक्ष्यते । अमीषां सर्वेषां हितचिन्तकानां मुखाकृतिषु किमपि वैवर्ण्यं पारतन्त्र्यदुःखमिव घनीभूतं विलोक्यते । सर्वेऽपि च ते कस्यचित् प्रतीक्षायां कृतेक्षणा इव विषण्णा इव दृश्यन्ते । तदानीमेव दीनानाथो नाम वरपक्षस्य कुलवृद्धो पञ्चपरमेश्वरान् प्रोच्चैः सम्बोध्य निवेदयति—

'अयि भोः ! सम्माननीयाः पञ्चपरमेश्वराः !! इदानीं प्रहरप्राया रात्रिर्व्यतीयाय, परन्तु नाधुनावधि द्विवेददीक्षितादयो ज्ञातिसम्मानिता वरिष्ठाः पञ्चमहाशयाः समाजग्मुः ! तदधुना कियत्पर्यन्तमस्माभिः सर्वैस्तत्प्रतीक्षण-परैर्भाव्यम् ? यावत्ते नायान्ति तावत् भोजनसिद्धिः कथं स्यात् ?? इदानीमत्र सर्वे जनास्तानेव प्रतीक्षमाणाः कालं क्षपयन्तः सन्तिष्ठन्ते । बुभुक्षया पीड्यमाना बालास्तरुणा महिलाश्च दुःखिताः सन्ति । आज्ञाप्यताम्, इदानीं किमस्माभिः कर्तव्यम् ???'

श्रुत्वैतत् पञ्चसमूहमध्यादेको वृद्धजनोऽब्रूत—'यद्यपि भवतोक्तं सर्वं सत्यं पथ्यं च परन्तु यावद्वरिष्ठाः पञ्चसदस्या नायान्ति तावद्वयं किं करवाम ? तेष्वागतेष्वेव भोजनपचनसमारम्भो भवितुमर्हति, नान्यथा ! तत् कं चित् कालं प्रतीक्ष्यताम् । ते आयान्त एव भवेयुः । क्षणादेवागमिष्यन्ति ।'

कश्चिदन्यो वृद्धोऽवदत्—'अयं तु परम्पराप्राप्तो ज्ञातिविधानान्त-र्भुक्तोऽस्ति नियमो यद्धि समागतेष्वेव द्विवेददीक्षितदिषु ज्ञातिमूर्द्धन्येषु वरिष्ठ-पञ्चेषु ज्ञातिभोजनारम्भो भवेदिति । समागतेषु तेषे सर्वं सौकर्येण सम्पत्स्यते । तद्भवद्भिर्नात्र विषयेऽधीरैश्चिन्ताकुलैश्च भाव्यम् !'

अथान्यः कश्चिद् बभाषे—'मान्याः ! किमर्थमेतावानाक्षेपोऽयं कोलाहलश्च क्रियते ? यथा सर्वेषां ज्ञातिजनानां गृहेषूत्सवाः समुद्याप्यन्ते तथैवात्रापि चोत्सवोऽयं भवेत् ? यावद्द्विवेददीक्षितादयो नागच्छन्ति तावत् त्वरया कृतयापि किं फलं स्यात् ?

कश्चिदपरो बभाण—'नायं क्रमः शोभनः ! द्विवेददीक्षितादयः किमिति झटित्येव यथासमयं नायान्ति ? किमर्थं च ते दीर्घसूत्रतामातन्वते ?? तेषां विलम्बेनागमनाच्छतशो ज्ञातिसमाजसदस्याः क्षुत्क्षामकण्ठा भृशं पीड्यन्ते ! यदि ते समयात् पूर्वमेवात्रायायुश्चेत्तदा का हानिस्तेषाम् ??"

अथ कश्चित् प्रौढवया गृहस्थोऽब्रवीत्—'अयि, भोः ! एते किल द्विवेदा दीक्षिताश्च वरिष्ठाः पञ्चा अस्मज्ज्ञातिजनानां नेतारो नायकाश्च मूर्द्धाभिषिक्ता राजान इव प्रजानां पितरो वर्तन्ते । ते सर्वेऽस्माभिः सर्वैः सम्मान्या एव । यतस्तेषां पूर्वपुरुषैर्महत् पुण्यमुपार्जितम्, महांस्त्यागो विहितस्तपस्तप्तम्, ज्ञातिहिताय दानानि समुत्सृष्टानि, सर्वस्वमपि ते ज्ञातिभ्यः समर्पितवन्तस्तत एव हि तेषामियं वरिष्ठता परम्पराप्राप्ताद्यापि चाक्षुण्णा प्रचलति । न पुनरियं तद्वरेण्यतास्माभिर्नागरिकैरेव परिपाल्यते वरं च ज्ञातिसमाजस्य समस्तापि

समष्टिस्तेषामिमं सम्मानं सदा सर्वदा संरक्षति। ततोऽत्र विषये नास्माभिः किमपि वक्तव्यमापत्तिर्वा विधेया। नो चेद्वयमशेषस्य ज्ञातिसमुदायस्य कोपभाजो भविष्यामः। विशेषतोऽस्मिन् मङ्गलमये विवाहप्रसङ्गे माभूत् कोऽपि कलहकषायोद्घोषः! स्वगृह एव यदा शुभकर्मारम्भो भवति तदा सर्वैरपि सहनशीलैर्भवितव्यं भवति। क्षणं प्रतीक्ष्यताम्! परिणामे सर्वं शोभनमेव स्यात्।'

ततः कश्चिदन्यो जनः प्राह—'त इमे द्विवेददीक्षितादयो वरिष्ठा ज्ञातिनेतारो न केवलमत्रैव विलम्बन्ते प्रत्युत प्रायः सर्वत्रैव कार्यकाले विलम्ब्यायान्ति, आयाता अपि निर्निमित्तं कालक्षेपं कुर्वन्ति, पुनर्यदा कदा गर्ववचनान्यपि च ब्रुवन्ति! नैतत् सर्वं तत्प्रतिष्ठानुरूपम्। न चैष भोः! कुलीनानां क्रमः!! नैषा महतां मर्यादा!!! दृश्यताम्, अद्यैव त एतेऽधुनापर्यन्तं नागताः! सर्वेऽपि च ज्ञातिजनास्तानेव प्रतीक्षमाणाः पीड्यन्ते! अप्येतदुचितम्?'

उपाध्यायवृद्धः—'यूयं सर्वे भीरवः कातरा मूर्खाश्च नागरिकाः स्थ! नो चेत् कथमेवंविधमनुचितमाचरणं तेषां नायकत्वं, पूज्यत्वं, वरिष्ठत्वं च स्वीकुरुथ? अथ द्विवेददीक्षितादीनां पूर्वजैर्ज्ञातीनां सेवावश्यं कृता स्यात् परं तत्फलरूपा सम्मानना तु तेषां वंशजैः सप्तपुरुषपर्यन्तमिदानीं यावदुपभुक्ता अधुनापि वयं तान् ज्ञातिनायकान् पूज्यतमानेव मत्वा तेषामादरं सत्कारं च कुर्मः, परन्त्वेतेऽस्य सत्कारस्य कियत् पात्रत्वमावहन्तीति न मे मनो यथार्थतो वेत्तुं प्रभवति!'

अन्यः कश्चिदुवाच—अये! त इमे ज्ञातिशिरोमणयः स्वपूर्वजानां पुण्योपचयैः समाजे सर्वसदस्यैः पूजिताश्चापि गर्वायन्ते, दुर्भाषणं कुर्वन्ति, यद्वा तद्वाचरन्ति, पक्षपातं कुर्वते, स्वेच्छाचारं च वितन्वते! नन्वीदृशैर्ज्ञातिनायकैः किं हितं साधितं स्यादस्माकं सर्वेषाम्? एवंविधैरकर्मण्यैरलसैरशिक्षितैरसभ्यैरशिष्टैः समाजस्य का नाम गौरववृद्धिः स्यात्? किमेतैर्ग्रामीणैर्ज्ञातिसमष्टिः स्वस्तिमती भवेत्? कां सिद्धिमासादयन्ति नन्वीदृग्भिर्नेतृपदवाच्यैर्ज्ञातयो नाम?? अद्यैव ननु मध्यरात्रप्रायः समयोऽत्यवर्तत परन्तु ते नायाताः! कीदृशमसह्यमेतन्नायककृतं दुःखम्? का वासौ रूढीवादविडम्बना?'

एको युवा—'अयि, भोः! दीक्षितद्विवेदादयो हीमे ज्ञातिप्रधाना अखर्वगर्वोद्धताः सर्वानस्मान् क्रीतदासानिव मन्यमाना यथेच्छमन्यायमाचरन्ति! बालिशत्वं त्वेतेषां नन्विदं विजृम्भते यत्ते प्रायेण सदा लोकान् पीडयन्त्यकारणम्! यदि ते यथासमयं ज्ञातिसम्मेलनोत्सवेषु नागच्छन्ति

तदा कार्यनिर्वाहः कथं स्यात् ? कथं चेदमाबालवृद्धं ज्ञातिजनानां सर्वेषां भोजनावरोधदुःखं निवर्तेत नाम ?? तस्य कोऽप्युपायश्चिन्त्यताम् ! नो चेन्निखिलामपि रात्रिं यावत्तान् प्रतीक्षमाणास्तिष्ठन्तु भवन्तः । स्वनायकानामागमनं प्रतीक्षणमेव हि परिपालयन्तु !! विचित्रमेतद्दासत्वम् !!!'

उपाध्यायः—'महाशयाः ! मध्यरात्रोऽपि च व्यतीयाय ! परं द्विवेददीक्षितादयो नायाताः, नायाताः, नैवायाताः !! तदधुना किं कर्तव्यमस्माभिः ? यदुचितं तदेवोच्यताम् !!!'

एको वृद्धः—'भोजनपचनारम्भस्तु तावत् क्रियताम् ! समायातेषु द्विवेददीक्षितादिषु तेभ्यः क्षमां याचिष्यामहे ! अन्यो नास्त्येवाभ्युपायः !! सर्वेऽपि च ज्ञातिजना बुभुक्षया पीड्यमानाः सन्ति, बालकबालिका निद्रावशमुपगताः, स्त्रियश्च सर्वे शिशवश्च कामपि दयनीयां कष्टां दशामनुभवन्त्यधुना ! तत्कार्यारम्भस्तु क्रियतामेव !!'

अन्यः कश्चन—'न ज्ञायते, ननु किं कारणं, यद्दीक्षितादयोऽधुनापर्यन्तं नायाताः ? कदाचिन्मध्येमार्गं कामप्यापत्तिं गताः स्युरथवा व्याघ्रभल्लूकादिहिंस्रैः पशुभिः प्रतिरुद्धा भवेयुरुताहोस्विच्चोरलुण्टाकादिभिः परिमुषिताः स्युः, किं वाऽकस्माद्रोगाक्रान्ताः कृच्छ्रं प्राप्ताः स्युर्नोचेत् कथमेतावद्दीर्घं समयं विलम्बेरन् ? मन्ये, कस्माचिद्धेतोरिमे नूनं विपत्तिं गताः ! भगवानेव जानाति तत्त्वतो भूतार्थम् ! तत् प्रारभ्यताम् तावद्भोजनसिद्धये प्राथमिकमावश्यकं कार्यजातम् । परम् 'उपाध्यायस्य गृहादेवायं यानभङ्गोऽजायत, वरिष्ठपञ्चानाम् !' इति महान् हि बतापवादः ! अस्मादृश दुर्निमित्ताद्यदि रक्षन्ति ज्ञातयोऽस्मान् तदा वयं तु भोजनकार्यारम्भे कृते न कमपि दोषं वापवाद वा सम्भावयामः !'

केचन युवानः प्रोचुः—'वयं तु सर्वेऽस्मिन् नव्ये सुविकसिते विज्ञानयुगे द्विवेददीक्षितसदृशानां मूर्खाणां ग्रामीणानामशिक्षितानामसभ्यानां तदेतन्नायकत्वं नन्वन्धपरम्परानुसरणमज्ञानविजृम्भितमेव मन्यामहे । अयं हि प्रचण्डो बत रूढीवादः !! गड्डरिकाप्रवाहमात्रमेतत्सर्वम् ! ज्ञातिसमष्टौ सर्वेऽपि सदस्याः समानं सम्मानाधिकारमर्हन्ति । न कस्याप्येकस्य वर्गविशेषस्यैकाधिकारो न्याययुक्तो भवितुमर्हति । एकस्य द्वयोर्वा सदस्ययोरपराधात् सर्वेऽपि च ज्ञातिसभ्या अकारणं क्लेशक्लिष्टाः सन्तो भूयो भूयः पीड्यन्ते, नैतत्कथमप्युचितम् ! तदाज्ञापयन्तु, वयं सर्वे भोजनं पचाम ! यदि तावत्पर्यन्तमिमे ज्ञातिपूज्यास्तथाकथिता वरिष्ठाः पञ्चा आयान्ति चेत्तदा शोभनमेव, नो चेत् वयं सर्वे पक्त्वा भुक्त्वा च स्वगृहं व्रजाम । अन्यत् किम् ?'

इत्थं विवदमानानां तेषां सर्वेषां बहुमतेन तैः सर्वैर्भोजनं परिपक्तम्। भोजने संसिद्धेऽपि च ते वरिष्ठाः पञ्चा नाजग्मुस्तदा सर्वे ज्ञातयो भोजनपदार्थान् पत्रावलीषु परिवेश्य सुखेनातृप्ति भुक्त्वा स्वगृहान् प्रति ययुः। सर्वेषु गतेषु चापि यदा ते द्विवेददीक्षितादयो नैवायातास्तदोपध्यायोऽपि कंचित् कालं प्रतीक्ष्य ज्ञातिभवनात् स्वगृहं प्रतस्थे। अधुना रात्र्यास्तृतीयप्रहर-प्रायः समयो व्यतीयमानोऽभूत्।

रात्र्याश्चतुर्थप्रहरस्य समयः। रामनाथदीक्षितो, भानुदत्तद्विवेदस्तथा तयोः सहचराश्चेति केचन ब्राह्मणा नगरं प्रविश्य श्रान्ताः क्लान्ताः सरोवरस्य तीरभूमिं समाजग्मुः। तत्रागत्य क्षणं विश्रम्य मुखमार्जनं गण्डूषादिकं कृत्वा, हस्तपाद प्रक्षाल्य वस्त्रवेषादिकं सुव्यवस्थितं विधाय स्वजातीयानां ज्ञातिभवनस्य द्वारदेशमनु प्राप्ताः। तत्रागत्य यावत् पश्यन्ति तावत्तस्या भोजनशालाया वृहद्विशालं च गोपुराकारं द्वारमावृतकपाटं दृष्ट्वा तेऽतीवाश्चर्य-मन्वभवन्। क्षणमेकं ते सर्वेऽपि चकितचकिता विस्मिता आश्चर्यसन्देहाशङ्का-दिनानाभावसङ्घर्षैरालोडिताऽशेषचित्तवृत्तयो विभ्रान्ता उद्भ्रान्ता इव किं कर्त्तव्यविमूढाः कान्दिशीका इवानिच्छन्तोऽपि प्रसह्य कयाप्यज्ञातशक्त्या प्रेरिता इव तत्रैव द्वारपार्श्वयोर्निषेदुः। कंचित् कालं तु ते तत्रा जडाः स्तब्धा निष्पन्दा इव स्थित्वा परस्परं मुखावलोकनं कुर्वाणास्तूष्णीं तस्थुस्ततो भानुदत्तो दीक्षितो रामनाथं द्विवेदं मन्द्रदम्भीरेण नैराश्यपूर्णेन स्वरेणावोचत्—

'किमिति भोः ! सैषा भोजनशालास्माकमद्यावृतकपाटास्ते ? कदाचिद्वयं भोजनदिवसतिथिं विस्मृताः ! किमेतद्भोः ! न कोऽप्यत्र सजातीयः सधर्मा जनो दृष्टिपथमायाति ?'

रामनाथः—'अयि भोः ! किं वयं बालकाः स्मो यद्भोजनतिथिमेव विस्मृतवन्तः !! (स्वशिरसि बद्धादुष्णीषात् पञ्चाङ्गं नीत्वा तिथिवारादिकं तथाऽऽमन्त्रणपत्रं च दर्शयति) तिथिस्तु तावत् सैवास्तेऽद्य पूर्णिमा। न वयं तिथिं विस्मृताः स्मः।'

तावदेकः शिष्यो ब्रवीति—'किं न हि पश्यन्ति भवन्तो यदत्र द्वारसमीपे भोजनोच्छिष्टाः पत्रावल्यस्तथा च द्रोणानां राशिरुच्चाररूपो निपतितोऽस्ति ! तस्मादेवैते श्वानो गर्दभा अजाश्चात्र समवेताः सन्तो भुक्तशेषमन्नादिकं भोक्तुकामा निभाल्यन्ते !'

भानुदत्तः—'सत्यमेतत् ! मन्ये ज्ञातिजनास्तु सर्वे भोजनं कृत्वा

स्वगृहान् प्रतिजग्मुः। निर्वर्तितं तर्भोजनमस्मदागमनात्पूर्वमेवेति प्रतिभाति नः।'

रामनाथः—'एतत्त्वतीव विचित्रम्! अदृष्टपूर्वमश्रुतपूर्वं चैतत्!! कथमस्मास्वनागतेष्वेतत्तद्भोजनं न्यवर्तन्त मे ज्ञातयः? अधुना कं पृच्छाम? अत्र तु नैकोऽपि सजातीयो विलोक्यते! तदधुना किं विधीयताम्?'

भानुदत्तः—'वस्तुतोऽस्माकं गृहादत्रागच्छतां मार्गे भूयान् हि समयोऽतिक्रान्तः। समस्ता रात्रिरेव व्यतीयाय। चन्द्रचन्द्रिकायां मार्गमतिलङ्घमाना वयं कालातिक्रमणमेव नावादध्महि। तेन हि महानेव विलम्बो बभूव। हा, हन्त! महदनिष्टमेतद्बभूव!!'

रामनाथः—'अहो! नागरिकाणामस्मज्ज्ञातिजनानामेतावद् दुस्साहसम्! अस्मद्विनैव ते भोजनं कृत्वा गृहान् गतवन्तः! अहो, भोजनभट्टत्वममीषाम्!! अयं तु प्रत्यक्षमेवास्माकं ज्ञातिपूज्यानां वरिष्ठपञ्चानामपमानः!!! ननु मूर्खास्त एते नागरिकाः स्वेच्छाचारिणः!!! एते प्रायः सदैव ज्ञातिविधाननियमानामुल्लङ्घनं कुर्वते!!! नायं साधारणो विषयः!!! इयमस्माकं प्रत्यक्षमेवोपेक्षाऽवधीरणा, तिरस्कारश्च!!! तदुच्यतामिदानीं किं कर्तव्यमस्माभिः?'

भानुदत्तः—'महाशय! अलमत्रातिमात्रचिन्तितेन! सहसास्माभिर्ज्ञातिभ्यो न कुपितव्यम्! सम्भाव्यते, कदाचित् किमपि तादृशमप्यनिष्टं, घटनान्तरं वा जातं भवेत् यद्वशात् ज्ञातिजनाः स्थित्यनुरोधादनिवार्यतानुरोधाद्वा झटिति भोजनदिकं परिसमाप्य गृहान् गताः स्युः!! यद्वा तद्वा भवतु तद्वयमादौ नगरं गच्छाम। तत्र गत्वा यथार्थां स्थितिं जानीयाम।'

रामनाथः—'साधूक्तं भवता। विवेकवद्वचनमेतद्भवताम्। तदेवानुसराम। तत्सर्वादावस्माकं नगरगमनमेव सर्वथोचितम्। सम्भवति, बहुजनसमुदायेऽस्मिन् ज्ञातीनां समाजे कश्चिद्रुग्णो वाकस्मात् पीडितो वा जातः स्यादथवान्यत् किमप्यत्याहितमकस्मादापतितं स्यात्। दैवगत्या वा राजकारणाद्वा न्यस्माद्वा कस्मादपि हेतोः कोऽपि विघ्नबाधाविरोधो वा संजातः स्यात्। तदागम्यताम्, वयं नगरं गच्छाम। अस्माकं सहचरा इमे शिष्यबालादयो युवानश्च सर्वेऽत्रैव सरोवरतटे क्वचिदुपविश्यस्मान् प्रतीक्षन्ताम्। आवां द्वावेव प्रमुखौ वृद्धौ द्विवेददीक्षितौ नगरं गच्छाव।'

अथैवं निश्चित्य तौ द्वावपि द्विवेद दीक्षितौ नगरं जग्मतुः। मार्गे सर्वत्र घनान्धकारो निःस्तब्धता चासीत्। तौ द्वावपि ग्रामीणवेशौ लगुडहस्तौ ब्राह्मणौ

मार्गे चलन्तौ दृष्ट्वा श्वानो भषन्ति स्म। नगररक्षणायाटन्तो राजकीया रक्षाविभागीयाः प्रहरिणस्तौ 'को न्वागच्छति भोः ? किमर्थं रात्रौ नगरवीथीषु भ्रमथः ??' इत्यादीन् प्रश्नान् मुहुर्मुहुः पृच्छन्ति स्म। तान् प्रति स्वागमनस्य प्रयोजनं निवेदयन्तौ, समुचितमुत्तरं च प्रयच्छन्तौ, मार्गेऽज्ञातायां भूमौ पदे पदे प्रस्खलन्तौ, यष्टिसाहाय्येन कथमपि कृच्छ्रेण शनैः शनैरुपाध्यायस्य गृहं प्रापतुः। तत्र गत्वा तद्गृहाङ्गणमासाद्य द्वारदेशे तिष्ठन्तौ तौ—'भोः ! भोः !! उपाध्यायमहाशय !!!' इति प्रोच्चैः स्वरेण भूयो भूयः समाह्वयताम्। परन्तु न कोऽपि तत्सम्बोधनं शुश्राव। बहुवारं तौ दीर्घतरैः सम्बोधनैस्तमुपाध्याय-मामन्त्रयतां, मुहुर्मुहुः खटखटाध्वनिमपि चक्रतुः, कपाटावाजघ्नतुः परं गम्भीर-निद्रावशं गतेषु जनेषु नैकोऽपि प्रबुद्धो जागरितश्च। परं नैराश्यं गतौ तौ यदा महान्तं निरुत्साहं, यदान्ते गगनभेदिसम्बोधनं कृत्वा जगर्जतुर्वारम्वारं चाह्वयतां तदोपाध्यायस्य प्रतिवेशिनो जनाः केचिज्जागर्तिमासाद्य तेऽपि चोपाध्यायं पुनः पुनः समबोधयंस्तदा महता काठिन्येनोपाध्यायस्य गृहान्तः प्रकोष्ठात् कश्चिज्जागरितो जनः प्रोवाच—'कोऽस्ति भोः !' तावाहतुः—'आवां द्विवेददीक्षितौ स्वः !!' श्रुत्वैतत्तयोर्वचनं, तत्कण्ठध्वनिं परिचीय चोपाध्यायमहाशयः—'आगच्छामि, भोः ! इति ब्रुवन् झटिति द्वारदेशं समागत्य द्वारकपाटावुद्घाट्योचे—'आगम्यताम्, महाभागाः ! स्वागतम् !! निद्रावशं गतेन मया भवद्वचनं नाकर्णितं, तत् क्षम्यताम् !' तावुचुतुः—'अपि ज्ञातिभोजनं परिसमाप्तम् ? अपि ज्ञाति-जनाः सर्वे भुक्त्वा स्वगृहान् प्रतिययुः ??'

उपाध्यायः—'भवदागमनेऽतीव विलम्बोऽजायत। अनागतौ भवन्तौ विचार्य सर्वेऽपिज्ञातयो भवत्कृते महतीं चिन्तां चक्रुः। पथिसमाव्रजतां भवतां माभूत्किमप्यनिष्टमिति सर्वेऽपि चिन्तोद्विग्नमानसा व्याकुलाश्च बभूवुः। परमेश्वरात् सर्वेऽपि भवत्कुशलं कामयमाना मध्यरात्रं यावद्भवन्तावेव प्रतीक्षण-परास्तस्थुः। यदा मध्यरात्रोत्तरमपि भवन्तौ ज्ञातिभवनं न प्रापतुस्तदा सर्वैर्भोजनं परिपच्यान्ते येन केन प्रकारेण भुक्तम्। एवं निर्वर्त्य कार्यजातं स्वगृहान् प्रतिगतं तैः। अहमपि गतेषु सर्वेषु कियन्तं कालं भवन्तौ प्रतीक्ष-माणोऽस्थाम्। पर्यन्ते नैराश्यं गतोऽहमधुनैवात्रायातोऽस्मि। श्रमखिन्नोऽहं गभीरनिद्रावशं गतोऽशये अतोऽग्रे भवन्तावेव प्रमाणम्।'

दीक्षितः—'आम्, ज्ञातमेतत्सर्वं तु परमुच्यताम्, अत्र प्रकरणे सम्मान-सत्कार-तिलकादिकं केन सम्पादितम् ? अथाद्यः सत्कारतिलकस्तावत् केन स्वीकृतः ? ज्ञातिदक्षिणाद्रव्यं च कः स्वीचकार ? केन वा जलपात्राणि व्यतीर्यन्त ??'

उपाध्यायः—'श्रीमत्स्वनागतेषु कथं सम्मान-सत्कारः ?' इति सर्वैर्ज्ञातिवृद्धैर्विचिन्त्य स्थगितोऽसौ सम्मानतिलकसत्कारः ! अस्तु, तावद्भवन्तौ गहाभ्यन्तरमागच्छताम् ! अन्तः प्रविश्य स्नानसन्ध्यादिकं कुरुताम् तावन्मे गृहिणी भोजनं पचति। भोजनं कृत्वा क्षणं वामकुक्षि विश्रम्य ततो यथेच्छं विदधाताम् !'

आकर्ण्यैवोपाध्यायवचनं तत् स दीक्षितः क्रोधावेशवशाज्ज्वलन्निव भूताविष्ट इव ग्रहग्रस्त इव सर्वामपि तत्रत्य स्थितिमेकपदे विस्मृत्य प्रकम्पमानसर्वावयवो रौद्रभीषणं सिंहाक्रान्तचेष्टाः कुर्वाणोऽब्रवीत्—

'आः, पापात्मन् ! त्वद्गृहेऽस्माकमेतावदपमानं कृत्वा पुनर्भोजनाय कथयसि ? रे दुष्ट ! पाप !! अधम !!! चाण्डाल !!! नेयं साधारणी वार्ता ! अयमस्माकं महानेवासह्योऽपमानः ! तवैव पापात्मनो दुर्विचेष्टितमेतत्सर्वम् !! वर्षशतादप्यधिकसमयाज्जायमानमस्माकमेतज्ज्ञातिवरिष्ठत्वं निरोद्धुं किं नु तवेदं दुस्साहसम् ? ज्ञातिषु का गणना युष्माकमकुलीनानां बतोपाध्यायहतकानाम् ! विरमस्व क्षणमेकं यावदहं तेऽस्यापकारस्य तात्कालिकीं चिकित्सां कुर्वे !! दुराचार ! भुङ्क्ष्वेदानीमेवास्य पापाचरणस्य प्रतिफलम् !!! हुँ, त्वं मेऽपमानमतिदुर्विषह्यं कृतवानसि !!!'

इति वदन्नेवासौ दीक्षितः स्वकटिबद्धात् परिकरवस्त्राधो निगूहितां तीव्रधारामेकां छुरिकां निष्कास्य तां चापगतकोशां कृत्वास्फूर्ज्जद्बलवेगेन स्वगलं चिच्छेद ! क्षणादेवासौ सद्यः प्राणान् मुमोच मुहूर्तमात्रं स उपाध्यायस्य गृहप्राङ्गणे मूलतश्छिन्नो महावृक्ष इव भूमौ तन्मृतदेहो निपपात।

'अरे, हा हन्त !! हन्त !! शिव-शिव !!! हा, हतोऽस्मि मन्दभाग्यः !!! किमिदं मे शिरसि ब्रह्महत्यामहापापमापतितम् !!! किं करोमि !!! क्व गच्छामि !!! किमिदं मे वज्रपातसदृक्षमत्याहितं बभूव !!! अधुना किं मेऽनेन लाञ्छितेन हतजीवनेन प्रयोजनम् ? अरे रे ! किमिति ममैते कृपणाः प्राणा नो निर्गच्छन्ति देहादस्मादधमात् !' इत्येवंविधान् प्रलापान् कुर्वाणो भूयो भूय इतस्ततः किंकर्तव्यविमूढो ग्लानिं, लज्जां, घृणामपमानं च तीव्रतममनुभवन्नसावुपाध्यायस्तत्रैव गृहाङ्गणस्यैकपार्श्वे पतितमेकं प्रस्तरखण्डं गृहीत्वा स्वशिरसि तेन तथा वेगात् प्रहृतो यथा सोऽपि तत्कालमेव प्राणैर्वियुक्तो भूमौ पपात।

दृष्ट्वा चैतमवितर्कितसम्भवं विचित्रमतिभीषणं व्यतिकरं सहसाकस्माज्जातमतीवारुन्तुदं घटनान्तरं सर्वेऽपि चोपाध्यायस्य गृहसदस्याः प्रतिवेशिनो जनाश्च युगपत्तत्रागत्य महान्तं कोलाहलं तथाक्रोशं च कर्तुमारेभिरे। 'हाहन्त ! महदेवानिष्टं समभूत् !' इत्युच्चैर्वन्तः करुणकरुणैर्विलापकलापै-

आरुदन् । 'अहह, द्वावप्येतौ पुरुषौ प्राणान्तं चक्रतुः । अधुना किं क्रियताम् ?' इति ब्रुवाणा यावत् स्वकर्तव्यं निश्चिन्वन्ति तावदेवास्या दुर्घटनायाः प्रसारः सर्वतोदिक् क्षणादेव शीघ्रतरं समभूत् । यावत्ते सर्वे द्वयोरप्यनयोर्दाहसंस्कार-विधिमुपपादयितुं प्रयतन्ते तावदेव राजकीया आरक्षिविभागीयाः पुरुषास्तत्राज-ग्मुस्तथागत्यैव तत्कालोचितमभियोगं समारोप्य न्यायपद्धतेर्नियमानुसारं कार्यजातं कर्तुमारभन्त । तावता कालेन सर्वे ज्ञातिसमाजसदस्याः सम्बन्धिनः परिचिता व्यवहारकुशला जनास्तत्र समाययुः । महानेव हाहाकारः प्रावर्तत । रोरुद्यमाणानां जनानां गगनभेदिभिराक्रोशैरार्तनादैः करुणविलापध्वनिभिश्च दशापि दिशः एवं रोदसी च समवेदनया सहदुःखभाजः शोकमग्नाश्च बभूवुः ।

अथैवं महदनिष्टं करुणापूर्णं प्रसङ्गं यदृच्छयोपस्थितं विभाव्य केचन समाजस्य शुभचिन्तकाः कुलवृद्धाः सचेतसो बुद्धिमन्तश्च सदस्या राजभवनं गत्वा राजानमुपस्थाय तदग्रे महान्तमनुनयं विनयं च कृत्वा वारं वारं सम्प्रार्थ्य तयोर्द्वयोर्मृतयोर्ब्राह्मणयोः शवपरीक्षणं निवारयितुं निवेदयामासुः । ब्राह्मणान् तान् सर्वान् राजश्रितान् राज्यस्य शुभचिन्तकांश्च मत्वा परमकृपालुना शासकेन तच्छवपरीक्षणं निरुद्ध्य तयोरन्त्येष्टिसंस्कारकरणं लिखितरूपमाज्ञापितम् । ततोऽपयातेषु तद्गृहाद्राजकीयपुरुषेषु तयोर्द्वयोः शवौ श्मशानं नीत्वाग्निसंस्कारपूर्वकं भस्मसात्कृतौ सर्वैर्ज्ञातिजनैः ।

तत आरभ्यैव तस्य ब्राह्मणसमाजस्य ज्ञातिगतो विधानभङ्गो बभूव । तत एव हि वारभ्य पञ्चत्वं पूजासत्कारादिकं सर्वं समाप्तिं जगाम । तस्मात् समयात् तस्य नागरिकस्य ब्राह्मणसमाजस्य सङ्घटननियमाः सर्वे नामशेषतां जग्मुः । इत्थं ज्ञातिसमष्टेर्नियमोच्छेदात् मर्यादाविलोपः समजनि । फलतः सोऽयं समाजो विलुप्तमर्यादः स्वच्छन्दो विशृङ्खलितः सर्वतन्त्रस्वतन्त्रो यत्कि-ञ्चनतावादी यथेच्छं चेष्टमानो व्यक्तिवादी च समभूत् । ज्ञातिविधानभङ्गा द्रूढीमुक्तोऽप्ययं समाजो मदोन्मद उच्छृङ्खलो निर्मर्यादश्च पशुप्रायं जीवति । तदारभ्याद्यावधि सोऽयं समाजो ज्ञातीनां शेषेषु मण्डलेषु न समानाधिकारान् भुङ्क्ते । यदि केचन ज्ञातीनां सुधारेच्छया पुनर्विधानरचनां कामयन्ते तदा तत्सदस्या विषयेऽत्र ताटस्थ्यमवलम्बमानगजनिमीलनान्याश्रयन्ते । रूढीवादा-न्मुक्तोऽपि स्वतन्त्रः सुशिक्षितोऽपि दीक्षितः सुसंस्कारयुक्तोऽपि विद्याविनयादि-गुणविशिष्टोऽपि च न प्राक्तनं विधानं पुनरुद्धर्तुमिच्छति न च नवीनां नवराष्ट्रियां नवयुगीनां कामपि नियमविधानपद्धतिमनुसर्तुं प्रवर्तते, अन्ततोऽस्य समाजस्य किं भावीति पाठकाश्चिन्तयेयुः ।

—:०:—